Presented to :— Sri Satya Vrita Sastri, Prof: & Head of the Dept of Sanskrit Delhi university

with best regards of

Swami Apurvananda,

27.9.80



through Gamananda
President
Sri Ramakrishna Advaita Asrama
Kulady

25-1-81

# DIVYA-RAMAYANAM

by

SWAMI APURVANANDA

1976

**Published under the auspices of**

SANKARA VIHAR

25, Trust Square, MADRAS-12

श्री:

# विषयानुक्रमणिका

# FOREWORD

Śrīmat Swāmi Apūrvānanda is a senior monk of the Rāmakrishna Mission. For a number of years, he was attending personally on Śri Mahāpurusha Maharāj (Śrīmat Swāmi Śivānanda Maharāj), the Second President of the Order and a direct disciple of Bhagvān Śri Rāmakrishna. After the passing away of Śrī Mahāpurusha Maharaj, he went on a pilgrimage to Mount Kailās and did the **Parikramana**; and, after his return he wrote in Bengali a very moving account of his pilgrimage. Subsequently, he has written on the lives and teachings of Śri Rāmakrishna, the Holy Mother Śāradā Devi, and Swāmi Vivekānanda in felicitous Bengali. These books have been translated into Sanskrit and published.

The present publication is a Sanskrit Translation of his Bengali work on the story of Śrī Rāma. It bears the very significant title **Divya-Rāmāyaṇa.** The scholar who has translated the Bengali version into Sanskrit is the late Professor T. A. Bhandarkar, Sahityāchārya, Varanasi.

Dr. N. Veezhinathan who has been intimately associated with Śaṅkara Vihar helped in the correction of the proofs. I pray that through the

blessings of Śri Śaṅkara the best things of life may be vouchsafed to him. To the Proprietors of the Rāmāyaṇa Printing Works, my thanks are due for the neat printing of the work.

I consider it a great privilege to be able to sponsor the publication of this work under the auspices of Śaṅkara Vihar which was founded in the year 1952 in order to preserve and propagate the Advaita tradition for the benefit of humanity. It is indeed a happy augury that this publication synchronizes with the Silver Jubilee of this Institution dedicated to Śri Śaṅkara.

May the Ācharya accept this offering!

Madras
Sri Rama-navami
April 8, 1976

T. M. P. MAHADEVAN

# प्राग्वाणी

"रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥"

अभूत् त्रेतायां श्रीरामचन्द्रस्याविर्भावः। स खलु 'मर्यादापुरुषोत्तम' इत्यभिधीयते। तेन जीवनव्यापि सकलक्षेत्रेषु धर्मस्य श्रेष्ठमर्यादा दत्ता। तस्य जीवनं भारतीयप्राचीनार्यसभ्यतायाः मूर्तिमान् विग्रह इव प्रतिभाति। सङ्गीतविद्याया इव सभ्यतामात्रस्य वर्तते काचिन्मूलरागिणी। भारतीयसभ्यतायाः मूलसङ्गीतं तु सत्यमेव 'सत्यमेव जयते नानृतम्' 'सत्येन पन्था विततो देवयानः' इत्युपनिषद्वचनम्।

रामजीवनस्रोतः आर्यसभ्यताया विशिष्टनिर्मलप्रवाहरूपेण समग्रभारतीयभूमेरुपरि सञ्चरत्तामुर्वरां मधुक्षरीं चाकार्षीत्। भारतीयधर्मः, संस्कृतिः, सभ्यता, साहित्यं, संगीतं, शिक्षा, कलाः इत्यादि सर्वमपि भारतीयं श्रीरामचन्द्रजीवनं केन्द्रीकृत्यैव समुन्नतिमाजगाम। तथा भारतीयसभ्यताया नवनवानुप्रेरणापि श्रीरामचन्द्रजीवनोत्सादेव लब्धा।

वर्तमानयुगे अखण्डार्यवसुन्धरायां यः हिन्दुधर्मः, समाजः, राष्ट्रीयजीवनं वाभिधीयते तदखिलमेव श्रीरामचन्द्रजीवनस्य प्रतिबिम्बस्व-

रूपम् । तच्चरित्रस्य विभिन्नघटनाः तस्य सार्वभौमजीवनादर्शः आर्य-जीवनस्य प्रतिस्तरं नवनवालोकोद्भासितं कुर्वन्तः सहस्रावधिवर्षपर्यन्तं प्रेरणां दत्तवन्तः । तस्य जीवनं किल हिन्दुधर्मस्य आर्यसंस्कृतेश्च विराडुज्ज्वलं च रूपम् ।

समाजवर्द्धमानवस्य दायित्वबोधस्य कर्तव्यबुद्धेश्च क्षेत्रेषु श्रीराम-चन्द्रचरितस्य महान्प्रभावः परिलक्ष्यते । रामचन्द्रः पुत्र-भ्रातृ-बन्धु-स्वामि-प्रभु-पार्थिवादिविभिन्नभूमिकासु आदर्शरूपप्राधान्यमधिगतवान् । पुनश्च आदर्शवीरतया आदर्शराजनीतिज्ञरूपेण वृद्धसेवनशीलतया देवद्विज-भक्तिपरायणतया तथा धर्मप्रतिष्ठातृरूपेण च तज्जीवनं भारतीय-समाजोपरि विपुलतरप्रभावविस्तृतिमकार्षीत् । विभिन्नदृष्टिकोणेभ्योऽस्य चरितं दर्शनीयतमं - यावल्लोकयात्राक्षेत्रेषु धुरि कीर्तनीयञ्च । सत्यमेव तस्य परमालम्बनम् ; सत्यमेव तज्जीवनसङ्गीतस्य मधुररागिणी प्रधान-स्वरो वाऽभूत् । स किलासीत् दृढसत्यप्रतिज्ञः, सत्यरक्षार्थमेव च तेन दुःखकष्टमयजीवनमुररीकृतम् । स तादृशजीवनस्य प्रतिज्ञामिव कृतवान् । आदर्शसमाजसंघटनार्थमेव तन्निर्मलतमचरित्रस्यावदानम् । श्रीरामचन्द्र-जीवनस्य पवित्रतम विविधघटनाभ्यो वयमिदानीं प्रचुरतमशिक्षालाभं विधातुं पारयामः ।

अयोध्यामानिनीषु रघुकुलगुरुर्वसिष्ठदेवो भरतेन सार्धं चित्रकूटमा-जगाम । स चेह श्रीरामचन्द्रं नानाप्रकारैः सानुनयं सविनयं

चोपदिष्टवान् । अन्ते वसिष्ठदेवेनाभिहितम्-'इक्ष्वाकूणामन्वये पार्थिवज्येष्ठात्मजस्यैव राज्येऽधिकारः । विद्यमाने ज्येष्ठसन्ताने न कनिष्ठस्याभिषेको भवितुमर्हति । वयं खलु त्वज्जनयितुस्तव चाचार्यपदप्रतिष्ठिताः, अस्मच्छासनानुसरणे ध्रुवं भवत्कल्याणं विनिहितम्' इति ।

निशम्येदं रामो दृढस्वरपूर्वकं निजगाद-'सन्तानस्य लालनपालनार्थं मातापितृभ्यां यत्किमपि विधीयते तस्य निष्कृतिरतिदुस्तरा । अस्मज्जनकेन महाराजदशरथेन दत्तमादेशं नाहमन्यथा विधातुं समर्थः' । 'मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव' इत्यादिवेदोपदेशः । अत्र श्रीरामः केवलं सत्यमेव शिरसि धारयन् फलभारावनम्रविटपीव नतमस्तकः स्थितोऽभूत् । सत्यसन्धो रामचन्द्रः सत्यव्रतपालनार्थं स्वपितुः दशरथस्य मातुः कौसल्याया आचार्यवसिष्ठस्य च आदेशं अनुरोधं वा अक्षरशः पालयितुं नालमभूत् । स खल्वासीत् सत्यव्रतसेवनतत्परः । अत एव तेन सत्यवेदीमूले सर्वभावेन स्वात्मबलिदानं विहितमासीत् ।

सम्पूर्णमानवजातेः पुरतश्चरमादर्शस्थापनार्थमेव श्रीरामचन्द्रस्यैतादृशजीवनयापनपरिपाटी अविद्यत । जगत्यस्मिन्धर्माश्रयपूर्वकं पितापुत्रौ, भ्रातरौ, जायापती, शासकशिष्टौ सुहृदौ च परस्परं केनभावेन वर्तेरन् इति सार्थकदृष्टान्तेन श्रीरामचन्द्रेण स्वजीवने प्रदर्शितम् । जनकं प्रति पुत्रस्य वश्यता, भ्रातृकृते भ्रातुरात्मत्यागः, जायापत्योरन्तरे एकनिष्ठाभक्तिः, प्रजार्थशासकस्य कर्तव्यम्, बन्धुं प्रति बन्धोः

निःस्वार्थप्रेम, कनिष्ठं प्रति ज्येष्ठस्य त्यागभित्तिका क्षमाशीलता एतत्सर्वमेव कीदृङ्महत्त्वपूर्णं इति रामस्य निष्कलङ्कचरितेन जगतः पुरतः विशदीकृतम् । गृहस्य गृहस्थधर्मस्य च महिमा रामचरिते परिस्फुटो दृश्यते ।

पञ्चवटयां निवाससमये लक्ष्मणः प्रसङ्गवशतः कैकेय्याः निन्दामकार्षीत् यन्निशम्य रामः सवेदनं लक्ष्मणमुक्तवान्—'मम पुरतः अम्बायाः कैकेय्याः निन्दयाऽलम् ।' ईदृशमुदारवचनं श्रीरामचन्द्रवदनमेव भूषयितुमर्हति ।

रावणवधानन्तरं सीताया अग्निपरीक्षासमये देवताभिः सार्धं रामचन्द्राय आशीर्वचनप्रदानार्थं दशरथोऽपि उपस्थितोऽभूत् । विमानस्थजनकं रामलक्ष्मणौ प्रणाममकार्ष्टाम् । दशरथः श्रीराममालिङ्ग्य जगाद ....'तव विरहे स्वर्गोऽपि नास्माकं सुखहेतुः.....इदानीं मया देववचनैर्ज्ञातं यत्त्वं पुरुषोत्तमः रावणवधार्थमेव मनुष्यस्वरूपेण आगतोऽभूः । वनवासस्य चतुर्दशवर्षाणि व्यतीतानि अधुना सीतालक्ष्मणाभ्यां सार्धं अयोध्यां प्रत्यावृत्य राज्याभिषेकस्वीकारपूर्वकं भ्रातृगणसहितः राज्योपभोगपरो भवेः ।'

रामः कृताञ्जलिः सन्नब्रवीत्—'धर्मज्ञ ! भवान् कैकेयीं भरतं च प्रति प्रसन्नो भवतु । भवता जननीं कैकेयीं प्रत्युक्तमासीत् 'सपुत्रां भवतीं परित्यक्तवानस्मीति । आशासेऽयमभिशापस्तां न स्प्रक्ष्यतीति' । भ्रातृस्नेहस्य मातृभक्तेश्चायमतुलनीयो दृष्टान्तः ।

लक्ष्मणं प्रति श्रीरामचन्द्रस्य भ्रातृस्नेहोऽपि स्वभावतः परिपूर्णो निर्विकारश्चाभूत्। लक्ष्मणोऽपि हृदयनिहिततादृशस्नेहभावस्य अभिव्यक्तिं कृतवान्। स खलु यावज्जीवं श्रीरामचन्द्रं तच्छायेवान्वगच्छत्। "न च तेन विना निद्रां लभते पुरुषोत्तमः।" इत्यादि। रामेण विना स स्वापमपि नाधिगतवान्। तेन सार्धमभ्यवहारं विना तस्योदरपूर्तिरप्यसम्भवनीयाभूत्। रामात् पृथङ्निवासमपि विधातुमशक्नुवन् तेन सहारण्यवासमङ्गीकृतवान्। रामचन्द्रचरणारविन्दयुगुल दृढमालिङ्ग्य साश्रुनयनो लक्ष्मणस्तत्क्षणमब्रवीत्-'ऐश्वर्यं चापि लोकानां कामये न त्वया विना।' इति। पुनरेकदा दण्डकारण्यनिवासदुःखपरम्परासन्तप्तहृदयो रामचन्द्रः सगद्गदस्वरं मुहुर्मुहुः लक्ष्मणमयोध्यां प्रत्यावर्तयितुकामः आग्रहपूर्वकमभिहितवान् - 'भ्रात लक्ष्मण! इदमसह्यं वनवासदुःखं सीतया सार्धं मयैव सोढव्यम्। त्वं पुनरयोध्यां प्रत्यावृत्य आपत्सु सान्त्वनादानपूर्वकं मातृगणसेवातत्परो भव।' इति।

तदानीं प्रस्फुटितचिरनिरुद्धस्नेहभावः लक्ष्मणः अश्रुपरिपूरितनयनयुगलः सन्नभिदधौ—

"नहि तातं न शत्रुघ्नं न सुमित्रां परन्तप।
द्रष्टुमिच्छेयमद्याहं स्वर्गं चापि त्वया विना॥" इति।

लक्ष्मणहृदयाभ्यन्तरं विद्यमानोऽग्रजं प्रति स्नेहभावस्तेन गर्भधारिण्याः सुमित्रायाः सकाशादेवार्जित आसीत्। रामेण सार्धं वनवा-

साय प्रस्तुतं लक्ष्मणमाशीर्वचनपुरःसरं सुमित्रा उक्तवती - "रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् । अयोध्यामटवीं विद्धि गच्छ तात यथा सुखम् ॥" इति महाराजदशरथस्य राज्ञीषु मध्ये सुमित्राचरितं तु अतुलनीयमेव । एतादृशमहामहिमशालिनारीचरित्रविषये कविर्वाल्मीकिरुपेक्षादृष्टिमेव कृतवान् । मध्येरामायणं सुमित्रास्थानमतिसाधारणम् । सुमित्रा रामायणकाव्ये उपेक्षितेव परिलक्ष्यते ।

लक्ष्मणासक्तप्राणोऽभूच्छ्रीरामचन्द्रः । अतुलनीया खलु तत्सौहार्दस्य अगाधता! लङ्कारणाङ्गणे रामरावणयोर्युद्धं प्रवृत्तम् । रावणस्य शक्त्यस्त्रेण लक्ष्मण आहतः संज्ञाशून्यश्चाजनि । रावणप्रवर्तितशरजालैरविचलितो रामः स्वबाहुयुगुलेन शक्त्यस्त्रं प्रसह्य उत्पाटनपूर्वकं द्विखण्डितं विधाय भूमौ क्षिप्तवान् । अस्मिन्क्षणे रावणो राघवं प्रति मर्मभेदिशरवर्षणतत्परः आसीत् परं तादृशीं शरवृष्टिमुपेक्षमाणः रामः लक्ष्मणं स्वहृदयेन समालिङ्ग्य सुग्रीवपवनात्मजावभिहितवान्-'सर्वेऽपि यूयं लक्ष्मणरक्षातत्परा भवत । इदानीमस्माकं चिरकालापेक्षितपराक्रमप्रकाशनसमयः समुपस्थितः । शीघ्रमेव युष्माभिः द्रक्ष्यते यत् क्षितिरियं रामेण रावणेन वा शून्या भवति' इति । इत्थमभिधाय अजस्रशरवर्षैः रावणं निपीडयितुमारब्धवान् । मर्माहतो लङ्केश्वरः प्राणभयेन परित्यक्तरणाङ्गणः लङ्कां प्रति निवर्तितुं बाधितोऽभूत् ।

तदानीं श्रीरामचन्द्रः सुषेणमुक्तवान्-'अस्माकं प्राणेभ्योऽपि प्रियतरोऽनुजो लक्ष्मणः रक्ताक्तकलेवरः भूलुण्ठितः विद्यते। युद्धेन किमधुना प्रयोजनम्? अथवा जीवनेनापि किम्? वनयात्रायामयमासीन्मम सहचरः। इदानीं यमलोकयात्रायामहमस्य सहगामी भविष्यामि। ... ... देशे देशे पत्नी प्राप्तुं शक्येत, बन्धुश्च लभ्येत किन्तु एतादृशः सहोदरः कुत्रापि न प्राप्येत। .... .... लक्ष्मणं विना किमस्माकं राज्येन प्रयोजनम्? पुत्रवत्सलां सुमित्रां प्रति किमस्माभिर्वक्तव्यम्? हे नरश्रेष्ठ! वीराग्रगण्य भ्रातः! अस्मान्विहाय कुतः एकाकी परलोकगमने प्रवृत्तोऽसि?'

समयोचितौषधप्रयोगफलस्वरूपं लक्ष्मणः रोगमुक्तः समुत्थितवान्। रामस्तमालिङ्ग्याभिहितवान्-'वीर! भाग्यक्रमादेव त्वामहं पुनः जीवितं परिलक्षये। त्वयि प्रयाते सीताया उद्धारो विजयलाभो वा निरर्थकमिवाभविष्यत्।'

तदानीं लक्ष्मणः रामं हतोत्साहमिव परिलक्ष्याब्रवीत्-'शत्रुविनाशप्रतिज्ञां विस्मृत्य मानसिकदौर्बल्यप्रकाशः भवतो न शोभते। अद्य सूर्यास्तमयात्पूर्वमेव भवता रावणवधः करिष्यते।'

श्रीरामचन्द्रः इमां लक्ष्मणाभिलाषां पूरितवान्। तस्मिन्नेव वासरे रावणवधलीला समाप्तिमगात्।

लक्ष्मणविषयिका रामस्य या अप्रमेया प्रेमभावना सापि त्यागैकावलम्बनाऽऽसीत् । मातृस्नेह इव चरमस्त्याग एव तादृशीं प्रेमभावनां महिमान्वितां कृतवान् । लक्ष्मणकल्याणार्थं रामः सर्वमपि विधातुं समुद्यमशीलः । जननीजनकयोः भ्रातृभगिन्योः पतिपत्न्योश्चेदमेव त्यागमूलकं दिव्यप्रेम अस्मद्भवनानि स्वर्गे परिणमयति रामलक्ष्मण-भरतशत्रुघ्नानामितरेतरं प्रेमैव अस्माकं भारतीयसमाजस्य धर्मसम्पत् । महर्षिणा वाल्मीकिनाङ्कितं भ्रातृप्रेमादर्शरूपमिदमेव चित्रं भारते चिर-पूजितं परम्परागतं च । समाजे शान्ति पूर्णतां च स्थापयितुं यादृश-सौभ्रात्रस्यैतावत्प्रयोजनं तदेव सौभ्रात्रं श्रीरामचन्द्रः यावज्जीवनव्यापिन्या त्यागभावनया परिपुष्टं सुरक्षितं च कृतवान् । इतो भरतं प्रति श्रीराम-चन्द्रस्नेहभावः एकाङ्गी निम्नगामी च न क्वाप्यस्य प्रतिदानस्यापेक्षाऽऽ-सीत् । स केवलं स्नेहभावपरिपूरितः क्षमाशीलश्च ।

रावणापहृतसीतान्वेषणार्थं हनूमान् लङ्कां प्राप्तः कृतसीता-साक्षात्कारश्च । सा बाष्पस्तम्भितकण्ठं स्वबन्दिजीवन दुःखपरम्परं हनूमन्तं ज्ञापयामास । 'निजोद्धारसिद्धिश्च कथं सम्भवेत्' । एतस्मिन्विष-येऽपि सा तत्समीपं जिज्ञासां कृतवती । साऽब्रवीत्-'अपि रामोऽस्म-दुद्धारचेष्टा संलग्नो भवेन्ननु ? चेद्राम आपदनभिभूतः सागरमेखलामिमां महीं निजक्रोधोद्भूतज्वालामालाभिः कुतो न भस्मसाद्विदधाति ? अपि भरतः चतुरङ्गसेनाबलः स्वकीयामक्षौहिणीं पृतनां गृहीत्वा मदुद्धारहेतोः

लङ्कामागमिष्यति ? अप्यहं सबान्धवगणो लङ्केश्वरः श्रीरामचन्द्रस्य दारुणशराघातैर्विगतासुरित्यवलोकयितुमलं स्याम् ? दूतप्रवर । नान्या कापिव्यक्तिरस्मत्सदशी तत्स्नेहपात्रं भवितुमर्हति । यावत्कालपर्यन्तं तद्विषयकप्रवृत्तिलाभो जायेत तावत्कालपर्यन्तमेवास्मज्जीवनयात्रा सम्भवः ।

हनूमता सर्वेषामपि सीताविहितानुयोगानामुत्तराणि प्रतिपादितानि । किन्तु ज्येष्ठभ्रातुः महाविपत्तिसमये भरतः पुरस्कृतनिजाक्षौहिणीबलः कस्मान्नोपतिष्ठति इत्यस्मिन्विषये तेन (हनूमता) मौनमेवाङ्गीकृतम् । 'भरतः मदुद्धारकर्मणि व्यापृतो भवेत्' इत्यासीत्सीताया महती अभिलाषा । स खल्वासीच्छक्तिसम्पन्नः पार्थिवः । अपरतः रामचन्द्रः सहायसम्पत्तिहीनः एकाकी वनौकाः । एतस्यामवस्थायां भरतः सीतोद्धारकर्मणि कथमिवोदासीनवृत्तिरासीदिति विचारणीयो विषयः । सीतापहरणानन्तरमस्मिन्विपत्तिसमये भरतविषयको विचारः श्रीरामचन्द्रस्य मनसि प्रविष्टो न वा इत्यादिविषये वाल्मीकिरपि तूष्णीमासीत् । परंतु तेन श्रीरामचन्द्रस्य मनोभावः सीतामुखेन कुशलतया स्पष्टीकृतः ।

भरतेन वनवासिनः ज्येष्ठभ्रातुः प्रवृत्तिलाभतत्परेण भवितव्यमासीत् । सीतापहरणानन्तरं रामचन्द्र आत्मानं कियदवधि असहायममन्यत एतस्मिन्विषये सहजतया अनुमानं विधातुं पारयामः । तस्याखण्डाश्रुजलप्रवाहः पञ्चवटीमृत्तिकां लक्ष्मणशरीरं च अनेकवारमार्द्रमकार्षीत् । सुग्रीवेण सार्धं मित्रतास्थापनानन्तरं स स्वकीयपराक्रमप्रका-

शार्थं बद्धपरिकरो जातः। विभीषणेन समं सहृदयफलस्वरूपं रावणवधः सीतोद्धारश्च सम्भवोऽजनि।

श्रीरामचन्द्रो भारतभुवि सर्वश्रेष्ठः वीर आसीत्। स 'क्षत्रियरुधिरमये जगदपगततापं' विधाय सम्पानितादभुतकीर्तिः

---

*सीता न केवलं ज्येष्ठभ्रातृजायारूपा अपि तु सा इक्ष्वाकुकुलवधूरासीत्। रघुवंशस्य शासकत्वदृष्ट्या वंशमर्यादारक्षायाः सीतोद्धारस्य च सम्पूर्णं दायित्वं न्यायतः धर्मतश्च भरतस्योपरि आपतितमासीत्।

कविः वाल्मीकिः रामचन्द्रमनोभावस्येङ्गितं विविधस्थलेषु वर्णितवान्। लङ्कातः अयोध्याध्वनि पुष्पकरथे भरद्वाजाश्रमं प्रति समागते श्रीरामः हनूमन्तमब्रवीत्—'शीघ्रमेव त्वयाऽयोध्यानगरीं प्राप्य तत्रत्यकुशलजिज्ञासाकर्तव्या भरतं प्रति च सम्पूर्णवृत्तान्तवर्णनं विधाय अभिधातव्यम् यद्वयं विभीषणसुग्रीवादि मित्रगणेन समं अयोध्यामाजिगमिषवः। त्वत्कथितसंवादं निशम्य कीदृशो भरतस्य मनोभावः इति तस्याकारेङ्गितैः मुखवर्णप्रभृतिचिह्नैश्चाभिलक्ष्य ज्ञातव्यम्। सुखसमृद्धिपरिपूर्णपैतृकराज्यकामेन कस्यान्तःकरणं परिवर्तनशीलं न भवेत्! स चेद्राज्यकाङ्क्षी स्वयमेव समस्तराज्यशासनतत्परः भवतु। अस्माकमयोध्यागमनात्पूर्वमेव तस्य बुद्धिं व्यवसायं च विज्ञाय शीघ्रमेव त्वया प्रत्यागन्तव्यम्।'

सुविश्रुतक्षत्रियहन्तुः परशुरामस्य यशः केतुं स ग्लानिं प्रापितवान् । तस्य वीरत्वं नित्यमेव क्षमान्वितम् । अत्रैव तस्य महत्ता निहितास्ते । तस्मिन्नावलोक्यते क्रोधलेशोऽपि । एतेनैव तद्वीरत्वं कल्याणकारितामापद्यत । वीरत्वक्षमागुणयोरेकत्र सुमधुरसमावेशः श्रीरामचन्द्रजीवनस्य सर्वश्रेष्ठं माधुर्यम् ।

---

कविः रामचन्द्रमुखेन इदमभिहितवान्....'वयं विभीषणसुग्रीवादिमित्रगणेन सार्धमागच्छाम ।' एषा वार्ता विशेषरूपेण गुरुत्वपूर्णा । अयोध्याप्रत्यागमनसमये रामः मित्रगणशून्यः असहायो वा नासीदित्यस्यापीङ्गितमत्र विनिहितमास्ते ।

रामाभिषेकोद्योगसमये दशरथस्यान्तरिकसंदेहस्य यद्वर्णनं कविवाल्मीकिर्दत्तवान् तदपि विशेषेण विचारणीयम् । दशरथः राममाहूय विविधविषयकवार्तासु मध्ये इदमप्युक्तवान् - 'भरते मातुलकुलावस्थिते एव तव यौवराज्याभिषेकः सम्पन्नो भवेदियमेव ममाभिलाषा ; यतः यद्यपि भरतः धार्मिकः त्वन्मतानुयायी च, तथापि मनुष्यस्य मानसं कचिद्विचलितमपि भवेत् । पुनश्च तदभिषेकव्यापारमधिकृत्यैव कविः वाल्मीकिः लक्ष्मणमुखेन व्याहरति—"भरतस्य वधे दोषं नाहं पश्यामि राघव"........इति ।

चतुरङ्गसेनासमेतः भरतश्चित्रकूटयात्रामकार्षीत् । वाल्मीकिरामायणे दृश्यते—भागीरथीरोधसि शृङ्गवेरपुरग्रामसमीपं समावासित-

रावणवधं विधाय जानकीसमुद्धरणार्थं सैन्यबलसमेतः श्रीरामः लङ्कां प्राप्य तदवरोधं च विहितवान्। घोरतरयुद्धं प्रचलितम्। रामेण सकलं जगत् अरावणमरामं वा भवेदिति दृढतरप्रतिज्ञयैव समरमिदं समारब्धमासीत्। वाल्मीकिमतानुसारं रावणस्य सैन्यबलं रामाद्दशगुणितमधिकमभूत्। तथापि रामः स्वकीयदोर्दण्डपराक्रमनिर्भरः सन्-

---

विपुलकटकं भरतमवलोक्य गुहः स्वजातीयानुवाच........'दुर्बुद्धिर्भरतः स्वयमागतः अस्मद्बन्धनार्थं वधहेतोर्वा; स रामस्य हत्यामपि विदधीत। युष्माभिरखिलैः धृतकवचादिभिः गङ्गातीरे सावधानैर्भवितव्यमित्यादि।

एतदपि वाल्मीकिरामायणेऽवलोक्यते— अर्घ्यपाद्यफलादिभिर्विहितातिथिसत्कारो भरद्वाजमुनिःससैन्यं भरतं ससन्देहमेवावलोकयन् उक्तवान् त्वं तु राज्यशासनप्रसितोऽभूः इदानीमिह किमिव तवागमनकारणम्? अत्रास्मन्मानसं सन्दिग्धमेव। कैकेयीवचनानुसारं दशरथो रामं वनं प्रेषितवान्; अपीदानीं निष्कण्टकराज्यभोगाभिप्रायेण निष्पापरामस्य किमपिदुष्कृतमाचरितुं त्वमिहागतोऽसि?

अपरतः वयं रामं ऋतम्भराप्रज्ञमवलोकयामः। भरते तस्य एकाङ्गिनीस्नेहभावना अस्मान्मुग्धीकरोति। तेन भ्रातृस्नेहः अत्युन्नतासने प्रतिष्ठापितः। स न केवलं स्नेहैकतत्परः अपितु क्षमावांश्च। राज्याभिषेकानन्तरमपि तस्य भरतं प्रति न किञ्चिदप्यविचारकार्यं परिलक्ष्यते।

स्मिन्नायोधने आत्मानं निक्षिप्तवान् । रावणोऽपि रामचन्द्रवधार्थं गृहीतव्रतो युद्धसञ्चालनप्रसितो जातः । स्वयम्भूप्रदत्तानलसंकाशभयङ्करशक्त्यस्त्राघातेन लक्ष्मणं भूतले निपात्य आस्फालितवान् । इदमवलोक्य रामः स्वधनुषि वज्रतुल्यटंकारमुत्पाद्य रावणं प्रति व्याहृतवान्—'लंकेश्वर ! प्रतीक्षस्व । अस्मदनिष्टं विधाय तव कुत्रापि शरणं नास्ति । इन्द्रयमस्वयम्भूवैश्वानराणां मध्ये कस्यापि सन्निधौ तव निस्तारोऽसम्भवः । त्वं शक्ति-अस्त्राघातेन भ्रातरं लक्ष्मणमपीपिडः इदानीं मच्छरैः स्वयं स्वपुत्रपौत्रः समराङ्गणे विनाशमेष्यसि । नास्ति तव रक्षणसम्भावनम् ।' इत्यभिधाय रामः अनलशिखातुल्यशरजालवृष्ट्या रावणस्य रथं, अश्वान्, सारथिं शूलखड्गौ च छिन्नभिन्नान्विधाय तद्वक्षसि अशनिसमशराघातमेकं व्यदधात् । मूर्छितस्य रावणस्य हस्तात्तद्धनुरस्रंसत् । अस्मिन्नेवान्तरे रामः अर्धचन्द्रबाणेन रावणस्योज्ज्वलकिरीटच्छेदनं विधाय व्याजहार—'लङ्केश्वर! त्वयातिभीषणयुद्धमकारि । अस्मत्पक्षीया अनेकानेकवीराः त्वत्पराक्रमेण विगतासवः समजायन्त । इदानीं त्वमेकान्ततः क्लान्तोऽसि । अतः शस्त्रघातैस्तव वधो न विधेय इति मन्ये । रणक्लान्तस्त्वं प्रतिष्ठस्व । लंकां प्राप्य विश्रामः कर्तव्यः, स्वस्थीभूय स्वकीयधनुर्धरैः सार्धं पुनः प्रत्यावृत्यास्मत्पराक्रममवलोकयिष्यसि ।'

मर्माहतो रावणः लंकां प्रतिनिवृत्तः । अस्मिन्समराङ्गणे रामस्य कण्ठात्स्वर्गीय क्षमोच्चारणमजायत । रामादितरः कः खलु अस्मिञ्जगति

एतादृशीं क्षमामौदार्यं च दर्शयितुमलं स्यात्। यस्मिञ्छत्रुवधे रामस्य जीवनं सीतोद्धारकार्यं च पूर्णतयावलम्बितमासीत् तादृशशत्रुमित्थं मृत्योः समीपमानीयापि तमभयदानपूर्वकं परित्यक्तवान्। केवलमेकेनैव शराघातेन रावणवधः शक्यताकोटिमवागाहिष्यत। तत्तु तेन न विहितम्। समरनीतेः श्रेष्ठा मर्यादा तेन रक्षिता स्वयं कीदृङ् निःशङ्कः! स्वकीय पराक्रमविषये कियन्निर्भयशीलः!

श्रीरामचन्द्रः यानीमानि अखिलानि अलौकिककर्माणि विहितवान् तैरेव तस्यातिमानवत्वं देवमानवत्वं प्रमाणितं भवति। स्वयं भगवानेव रामदेहं धृत्वा धर्मप्रतिष्ठां विहितवान्। विष्णुपुराणेऽवलोक्यते—

"ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः।
वैराग्यस्याथ मोक्षस्य षण्णां 'भग' इतीरणा॥"

एत एव षड्भगाख्याः पदार्थाः। यस्मिन्नेते परिपूर्णरूपेण विराजन्ते स एव भगवान्। रामायणग्रन्थः विविधघटनामाध्यमेन रामचन्द्रः एतेषामैश्वर्यादिगुणानां मूर्तो विग्रह आसीदिति कीर्तयति। तस्येश्वरत्वप्रतिष्ठापनार्थमेव वाल्मीकिना रामायणकाव्यरचना विहिता।

रामचन्द्रस्य जीवने ईदृशषड्विधैश्वर्यादिगुणानां यादृशः पूर्णविकास समजनि तादृशः पूर्वं कस्मिन्नप्यवतारपुरुषे नावलोक्यते। अत एव रामः परमेश्वरस्य सर्वश्रेष्ठोऽवतारः इति व्याहारे न काप्यत्युक्ति,

पुनश्च निखिलेष्वपि गुणेषु वैराग्यं ज्ञानपूर्णता च तत्समग्रजीवनकर्मसु विशेषरूपेण परिलक्ष्येते ।

यदेतत्सौभ्रात्रं सत्यपरता पातिव्रत्यं या च मातृपित्राचार्यब्राह्मण-भक्तिः यच्च प्रजारञ्जनं वात्सल्यं बन्धुप्रीतिः प्रभुभक्तिश्च विविधप्राकृता-प्राकृतघटनामाध्यमेन अत्राङ्कितानि तानि चेत्सरलश्रद्धया आन्तरिक भावेन च गृह्यन्ते तर्हि अस्माकं गृहमात्रममरलोके परिणंस्यते। यावज्जा-गतिकसम्बन्धाश्च समुन्नततमाः सम्पत्स्यन्ते। रामायणग्रन्थस्येदमेव प्रधा-नवैशिष्ट्यं यन्नेदं केवलं धर्मशास्त्रं अपि तु इदं श्रेष्ठकाव्यपदवीमवगाहते। तत्रापि वाल्मीकिरामायणं इतिहासमूलमहाकाव्यस्य स्थानं गृह्णाति ।

रामायणोपरि श्रद्धासम्पन्नानां कृते यथैतस्य ग्रन्थस्यायोजनं तथैव रामायणं 'Epic Mythology' दृष्ट्यावलोकयतामपि एतस्याधि-कतरोपयोगिता भवितुमर्हति । वाल्मीकिरामायणमहाकाव्ये याः काश्चिद्घ-टनाः क्षेपकरूपेण प्रवेशिता अथवा रामचन्द्रजीवनस्यातिमानवतां साध-यितुं संयोजिता अथवा यत्फलस्वरूपं श्रीरामचन्द्रजीवनालेख्योपरि बहुविधतूलिकाघातोविहितः एतादृश्यः यावद्घटनास्तादृशा वा अस्मिन्ग्रन्थे सूक्ष्मविचारपूर्वकं वर्जनविषयीकृताः सन्ति ।

महर्षिवाल्मीकिरादर्शवादी कविरासीत् । तेन स्वरामायणग्रन्थे यानि कानिचिदादर्शचरितानि अङ्कितानि तेषु प्रत्येकमपि चरित अनुपमं निरवद्यं च सम्पूर्णेऽपि चरिते आदर्शानां चरमोत्कर्षो दृश्यते ।

भारतस्यार्यधर्मस्य वा ये साधनाराधनादर्शाः तेषामपि पूर्णपरिणतिरेतेषु चरितेषु दृश्यते। तानेव (साधनाराधनादर्शान्) भारतमार्यजातिश्च अनेकसहस्रवर्षपर्यन्तं सश्रद्धमान्तरिकभावेन चाङ्गीकृतवती। तथैव भारतीयानां व्यक्तिगतं धार्मिकं राष्ट्रियजीवनं च अस्मिन्नेव संस्कारयन्त्रेऽङ्कितम्। वाल्मीकिरामायणस्य अमोघः प्रभावः बलवन्तं कालप्रभावमपि कवलीकृत्य भारतीयजीवनस्य प्रतिस्तरं प्रतिबिम्बरूपेण पतितः सन् अलक्ष्यशिशिरसम्पात इव भारतकल्याणं साधितवान्—भारतं समुन्नतगौरवान्वितं च विहितवान्। वर्तमानवाल्मीकिरामायणे याः काचिदसंगतयः परिलक्षिता भवन्ति तदर्थमादिकविर्वाल्मीकिर्न दोषभाग्भवितुमर्हति। यतः कतिपयवर्षसहस्रपूर्वं विरचितमूलग्रन्थस्योपरि अनेकवर्षपर्यन्तं बहुविधकवीनां वाल्मीकिसम्प्रदायानुसारिणां परवर्तीतरवाल्मीकिनामधारिणां लेखनी पतिता येन मूलग्रन्थेन सार्धमनेके अंशाः क्रमशः निगडिता अभवन्। सत्स्वपि एतेषु दोषेषु महाकाव्यस्यास्य महिमा न म्लानिमानं प्राप्तः। इदानीमपि अयं रामायणग्रन्थः मानवजात्यभ्यन्तरे अप्रतिहतगत्या चरमादर्शस्थापनायालम्।

वर्तमानवाल्मीकिरामायणे सत्यघटनाः कियत्परिमाणपर्यन्तं वर्तन्ते एतादृशी आलोचना नास्माकं कृते समुचितो विषयः। मानवजातेरभिमुखं उच्चादर्शस्थापनार्थं राष्ट्रियजीवनं च सर्वोच्चमाने प्रतिष्ठापयितुमेव वाल्मीकिः रामायणरचना प्रसितो जातः। अस्यां दिशि च

तस्य प्रयत्नः पूर्णांशेन सफलीभूतः । वाल्मीकिरामायणस्य बालकाण्ड-प्रथमसर्गे नारदवाल्मीकिसंवादो दृश्यते । वाल्मीकिना स्वकीयमहा-काव्यार्थं उपयुक्तनायकसन्धानविषये नारदमुनेः समीपे जिज्ञासा समा-रब्धा - 'वर्तमानसमये भूतले कः खलु नरश्रेष्ठः यः गुणवान्, वीर्यवान्, सत्यवादी, धर्मज्ञः, कृतज्ञः, सत्यनिष्ठो दृढव्रतश्च; यः पुनः सच्चरित्रः, विद्वान्, भूतमात्रस्य हितकारी, प्रियदर्शनः, कर्तव्यपरायणः, जितेन्द्रियः, वीरः, जितक्रोधोऽसूयाशून्यश्च' इत्यादि ।

वाल्मीकेरनुयोगमनु नारदोऽब्रवीत् - 'इक्ष्वाकुवंशे रामाभिधानः आस्ते कश्चित्प्रसिद्धो राजा । त्वया यद्गुणविषयिका जिज्ञासा कृता तेष सर्वेषामपि गुणानां तस्मिन्समावेशः परिलक्ष्यते । स खलु धीरस्वभावः, जितेन्द्रियः, विचक्षणः, राजनीतिज्ञः, कान्तिमान्, संयतचित्तश्च । स पुनः महाप्रतापशाली वीरः, श्रीमान्, लक्ष्मीवान्, धर्मज्ञः, सत्यसन्धः, प्रजाहिततत्परः, यशस्वी, ज्ञानी विनीतस्वभावश्च । गाम्भीर्ये समुद्रतुल्यो धैर्ये हिमाचलोपमश्च, वृद्धश्रवाः पितृमातृभक्तः सर्व-जनवन्दितः पूजितश्च' । इत्थं विहितविविधगुणकीर्तनः नारदः रामस्य यौवराज्याभिषेकवनगमनद्वयमारभ्य तत्कृतरावणवधः अयोध्याप्रत्यावर्तनं राज्याभिषेकः इत्यादिघटनाः संक्षेपतः उपवर्ण्य वाल्मीकिं प्रति देव-तुल्यरामचरितरचनार्थं निर्दिदेश ।

2

अनन्तरं पितामहप्रतिपादिताशीर्वचनस्वीकारपूर्वकं वाल्मीकिश्छन्दोबद्धवाक्यरूपेण रामचरितं वर्णयामास। परमेष्ठी विशेषवरप्रदाने सार्धं व्याहृतवान् – "नारदस्य सकाशाच्छ्रवणविषयीकृतं रामलक्ष्मणजानकीनां चरितं यथाश्रुतमुपवर्ण्यताम्" "तच्चात्राविदितं सर्वं विदितं भविष्यति।" त्वत्कल्पितघटना अपि लोके वास्तविकघटनात्वेन स्वीकरिष्यन्ते।*

---

* नारदवाल्मीकिसंवादविचारतः एतन्मनसि जायते - यद्यपि वाल्मीकिः रामस्य समकालीनः तथापि स तदानीं रामचन्द्रदिव्यजन्मकर्मविषये सम्पूर्णतया अपरिचित एवासीत्। अथ च अखिलं भारतं रामायणनायकस्यालौकिककर्मसौरभेणामोदितमासीत्। एतेन वाल्मीकिः रामचन्द्रसमकालीनः नासीदिति अनेके रामायणकर्तारः अमन्यन्त।

वाल्मीकिवर्णितरामायणरचनेतिहासः, नारदब्रह्मणोरागमनम्, वाल्मीकिना सह कथोपकथनप्रभृतिघटनासु नास्ति येषां विश्वासः तेऽपि रामायणस्य पौराणिकांशं वर्जयित्वापि रामयणकथां एतादृशभावेन रचयितुं पारयन्ति यत् वाल्मीकिः कस्मादपि तत्कालीनमुनिपुङ्गवसकाशात् रामचरितस्य विशेषघटनाः संगृहीतवान्। अथवा कश्चन ब्राह्मणश्रेष्ठः रामायणरचनाया वाल्मीकेः सहायतापरोऽभूत्। वाल्मीकिः खलु एतादृशो महान् सिद्धपुरुष आसीत् यत्तेन सह सूक्ष्मदेहधारि

नारदस्य ब्रह्मणः देवतादीनां वा समागमः अविश्वास्यघटनाक्रमत्वेन न स्वीकार्य इत्येवेष्टतरं प्रतिभाति।
आत्मभूर्दत्ताशीर्वचनः वाल्मीकिमुक्तवान्—

"यावत्स्थास्यन्ति गिरयः सरितश्च महीतले।
तावद्रामायणकथा लोकेषु प्रचरिष्यति।" इत्यादि।

नारदब्रह्मणो विशेषाशीर्वादग्रहणपूर्वकं वाल्मीकिः रामायण-रचनामारभ्य विंशतिसहस्रश्लोकयुक्तं पञ्चशतसर्गपरिष्कृतं षट् काण्डात्मकं च रामायणं प्रणिनाय। पश्चात्तेन सहोत्तरकाण्डं संयोज्य काण्ड-सप्तकात्मकोऽयं ग्रन्थः पूर्णतां गतः। वाल्मीकिः प्रथमं एतद्रा-मायणं स्वशिष्यान् प्रति सस्वरतालं वीणादितन्त्रीवाद्यसाहचर्येण गातुं शिक्षितवान्। जनसाधारणेषु च रामचरितप्रचारतत्परोऽभूत्। चिरसमयानन्तरं तत्खलु ग्रन्थाकारेण सङ्कलितमजायत। अयमेव वाल्मीकिरामायणवर्णितः रामायणरचनायाः संक्षेपेणेतिहासः।

वाल्मीकिः समग्रभारते आदर्शगृहस्य आदर्शगृहस्थाश्रमस्य च प्रतिष्ठापनार्थं कस्यचिद्गृहस्थाश्रमिण एव चरितं समुपवर्ण्य गृहस्थाश्रमं प्रति श्रेष्ठमविनश्वरं गौरवदानमकार्षीत्। "त्यागेनैके अमृतत्वमानशुः" एतादृशोन्नतादर्शे च गृहस्थाश्रमं प्रत्यतिष्ठिपत्। तदिदं रामचन्द्रजीवनं त्यागमयमुज्ज्वलं त्यागमूलकं च।

 

मन्यामहे भारतीयधर्मसभ्यतासंस्कृतीनामाधारभूतवैदिकधर्मादर्शं पुनरपि सुप्रतिष्ठितं कर्तुमेव एतादृशादर्शचरिताङ्कनेन वाल्मीकेः स्तुत्यतमः प्रयत्नः शतशो वर्षाण्यभिव्याप्य वयं भारतीया विस्मयाभिभूतमानसा ईक्षामहे यद्वाल्मीकेरयं श्लाघनीयः प्रयत्नः पूर्णतया सफलीभूतः। स तु निखिलविश्ववासिनां पुरतः मानवचरित मानवजीवनादर्शं च सर्वोच्चासने प्रतिष्ठापितवान्। भारते जगति च अस्मिन्युगे धर्मस्यागतासीत् हानिः शैथिल्यं वा। तदैव भगवतो रामचन्द्रस्याविर्भावो जातः। एतस्याभिनवं चरितं च महाकाव्यरामायणमाध्यमेन अधिकतरं समुज्ज्वलं विधाय वाल्मीकिना मानवजातेः सम्मुखमुपस्थापितम्। 'स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते।' मनुष्यमात्रस्य देवत्वे प्रतिष्ठापनमेव रामायणस्य लक्ष्यम्। अतोऽस्मिन्वाल्मीकिरामायणे रामः मानवः सन्नप्यतिमानवः। महाजनपदाङ्कानुसारणपूर्वकं वाल्मीकिः मानवसमाजं श्रेयोलाभपथपरिचालितं चकार। अतः अस्मिन् चरित्रवर्णने अतिमानवत्वस्य विशेषविकासः दृश्यते।

* * *

महाकविः स्वरामायणग्रन्थे दशरथचरितं आदर्शजनकरूपेण वर्णयायास। स (दशरथः) चासीत्सत्यावलम्बनः। निजप्राणविनिमयेनापि तेन सत्यस्य यथार्थमर्यादा दत्ता। दशरथस्य वीरत्वप्रजानुरञ्जने अद्यापि किंवदन्तीरूपेण भारते सर्वत्र समादृते स्तः। वाल्मीकिः

दशरथं प्रति विशेषतया श्रद्धासम्पन्नः। तेन प्रतिपादितम् 'दशरथः लोकविश्रुतः चरित्रवान् महर्षिकल्पश्च पार्थिवोऽभूत्। न द्वेष्टा विद्यते तस्य स तु न द्वेष्टि कञ्चन'। स प्रजावत्सलः जितेन्द्रियश्चासीत्। प्रजागणाः तस्मिन्द्वितीयपितामह इवादरशीलाः समभवन्। यथार्थमेव दशरथः पराक्रमशाली आदर्शभूपतिरभूत्। बौद्धरामायणे दशरथविषये अवलोक्यते - 'सपरित्यक्तद्वन्द्वद्वेषमोहभयः धर्ममनुसृत्य प्रजापालन-तत्परश्चासीत्' इति।

यद्यपि स (दशरथः) विहितानेकविवाहः अमितान्तःपुर-वासिनीपरिवृतश्चासीत् तथापि वाल्मीकिस्तं 'जितेन्द्रिय' इति वर्णयन् तत्र युक्तिमुपस्थापयति यत् दशरथः सन्तानकामी सन् 'अग्निष्टोमाश्व-मेधपुत्रेष्ट्यादियज्ञानकार्षीत्।*

अनेकेषां मतानुसारं रामचन्द्रस्य वनगमनमेव दशरथस्याकाल-मृत्योः कारणमभूत्। इतश्च रामराज्याभिषेकस्य पारिपार्श्विक्यः अवस्था-स्तादशघटनाश्च दुरूहरहस्यमय्यः कैकेय्याः पुत्रोद्भूतेरनन्तरमेव सत्यावलम्बो दशरथः इममेव पुत्रं सिंहासनाधिरूढं करिष्यति इत्यस्मि-न्विषये कस्यचनापि नासीत् कोऽपि संदेहः। परन्तु रामः वयःप्राप्ति-

---

* केषांचित्पुराणानां मतानुसारं अपुत्रको दशरथः 'हाटकेश्व-राभिवक्षेत्रे पुत्रकामनया दीर्घकालपर्यन्तं कठोरतपस्याप्रसितः अभूत्।'

सहितं एतादृशः सर्वसद्गुणभूषणो निखिलजनप्रियश्च जातो दशरथश्च रामचन्द्रं प्रति एतावदधिकतरः स्नेहप्रवणोऽजनि यत्स्वकीयसत्यरक्षार्थं कियदप्युदासीनोऽभूत् अथवा प्रजातन्त्रस्य प्रधानतां साधयितुं मनश्चक्रे। यतस्तस्मिन्नपि युगे पार्थिवाः सर्वेष्वपि क्षेत्रेषु स्वेच्छाचारितामाचरितुमसमर्था आसन्। प्रजाभिमतं प्रति कियदंशतः स्वीकृतिप्रदानं कर्तव्यमेवाभूत्। एतस्यापि अनेकप्रमाणानि स्वयं वाल्मीकिना प्रदत्तानि। किन्तु अस्मिन्संकटमयमुहूर्ते प्रियसहधर्मिणी कैकेयी दशरथधर्मबुद्धिं जागृतां विधाय तं सत्यरक्षार्थमुद्यतं कृतवती। यद्यपि तादृशबुद्धिं कार्ये परिणतां कर्तुं आसन् कतिपयेऽनुल्लङ्घनीया - अन्तरायाः। तादृशान्तरायेषु प्राधान्येनाभूद्रामचन्द्रस्य मतामते। अतः एव राजा दशरथः भरतस्य अनुपस्थितिरूपं सुयोगं विचार्य अकस्मात् एकस्यां रजन्यामेव रामराज्याभिषेकायोजनमकारयत्। अस्मन्मतानुसारं जनमतोपरि श्रद्धाशीलत्वेनैव दशरथस्य एतादृशः प्रयत्नः।

इदं तु प्रतिभाति एतैर्विविधकारणैः रामः आरम्भत एव राज्याभिषेकस्य विरोधी आसीत्। अन्तिमक्षणपर्यन्तं स्ववनवासव्यवस्थां

---

तत्तपस्यया परितुष्टो जनार्दनो विष्णुस्तस्मै अभीष्टवरप्रदानं विधायोक्तवान्-"देवकार्यसम्पादनार्थमहमेव स्वकीयांशचतुष्टयेन त्वत्पुत्ररूपेणावतीर्णो भविष्यामि अस्मिन्विषये न कोऽपि संदेहः कार्यः।" विष्णोर्वरप्रदानफलस्वरूपं यथासमयं राजा दशरथः पुत्रचतुष्टयलाभवानभूत्।

विधाय पित्रे सत्यरक्षासुयोगं प्रतिपादितवान् । जनकस्य सत्यपालनाय एतावान् त्यागः रामचरितस्य श्रेष्ठमहिमानं प्रमाणयति ।

रामवनगमनसमये दशरथस्येदमाशीर्वचनम्—"वत्स त्वया वने गन्तव्यं यथाशीघ्रं प्रत्यागन्तव्यं च । नहि त्वां सत्यव्रतच्युतं भाषितुमुत्सहे; पन्थाश्च ते निर्भयो भवतु । किन्तु पुत्र त्वया अद्यैव न गन्तव्यम् अहं तव जननी च अस्मिन् दिने त्वद्दर्शनप्रसङ्गेन सुखिनौ स्याव ।

रामचन्द्रः 'अद्यैव वनं यास्यामि' इति प्रतिश्रुतवान् । अत एव स दिनमप्ययोध्यायां न स्थितः । लक्ष्मणस्य मनोभावपरिवर्तनस्वरूप ततोऽपि महदनर्थभयमभूत् । अतः सत्यप्रतिज्ञरामचन्द्रस्य विषयनिःस्पृहता तथा असामान्यवैराग्यमण्डितः दृढसंकल्पः दशरथमनृणमकार्षीत् । एतादृशी पितृभक्तिः सत्यनिष्ठा च जगति क्वाचित्कैव ।....

वाल्मीकिरामायणानुसारं दशरथः द्विवारं प्रतिज्ञाबद्धोऽभूत् । प्रथमं केकयेश्वरस्य पुरतः ततश्च कैकेय्याः समीपम् । कैकेयीपुत्रस्य सिंहासने प्रतिष्ठापनमेव प्रथमप्रतिज्ञारहस्यम् । द्वितीयप्रतिज्ञायां दशरथः कैकेयीं प्रति वरद्वयदानशपथं विधायोक्तवानासीत्—"कमलनयनो रामः मम प्राणेभ्योऽपि प्रियतरः तस्यैव रामस्य नाम्ना शपथं विधायाभिदधामि त्वया यदेवोच्यते तदेव करिष्यामि । यदेव तवेष्टं तदेव प्रदास्यामि ।"

प्रतिज्ञापाशेन बद्धः सन् यदा दशरथः कैकेयीपाणिग्रहण-मकरोत्तदानीं दशरथस्य नासीत्किमप्यपत्यम् । कैकेयीविवाहानन्तरमपि दीर्घकालपर्यन्तं दशरथस्य राज्ञीगर्भेषु न कोऽपि सन्तानोऽभूत् । दैववशाज्जातस्य कैकेयीपुत्रस्य सिंहासनलाभः प्रतिज्ञाया अंशभूतो न वा इति विचारणीयो विषयः विशेषतया यतः स पुत्रः ज्येष्ठरूपेण न जातः* किन्तु रामस्य वनगमननिश्चयादेव दशरथकृतप्रतिज्ञाद्वयपालनसम्भवो जातः । केवलं सिंहासनस्य अधिकारं परित्यज्य भरतस्य

---

* बौद्धरामयणस्य (जातकटीका) मते दशरथस्याग्रमहिषीगर्भतः रामलक्ष्मणयोर्जनिरभूत् । अग्रमहिषीमृत्योरनन्तरं अमात्यादीनां परा-मर्शतः दशरथः अन्यपत्नीस्वीकारं कृतवान् । द्वितीयमहिष्या गर्भतः भरतकुमारस्य जन्माजायत । भरतस्य सप्तमवत्सरारम्भसमये द्वितीया महिषी स्वीकीयपुत्रं सिंहासनासीनं विधातुं प्रयत्नशीला अभूत् । दशरथः निरुपायः सन् रामलक्ष्मणजीवनं विपन्नमिति मत्वा उभावपि वनं प्रेषितवान् । ततो नववर्षानन्तरं दशरथः प्राणान् जहौ । तदा कैकेयी स्वपुत्रं सिंहास-नारूढं विधातुं प्रयत्नमकार्षीत् । परन्तु अमात्यगणैः तदवरुद्धम् । निरु-पायेन भरतः रामलक्ष्मणौ वनात्प्रत्यावर्तयितुं प्रयातः परं रामः तदानीमपि नायातः । पितुरादेशानुसारं द्वादशवर्षानन्तरं अयोध्यामागत्य रामेण सिंहासनेऽधिकारः कृतः ।

यौवराज्यव्यवस्थाविधानेनैव अयोध्यायास्तत्कालिनं राजनैतिकं दिङ्मण्डलं सम्पूर्णतया निर्मलतामगमिष्यन्न वा इति संदिग्धमेव ।

रामचन्द्रः वनगमनस्य प्राक् रोरुद्यमानां मातरं कौसल्यां व्याजहार - 'पिता प्रत्यक्षं देवता पितुः प्रतिज्ञापालनमेव मम श्रेष्ठो धर्मः' इत्थं कौसल्यां मातरं सान्त्वयन् रामचन्द्रः वनयात्रामारब्धवान् । रामः स्वेच्छयैव राजसिंहासनं परित्यज्य वनवासमङ्गीचकार एतेनैव सौभ्रात्रव्रतपालनं पूर्णम् ।

पित्रे अन्तिमप्रणामं समर्प्य रामचन्द्रः उक्तवान् '........भवान् दुःखितो मा भूत् । राज्यमिदं भरताय प्रदीयताम् । सत्यसन्धोऽहं भवतः सत्यव्रतपालनो भविष्यामि । जनकः देवतागणेभ्योऽपि पूज्यतरः तस्यैव पितृरूपदैवतस्याज्ञापालनेऽस्मत्सुखं निहितम् ।' अनन्तरं मातृगणस्य पुरतः साञ्जलिरभिदधौ - 'भ्रमतोऽज्ञानवशाद्वा मया चेत्किमप्यपराद्धं तद्गुणवतीभिः भवतीभिः क्षन्तव्यम् ।' रामचन्द्रः कैकेयीतोऽपि आशीर्वचनभिक्षां याचितवान् ।........

दशरथः स्वेच्छाप्रभवात् कैकेयीं वरदानाद्विरतां कर्तुमपारयिष्यत् । एतेन सर्वेऽपि पुरवासिनः अयोध्यावासिनश्च सुखिनः अभविष्यन् । तत्त तेन न विहितम् । सत्यस्य श्रेष्ठमूल्यं तेन प्रदत्तम् । वाल्मीकिरामायणमतेन रामवनगमनस्य षड्वासरानन्तरं सुमन्त्रः शून्येन रथेन

अयोध्यां प्रतिनिववृते। तस्मिन्नेव वासरे दशरथः हा पुत्र! हा राम! इति विलपन्नेव प्राणान्विजहौ।

* * *

पुष्पलतालङ्कृतस्य चित्रकूटस्य कण्ठहारोपममन्दाकिन्याः निर्मलजले सीतया सार्धं स्नानतत्परो रामचन्द्रः सावेगं जनकनन्दिनीमुवाच - 'अद्यास्माकं वनवासः शुभफलप्रदो जातः। अस्य (वनवासस्य) फलद्वयमेव परमकाम्यमासीत्। एकमसत्यतः पितुः मोचनमपरं भरतस्य प्रियसाधनं च।' भरतः यत् सिंहासनप्राप्तेरभिलाषुकः आसीत् इतीङ्गितं एतत्कथातः ज्ञातव्यमास्ते।........

किन्तु रामचन्द्रस्य मनसि तस्य कापि प्रतिक्रिया नाजायत स केवलं पितृसत्यपालनरूपधर्मानुष्ठानतत्पर आसीत्। कस्मिन्नप्यहनि चित्रकूटगतपर्णकुटीतः निष्क्रान्तः सः सह सीतया निसर्गशोभादर्शनप्रसङ्गे अकस्मात्सैन्यदलस्य कोलाहलं तुरगहेषारवं च निशम्य भूतलात् समुत्थितं धूलिपटलं चावलोक्य तत्कारणजिज्ञासार्थं लक्ष्मणमदिक्षत्। लक्ष्मणस्तत्क्षणमेव कञ्चिदुच्चतरसालविटपिनमारुह्य 'कोविदध्वजाङ्किताम्' पताकापरिशोभितां भरतस्य विशालसेनामवलोक्य शङ्कितः सन् राममुक्तवान् - 'आर्य। कुटीगतानलनिर्वापणं विधीयतां, सीता गृहाभ्यन्तरं प्रयातु, भवांश्च सवर्मधनुर्बाणः सीतारक्षार्थं सन्नद्धो भवतु। भरतः

निष्कण्डकराज्यभोगाभिलाषी सन् अस्मद्वधार्थमागतः। अद्याहं स सैन्यस्य भरतस्य वधं विधास्यामि।'

निशम्यैतद्रामः स्नेहार्द्रकण्ठमभिदधौ—'चेद्भरतः सेनया सार्धमायाति किमस्माकं शस्त्रग्रहणेन प्रयोजनम्? पितृसत्यपालनार्थं वनमागत्य भ्रातृरक्तेनात्मानं कलङ्कितं विधाय को लाभः? ......'त्वया भरतं प्रति न किमपि निष्ठुरवचनं वक्तव्यम्। तादृशं वचनं मां प्रत्येवाभिहितं भवेत्। यदि राज्यार्थं किमपि वक्ष्यसि तर्हि दृष्टमात्रं भरतमभिधास्यामि 'राज्यं लक्ष्मणाय प्रदातव्य'मिति। श्रुतरामवचनो लक्ष्मणः निजगात्राभ्यन्तरं प्रविष्ट इव अतीव लज्जान्वितो जातः।....

अयोध्यां प्रत्यावर्तनप्रस्तावे रामचन्द्रः भरतमब्रवीत—'कुमुदबान्धवस्य कान्तिरपनीता भवेदपि, हिमाचलः शैत्यपरित्यागं विदध्यात्, अथ च सागरः स्वतटभूमेरतिक्रमणं कुर्यादपि परं न पारयामि पितृप्रतिज्ञोल्लङ्घनं विधातुम्।'

स्वपादुके समर्प्य भरतशत्रुघ्नयोरालिङ्गनपूर्वकं रामोऽभिहितवान्—'आत्मनः सीतायाश्च शपथं विधायाभ्यर्थये मातुः कैकेय्याः न किमपि कष्टं दातव्यम्।'....

रामः सर्वत्र स्थितप्रज्ञपुरुषः दृढकर्तव्यपटभूमौ अकुण्ठितविग्रहस्वरूपः। सर्वत्रापि स सत्यपरायणस्त्यागतत्परश्च तस्याभूतपूर्वा

सत्यनिष्ठा मानवजातेः पुरतः चिरकालपर्यन्तं गगनचुम्बिहिमगिरिसदृशी उन्नता शोभना च स्थितास्ते। पिता तस्य पुरतः 'प्रत्यक्षदैवतं' 'देवतानामपि दैवतम्'।

*　　*　　*

दण्डकारण्यवाससमये मुनीनामनुरोधेन रामः राक्षसोपद्रवनिवारणमङ्गीकृतवान्। तेन सीतामानसं विशेषरूपेण चिन्ताकुलमजायत। सुतीक्ष्णमुनेराश्रमतः यात्रासमये तया स्निग्धमनोहराणि वचनानि रामचन्द्रस्य पुरतः उदाहृतानि—'मिथ्यावचनं परदारगमनम् अकारणक्रोधस्वरूपिणी हिंस्रता च—एतैरेव त्रिभिः कामजव्यसनैः। लोकः अधर्मग्रस्तो जायते। रघुकुलावतंस! प्रथमं दोषद्वयं त्वयि अद्ययाबदविद्यमानमेव भविष्यति च त्वां न स्प्रक्ष्यति। परन्तु तृतीयव्यसनमिदानीं त्वत्पुरत उपस्थितम्। त्वयाऽकारणमेव राक्षसैः सार्धं वैरभावोऽङ्गीकृतः येनास्मत्मानसं भाविविपदाशङ्कया विशेषतः विचलितं जातम्........ 'पुनर्गत्वायोध्यायां क्षात्रधर्मं चरिष्यसि नित्यं शुचिमतिः सौम्य! चर धर्मं तपोवने।' रामोऽभिहितवान् - 'देवि! यत्किञ्चित्त्वयोक्तं तदखिलमस्मत्कुलधर्मोचितमेव। किन्तु दण्डकारण्यवासिनः मुनयः आर्ताः सन्तोऽस्मच्छरणापन्ना जाताः मयापि तद्रक्षावचनं प्रदत्तम्। सर्वदा सत्यनिष्ठोऽहम्। त्वां लक्ष्मणं च परित्यक्तुं शक्नोमि परं ब्राह्मणानां पुरतः या प्रतिज्ञा विहिता तदुल्लङ्घनमस्माभिरसाध्यम्। तदर्थं च याः काश्चिदपि विपत्तयः सम्भवन्तु नाम तत्स्वीकारार्थमनवरतं प्रस्तुतोऽहम्।'

सीतानिवारितोऽपि रामः स्वीकीयप्रतिज्ञारक्षणार्थं राक्षसैः सह शत्रुतारूपविविधविपद्वरणतत्परः अजायत। स किलासीत्सर्वोपरि आर्तबन्धुः।

*　　　*　　　*

सुग्रीवेण सह रामचन्द्रस्य सख्यं वालिवधश्च रामायणस्यारण्यकाण्डेऽतिमहती जटिलघटना वर्तते। वाल्मीकिकविना रामचन्द्रं वालिवधपापात् तारयितुं अनेककष्टसाध्यघटनानामाश्रयो विहितः। रामचन्द्रो वालिवधं विधाय सुग्रीवं राजसिंहासने स्थापयिष्यति सुग्रीवश्च सीतोद्धारकार्ये रामचन्द्रस्य सहायं विधास्यति एतेनैव समयेन तयोः परस्परं सख्यस्थापनमभूत्। अस्मिन्क्षेत्रे तेन केवलं वालिवधरूपसत्यपालनं विहितम्। अत्र वाली सदोषो वा निर्दोषो वा इति त्वत्रान्तरो विचारः। कस्यापि रामायणस्य मतेन रामचन्द्रः समराङ्गणे सम्मुख वालिवधं कृतवान् - वाली एकः श्रेष्ठोवीरः आसीत्। परं न धनुर्विद्या विशारदः। अतो हेतोरेव श्रेष्ठतरकुशलयोद्धृहस्तेन वालिनः मृत्युरभूत्। पुनः कस्याप्यन्यरामायणस्य मतेन 'लक्ष्मणेनैव समरे सम्मुखे बालिवधो विहितः।

वालिसुग्रीवयोर्मध्ये राजसिंहासनप्राप्तिविषयको विवादः आसीत्। सुग्रीवः कुटिलोपायैर्ज्येष्ठं भ्रातरं वालिनं राज्यच्युतं विधाय सिंहासनोपरि निजाधिकारं स्थापयामास। तदारभ्यैव भ्रातृद्वयाभ्यन्तरे

परस्परं मनोमालिन्यमजायत। वालिना च विद्रोही कनिष्ठसहोदर सुग्रीवः राज्यान्निष्कासितः। कनिष्ठभ्रात्रैव सहासीद्वालिनः शत्रुभाव; न तु तस्य पत्न्या सह। अतः सुग्रीवपत्नीमाश्रयहीनामविधाय तां ससंमानं अन्तःपुरस्थामेवाकार्षीत्। सुग्रीवः कतिपयैः विश्वासपात्र सचिवैः सार्धं राज्यं परित्यज्य प्रयातः ज्येष्ठभ्रातृवधपूर्वकं च सिंहासनाधिकारार्थं षड्यन्त्ररचनातत्परो जातः।

एतत्सदृशी घटना लङ्कायामपि समभवत्। विभीषणः रामचन्द्रसहायेन रावणं सिंहासनच्युतं विधातुं षड्यन्त्रतत्परोऽभवत्। एतत्परिज्ञाय रावणः विभीषणं लङ्कातः बहिष्कृतवान्। विभीषणः चतुर्भिः प्रधानसचिवैः समं रामशिविरं प्रविष्टः ससैन्यरामस्य पथप्रदर्शनं कुर्वंश्च तं लङ्कामानीतवान्। रावणः विभीषणं निष्कासितवान् किन्तु विभीषणस्य स्त्रीपुत्रादिकं स्वच्छन्दं रावणस्यैवाश्रये स्थितम्। न केवलमिदमेव, अपितु विभीषणस्यात्मजस्तरणीसेनो रावणसेनापतिरूपेण रामस्य विभीषणस्यापि विरुद्धं, युध्यमानो रणक्षेत्रे प्राणांस्त्यक्तवान्। इयमपिघटना राजनीतिक्षेत्रेऽतीवमहत्त्वपूर्णा। विभीषणः ज्येष्ठभ्रात्रासह प्रतिकूलाचरणपरो बभूव। किन्तु तस्यैव पुत्रः तातपक्षपरित्यागपूर्वकं जनकविरोधी सन् स्वजीवनोत्सर्गं कृतवान्। आत्मजेन पितृकार्यानुमोदनं न विहितम्।

*  *  *

अस्मिन्प्रसङ्गे वालिनः गुप्तरूपेण वधस्य कश्चन प्रश्न एव नोत्तिष्ठति । उन्नततरयुद्धनीतेः पुरतः वाली पराभूत आसीत् । सत्यरक्षणमेव रामचरितस्य सर्वश्रेष्ठवैशिष्ट्यम् । एतच्च तज्जीवनस्यानेकक्षेत्रे दरीदृश्यते । सुग्रीवस्य सपत्नो रामस्य सपत्न एव अत एव वालिवधः अधर्माचरणं न भवितुमर्हति । एतादृशक्षेत्रेषु वाल्मीकिः कविकल्पनावशतः रामचन्द्रः यवन (ग्रीक) पुराणगतदेवतासमानं मनुष्यधर्मी विहितो दृश्यते ।

सुग्रीवः कौशलेन ज्येष्ठभ्रातरं वालिनं सिंहासनच्युतं विधाय भ्रातृजायोपरि अधिकारं कृतवान् । अत एव सुग्रीवं प्रति वालिनोऽधिकतरं कोपः, परन्तु सुग्रीवस्य वधः नासीत्कदापि तस्याभिमतः । द्वितीयवारं युद्धयात्राया, पूर्वं निजपत्नीं तारामवरुन्धता वालिनोक्तमासीत्- 'अहं सुग्रीवस्य दर्पं चूर्णीकरिष्यामि; नतु तस्य प्राणापहरणम् ।'

अपरतस्तु द्वितीयवारं युद्धप्रयाणात्पूर्वं सुग्रीवः राममभिहितवान्- 'हे वीर ! भवता वालिवधार्थं यत्प्रतिज्ञातं तस्य निर्वाहः कर्तव्यः ।

वालिवधानन्तरं सुग्रीवखेदोक्तिर्विशेषतो विचारणीया स किल रामसकाशमुपगम्यावोचत् - 'अस्मद्वधः नासीदभिमतो महानुभावस्य वालिनः । अहमेव प्रत्युत तत्प्राणहरणाभिलाषुकोऽभवम् । साधुस्वभावेन तेन भ्रातृकर्तव्यं धर्मरक्षा च कृता । मयैव केवलं कामक्रोधप्रकाशो विहितः' इत्यादि ।

मृत्युसमये वाली रामं विषयीकृत्य अनेकं कटुतरवचनजातं प्रयुक्तवान्-'त्वं धर्मध्वजोऽप्यधार्मिकः तृणावृताकूपसदृशस्त्वं साधुवेशी प्रतारकः ; महात्मनः दशरथस्य पुत्रोऽयमिति परिचयदानानर्हः । .... सुग्रीवस्य प्रियकामार्थं त्वया मद्वधो विहितः । किन्तु त्वयाभ्यार्थितः सन्नहं एकस्मिन्वासर एव सीतोद्धारकर्मसमर्थोऽभविष्यम् । दुरात्मनः रावणस्य कण्ठबन्धनपूर्वकं तं जीवितमेव त्वत्समीपमुपस्थापयितुं प्रभुः स्याम्' इत्यादि । वाल्मीकिकल्पनया रामचरितमेतादृशमङ्कितमास्ते येन रामः वालिनः एतादृशनिर्भर्त्सनापात्रमेवासीत् ।

वाल्मीकिरामायणव्याख्यामनुसृत्य वालिकृताभियोगस्य प्रत्युत्तररूपं रामचन्द्रस्य वक्तव्यं किञ्चिद्दुर्बलमिव प्रतिभाति । तेन (रामेण) वाली पञ्चनखः शाखामृगः इत्यादिविशेषणैः सम्बोध्य अभिहित आसीत्—'धर्मज्ञराजर्षयोऽपि मृगयासमर्थाः' इत्यादि - किन्तु नैतिकविचारतस्तु वालिनः अपेक्षया सुग्रीवः अधिकतरं दोषभाक् । अतोऽस्माभिर्मन्यते यत् वाल्मीकिसर्जनप्रतिभायां अत्र रामचन्द्राविर्भावस्य सत्यस्वरूपपटयुपरि मानसिकदौर्बल्याच्छादनमागतम् । पूर्णावतारं च स साधारणदेहधारिदेवताकोटीमानीतवान् । अथ च वालिवधव्यापारे रामचन्द्रः सुग्रीवाय यत्प्रतिवचनं दत्तवान् तद्रक्षाविधानं तत्पुरतः सत्यरक्षा सदृशमेवापरिहार्यमासीत् ।

* * *

वालिवधसदृश एव वाल्मीकिवर्णितशूर्पणखाप्रेमपरिणामोऽपि एकः अपरः वितर्क्यविषयोऽभूत्। इयं घटना रामचन्द्रं स्त्रीजातिपीडक-रूपेण चित्रितं विधत्ते। शूर्पणखाया निर्लज्जव्यवहारेण तस्याः दौरात्म्येन च अप्रीतो रामः तां बहिष्कर्तुं निर्दिदेश। परं स्त्रीजनोपरि अरूपयोगविधानार्थं लक्ष्मणं प्रति तेनादेशो कदापि न दत्तः। रामचन्द्रः सर्वत्र धर्मायैव सर्वश्रेष्ठं स्थानं प्रतिपादितवान्। लक्ष्मणोऽपि सर्वतोभावेन रामचन्द्रस्यैवानुगमनपरो बभूव। . . .

वाल्मीकेः प्रतिभा अवश्यमेव प्रशंसनीया। तेन रामायणवर्णनमाध्यमेन एतत् दृढभावेन स्थापितं यत् वाली सुग्रीवः हनूमत्प्रभृतयो वानरजातीयास्तथा पुलस्त्यऋषिकुलोत्पन्ना रावणविभीषणप्रभृतयः राक्षसजातीया इति। तस्य लेखनीशक्तिः विंशतिशतकपर्यन्तं समग्र-मानवजातिं सम्मोहितामिव कृतवती। यदधुनापि 'हनुमान् वानरोऽभूत्' इति जनसाधारणस्य विश्वासः परन्तु एतादृशो विश्वासः कियद्वधि अवितथः अयं तु आलोचनाविषयः। यतः हनूमच्चरित्रकर्मादि-विचारतः स उच्चवर्णमनुष्यजातीय इति तु स्वीकर्तव्यमेव भवेत्।

वाल्मीकिरामायणानुसारं किष्किन्धायां हनुमान् सुग्रीवदूतरूपेण परिमन्दिने रामलक्ष्मणयोः पुरतः उपस्थितः तदा स ब्राह्मणरूपेणैवावलोक्यते। तथा रघुवीराभ्यां सार्धं देवभाषायामेव सम्भाषणपरः। हनूमता सार्धं वार्तालापेन रामः विशेषतया प्रीतः सन् सौमित्रिमुक्तवान्

"अनेन यादृशं सम्भाषणं विहितं तादृशं वेदाध्ययनं विनाऽसम्भवम्। ध्रुवमनेनानेकशो व्याकरणशास्त्राध्ययनं कृतम्। अत एव तेन स्ववचनेषु कुत्राप्यपशब्दप्रयोगो न विहितः। तस्य वचनं न द्रुतं नापि विलम्बितम्। यन्निशम्यास्मन्मानसं सानन्दमभूत्। यस्य नृपतेरेतादृशो दूतो विद्यते तत्कार्यं कथङ्कारमसफलीभवेत्?" इत्यादि हनूमन्तं वेदाध्ययनपरं ब्राह्मणमनुमीय रामचन्द्रेण न कोऽपि प्रमादो विहितः। परन्तु वाल्मीकिः सर्वत्र हनूमन्तं वानररूपेणैव वर्णयति।

जैनरामायणमतेन हनूमान् कामरूपधरोऽभूत् कोऽपि विद्याधरः। स लङ्कां प्रयातः सन् स्वात्मगोपनार्थं सीतया सार्धं वानरवेशो दृश्यते। 'कम्ब' रामायणमतानुसारं हनूमान् रामदूतरूपेणैव लङ्कां प्रययौ। तुलसीदासेनाप्युक्तम्—'दूतो न कदापि वधमर्हति। अस्य कृते अपरः कोऽपि दण्डः योग्यः।'

केषुचिद्रामायणेषु इत्थं वर्णितं उपलभ्यते यद्विभीषणेन रावणं सिंहासनच्युतं विधातुं किमपि षड्यन्त्रं रचितं, मन्त्रिमण्डलसंघटनपूर्वकं प्रतिद्वन्द्विशासनस्थापनार्थं च व्यवस्था विहिता। ..........

वालिवधात्सुग्रीवस्य राज्यप्राप्तेरनन्तरं च यदा रामलक्ष्मणौ वर्षासु चातुर्मास्ययापनार्थं प्रस्रवणगिरौ निवासतत्परावास्ताम् तस्मिन्समये विभीषणस्य दूतः तत्र रामलक्ष्मणाभ्यां सार्धं दृश्यते। यः सीताप्रवृत्ति-

प्रतिपादनपूर्वकं तदुद्धाराय विभीषणः रामचन्द्रसहायार्थं यं समयं विधातुमैच्छत् तं स्पष्टीकृतवान् । तदनुसारं च विभीषणदूतोऽपि हनूमन्तं गुप्तमार्गेण लङ्कां नीतवान् । समुद्रोल्लङ्घनकल्पना तु केवलं कष्टकरकविकल्पनामात्रम् । तुलसीदासमते 'हनूमान् कृतमशकरूपः समुद्रं समुदलङ्घयत् । अतिलघुरूपधारणपूर्वकं च लंकां प्रविष्टवान्' । तस्यामेव रजन्यां विप्ररूपेण हनूमतः विभीषणसाक्षात्कारपूर्वकं गुप्त-मन्त्रणा जाता । (कतिपयरामायणमते)

विशेषतस्तेषु दिवसेषु सुरक्षितलङ्कापुरीं प्रविश्य कस्यापि भिन्नभाषिणः पक्षे उच्चपदस्थविभीषणेन सार्धं तस्यामेव रजन्यां-मेलनं पूर्वव्यवस्थां विना असम्भवं प्रतिभाति । पुनश्च तत्र मेलने काप्यन्त रङ्गता यासीत् । (तुलसीदासमते) विभीषणः स्वकीयकृच्छ्रकथां ज्ञापयित्वोक्तवान्—'दन्तपंक्तिसंकटे रसनासदृशमहं जीवामि' इत्यादि ।

विभीषणस्य सकाशाच्छ्रुतजानकीवृत्तान्तः हनूमान् तस्यामेव निशीथिन्यां अशोकवने सीतादर्शनार्थमयासीत् । विभीषणोऽपि पत्न्याः सरमायाः सहायेन एतत्सम्बन्धिनीमखिलामपि व्यवस्थामकार्षीत् । अस्यापि प्रमाणानि विविधरामायणेभ्यः प्राप्यन्ते । तुलसीदासेनापि एतत्समर्थितमस्ते । केनापि वानरेण एतादृशकार्यस्य सम्भवो भवेदिति न भावयितुं शक्यते ।

वाल्मीकिरामायणस्य सूक्ष्मविश्लेषणतः सुन्दरकाण्डं युद्धकाण्डं च द्वयमपि कविकल्पनारूपमिति भाति ध्रुवं सम्पूर्णरामायणमेव एकं विराट् महाकाव्यं यत् खलु निर्दोषसुचिन्तितविपुलकल्पनाभिः विरचितमास्ते, एतस्मिन् कवेः मानसचित्रस्यैव विशेषप्राधान्यं परिलक्ष्यते। रामचरितं पुरो निधाय महाकविना धर्मराजनीतिसमाजनीतीनां मानवतासाम्यवादमैत्रीणाम् स्वाधीनतायाः राजतन्त्रप्रजातन्त्रसमाजतन्त्राणां च तत्वानि तद्युगीयादर्शानुसारं उच्चपदे प्रतिष्ठापयितुं यः कोऽपि महत्तमः प्रयासो विहितः स सम्पूर्णोऽपि स्पष्टतया रामायणे परिलक्ष्यते। एतद्व्यतिरिक्तं प्रजारञ्जनादर्शमध्ये चरमं अप्रतिहतं च राजतन्त्रं प्रति महाकवेरनास्था सूचिता जायते। तथैव पारिवारिकक्षेत्रे सामाजिकसम्पर्कविषये च सत्यनिष्ठायाः सौभ्रात्रस्य प्रतिष्ठाप्रयासोऽपि रामायणे सर्वत्र दृग्गोचरो भवति। अनेकशतकपर्यन्तं 'रामराज्यकल्पनायां या भारतीयजनसाधारणस्य राष्ट्रियाकांक्षा परिचयः प्राप्यते स केवलं यूरोपखण्डे अष्टादशशतकोत्थित 'प्रजाहितकारि प्रभुसत्ताया (Benevolent Despotism) प्रतिच्छायामात्रं नास्ति। यतः 'प्रजाहितकारि प्रभुसत्तायां' राजाधिकारनियमनार्थं न कस्यापि तात्विकोपायस्योल्लेखः। एतस्मिन्विषये विचारे क्रियमाणे श्रीरामचन्द्रः प्रकृतधर्मस्यानुशासनबद्धो नृपतिमात्रम्। तेन न क्वापि स्वकीयदिव्याधिकार (Divine Right) स्थापनार्थं प्रयत्नो विहितः। नापि तेन राजार्हमिति कृत्वा निजक्षमतां सर्वोपरि स्थापयितुं प्रयतितम्। आदर्श-

प्रजारञ्जकनृपतिरूपेणैव वाल्मीकिः रामजीवनलक्ष्याङ्कनमकार्षीत् । अस्मिन्विषये बंकिमचन्द्रस्य (विविधरूपक, प्रथमखण्ड, उत्तरचरित) उक्तिः विचारार्हा । 'साम्राज्यशासनगृहीतव्रतानां प्रजानुरञ्जनमेव महान्धर्मः । ग्रीसरोमयोरितिहासेऽस्यानेकदृष्टान्ता लभ्यन्ते । किन्तु एतादृशव्रतस्य सीमापि वर्तते । तादृशसीमातिक्रमः दोषरूपेणैव परिणमति ।........अनेके राजानः केवलं स्वार्थसिद्ध्यर्थमेव प्रजानुरञ्जका आसन् । परं रामचन्द्रस्य चरिते नासीत्स्वार्थपरतामात्रम् । वस्तुतः स स्वार्थहेतुप्रजानुरञ्जनपर एव नाभूत् । प्रजानुरञ्जनं शासकानां कर्तव्यमेव, तथा स इक्ष्वाकुवंशीयानां कुलधर्मः इति कृत्वैव तत्र (धर्मे) तेषामेतादृशं दार्ढ्यम् ।

इदानीं आधुनिकसमाजतन्त्रनाम्ना समाजवादाख्यया वा यत्किमपि ज्ञायते तद्विषयकः प्रभावः स्वभावत एव वाल्मीकिरामायणे द्रष्टुमशक्यः । अतः सामाजिक-अर्थनीतिः आधारोपरि प्रतिष्ठितस्य तादृशतत्त्वद्वयस्य भारते अस्तित्वमेव नासीत् । तथापि ग्रीकलेखक 'प्लेटो' इत्यस्य प्रजातन्त्रनाम्निग्रन्थे (Republic) समाजवादाभ्यन्तरे समानता हेतोः कस्यापि आग्रहस्य अभिव्यक्तिर्लक्ष्यते । वाल्मीकिरामायणेऽपि रामचन्द्रस्य राज्यशासनप्रणालीवर्णने तस्य जीवनचर्यायां च एतस्या एव मानवशाश्वतसमतायाः आकांक्षाभिव्यक्तिः परिलक्ष्यते ।

गुहस्यालिङ्गनबाहुपाशबन्धनघटना तस्यात्युदारहृदयस्य परिचायिका। तस्मिन्प्रसङ्गे श्रीरामचन्द्रं प्रति स्वामिनः विवेकानन्दस्य श्रद्धाञ्जलिः विशेषतो विचारणीया—

'आचण्डालाप्रतिहतरयो यस्य प्रेम प्रवाहो

लोकातीतोऽप्यहह ! न जहौ लोककल्याणमार्गम् ।' * इत्यादि।

महाकवेः लोककल्याणोद्देश्येन मानवसमाजस्य देशकालोपयोग्युच्चादर्शप्रवर्तनार्थमयं प्रयत्नः अतिमहानासीत् । स च प्रयत्नः अनेकांशतः सफलीभूत इत्यपि वक्तुं शक्यते । अयमपि महतः आश्चर्यस्य विषयः यद्रामायणग्रन्थः मानवजातेः विचारान् आदर्शांश्च सहस्रशोवर्षपर्यन्तम् एतावत्प्रभावितान् कुर्वन्नवस्थितः यत्समस्तहिन्दुजाते

---

* यद्यपि वाल्मीकिरामायणोत्तरकाण्डे तपस्यारतशम्बूकनाम्नः शूद्रस्य शिरश्छेदरूपघटनोल्लेखो द्रष्टुं शक्यते तथापि तद्घटनायाः सत्यरूपेण स्वीकारेऽस्माकं द्विविधो बोधो जायते । न केवलमिदम्, इयं घटना वाल्मीकिलिखिता न वा इत्यपि शङ्कास्पदम् । यतः वाल्मीकिः एतादृशः अनुदारः आसीत् इति भावनयाऽपि अस्मदन्तःकरणं कुंठितं भवति । यैरेतादृशघटनाया रचनाकृता तेषामिदमेव वक्तव्यम् यत्तस्मिन्युगे नाभूच्छूद्रादिकानां धर्माचरणाधिकार इति ।

न्तःकरणे 'रामायणवर्णिताः यावद्घटना ऐतिहासिकसत्यरूपाः' इत्येव धारणा बद्धमूला अजायत ।........

वाल्मीकिरामायणे स्वाभाविकास्वाभाविकघटनानां यद्विचित्र सम्मिश्रणमवलोक्यते तद्रामचन्द्रस्यातिमानुषत्वप्रतिष्ठापनार्थमेव सुस्पष्टतया प्रस्तुतम् । किन्तु तद्द्वारेण त्रेतायुगस्य सभ्यताया वास्तविकं रूपं कियत्परिमाणं यावत् तुहिनाच्छन्नमिवालक्ष्यते । यद्यपि तस्मिन्युगे केषामपि मानवानां सहस्रवर्षपर्यन्तं दीर्घजीवनवार्ताऽस्माभिः पठ्यते तथापि ते वर्तमानयुगीयमानवतुल्यमेव क्षुत्पिपासाकातरा रोगशोकाभिभूताश्चासन् । तथा साधारणमनुष्यजीवनस्य घातप्रतिघातौ, क्षमा प्रतिहिंसे गुरुत्वनीचत्वे भोगाकांक्षा च इत्येते सर्वे प्रचुरपरिमाणेन तेषामपिजीवने परिलक्षिता जायन्ते । यद्यपि तद्युगीयमनुष्यैः सार्धं देवादीनां निर्बाधमिश्रणं प्राप्यते तथा ते सर्वेऽपि देवतानामनेकशः देहधर्मिणो लक्ष्यन्ते ।......

अपिचवाल्मीकिरामायणं सर्वापेक्षया रहस्यमयपुरुषरूपेण हनूमतश्चरित्राङ्कनं विधीयते । कविना यत्किमपि असम्भवनीयं विहितं तदखिलं हनूमतः कारणादेव । यस्याः कस्या अपि समस्याया असङ्गतेर्वा सृष्टिर्भवेत् तत्रैवाविर्भवति हनूमान् । समुद्रोल्लङ्घनं, सीतान्वेषण एकस्यामेव क्षणदायां शतयोजनेभ्यः ओषधिपर्वतानयनं, अणुमहद्उभयप्रमाणशरीरधारणं इत्यादि सर्वत्रस्थलेषु हनूमानेव । प्रायः कवि-

वाल्मीकेर्लक्ष्यमासीद्योगशक्तिप्रकाशः भक्तिभक्तयोर्महत्त्वाघोषणा वा । ध्रुवं सर्वेष्वैतिहासिकेषु पुराणजातीयकेषु काव्येषु च एतादृशचमत्कारिस्वरूपाणामलौकिकघटनानां वा समावेशः कृतो दृश्यते । ग्रीकपुराणेषु तु सम्भवासम्भवघटनानां सहास्तित्वं प्रायः सर्वास्वपि कथास्ववलोक्यते । वाल्मीकिरामायणस्य अलौकिकघटनाविवरणमपि एतेनैव दृष्टिकोणेन स्वीकर्तव्यमिति भाति ।

वाल्मीकिरामायणस्य आंशिकैतिहासिकी आधारशिला सर्वसम्मता । तत्र याः काश्चन घटना असंगतिपूर्णा अवलोक्यन्ते तत्र हेतुभूताः सन्ति कविकल्पना, तत्कालीना भौगोलिकपरिस्थितिविषये सीमितं ज्ञानं, प्राचीनार्वाचीनादर्शयोः पार्थक्यं सर्वोपरि च विभिन्नलेखकानां निर्ममो हस्तक्षेपः ।........

रामायणपाठस्य माध्यमेन त्रेतायुगीय-मनुष्यसमाजजीवनयात्राणां यदालेख्यमुपलभ्यते । तत् विंशतिशतकीयशिक्षितमनुष्यपक्षे सर्वांशेन स्वीकर्तुमशक्यम् । अपरं च रावणस्य स्वर्गविजयः मेघनादद्वारा देवराजेन्द्रस्य लाञ्छनम्, लङ्कायुद्धे इन्द्रप्रतिपादितरथमारुह्य रामेण सह रावणस्यायोधनम् इत्यादयोऽनेकघटनाः प्रहेलिकाकल्पा दृश्यन्ते । एतदखिलं अलंकाराकारेण अत्युक्तिरूपेण वाङ्गीकर्तव्यम् अतएव पाठकगणयाथार्थ्येन किमपि बोद्धुमसमर्थः ।........

प्राक्तनतत्वान्वेषिणां कृते वाल्मीकिरामायणं त्रेतायुगीयसमाज-नीतिधर्मप्रभृतीनामध्ययनार्थं अमूल्योऽक्षयश्च निधिरेव । भूगोलजीव-तत्वयोः परलोकदेवलोकानां च विषये कीदृश्यः प्राचीनधारणा आसन् तासामपि कल्पनाः एकद्ग्रन्थसकाशात् संग्रहीतुं शक्यन्ते ।

शास्त्रश्रद्धापराणां प्राचीनमार्गावलम्बिनां च मतेन वाल्मीकि रामायणरचनाकालः ख्रिस्तपूर्वचतुःसहस्रवर्षाणां समीपः * किन्तु विदुषां मते रामायणरचनासमयः ख्रिस्तपूर्वचतुर्थशतकमभिमतः । रामायणाध्ययनात् एतत्कालीनधर्मसमाजजीवनयात्राणां परिष्कृतं

---

* वाल्मीकिरामायणरचनाकालः ख्रिस्तपूर्वं चतुःसहस्रवर्षाणि इति सिद्धान्तस्वीकारात्पूर्वं तत्सम्बन्धिनः केऽपिप्रश्ना विचारणीयाः सन्ति । ख्रिस्तपूर्वं चतुःसहस्रवर्षाणि अर्थात् वर्तमानकालतः षट्सहस्र-वर्षपूर्वं यद्यपि रामचन्द्रस्याविर्भावसमयः किन्तु अयं समयः वैदिककाल इत्युच्यते । भाषाशास्त्र-(Philology) दृष्टितः तस्मिन्समये 'भाषा' वैदिकसंस्कृतभिन्ना प्रचलिता नासीत् । वेदाः ब्राह्मणानि उपनिषदः आरण्यकानि परतः सूत्राणि च एतेषां क्रमविकासः अर्थात् संस्कृत-भाषायाः क्रमविकासः सर्ववादिसम्मतः । भाषाशास्त्रानुसारं वाल्मीकि रामायणस्य भाषावर्तमानकालतः चतुःशताधिक द्विसहस्रवर्ष प्राचीना ।

चित्रं लब्धुं शक्यते । ब्राह्मणाः समाजनेतारः आसन् । वनवासिनौ रामलक्ष्मणौ प्रचुरमांसाहारिणौ आस्ताम् ।........सीतावनवासमार्गे गंगोत्तरणसमये कृताञ्जलिर्भूत्वा गंगां प्रार्थितवती—'मातः! नरश्रेष्ठे रघुवीरे वनवासात्प्रत्यावृत्य सिंहासनाधिष्ठिते सति अहं तव प्रीतिकामनार्थं सुरापूर्णसुवर्णकलशान् मांसमिश्रितभोगं च निवेदयिष्यामि, त्वत्तीरगतदेवकुलेषु तीर्थपूजां च समर्पयिष्यामि ।'........

लङ्कापुर्यां रावणप्रासादवर्णनं च प्रत्यक्षदर्शिपर्यटकविहितवर्णनमपि परिम्लापयति । लङ्कामुपगतो हनुमान् रावणविभीषणसीताप्रभृतिभिः सार्धं कस्यां भाषायां वार्तालापं कृतवान् ? एषोऽपि अल्पविस्मयविषयो नास्ते ।....

वाल्मीकिरामायणगत हनूमतः वर्णने एतदपि द्रष्टुं शक्यते यल्लङ्कायां ब्राह्मणाः (ब्रह्मराक्षसा) आसन् । ते नित्यवेदपाठेन रावण-

---

यास्कमुनिना प्रथमं वैदिकं व्याकरणं विरचितम् (निरुक्तम्) अस्माच्च कालादारभ्य वेदषडङ्गानि शिक्षाकल्पव्याकरणनिरुक्तछन्दोज्योतिषरूपाणि विकसितानि पाणिनिसमयपर्यन्तं - खिस्तपूर्वसप्तमशतकपर्यन्तम् । पाणिनिना ऽपि स्वकीयाष्टाध्यायीग्रन्थे प्रतिपादितम् एवं वेदे भवति, एवं भाषायां भवति एवं वेदे लोके (भाषायां) च भवति सूत्रसाहित्यस्य समयः खिस्तपूर्वसप्तमशतकमारभ्य तृतीयशतकपर्यन्तम् । अतः वाल्मीकिरामायणस्य भाषा अस्मात्कालादर्वाचीना ।

निद्राभङ्गं कृतवन्तः तथा विविधयज्ञानुष्ठानतत्पराश्चाभूवन् । वाल्मीकिकृतवर्णनानुसारं अयोध्यायां रामराज्याभिषेकसमये, किष्किन्धायां सुग्रीवाभिषेककाले लङ्कायां विभीषणाभिषेककाले च अनुष्ठानप्रकारः सर्वांशेन समान एव ।

वाल्मीकिनाङ्कितानि जीवनालेख्यानि सर्वाण्यपि उपमानशून्यानि सर्वत्र आदर्शस्थानीयानि च । कुब्जामन्थराया अपि या भूमिका कविना चित्रिता सापि जगति निरुपमा । कुब्जायाः स्वामिभक्तिरपि अतुलनीया । प्रभुकल्याणकामनैव तस्या एकमात्रं व्रतम् । यावच्चरित्राणां वैशिष्ट्यावलोचनार्थं नात्र स्थानम् । दशरथस्य महिषीत्रयमपि देवीसमानम् । न तासां गुणानामुपमानम् । सन्तानवात्सल्यं तासां निखिलव्यापाराणां मूलस्रोतः । तिस्रोऽपि महिष्यः स्वस्वसन्तानकल्याणसाधने सर्वतोभावेन सचेष्टा आसन् । अत एव अन्योन्यविरोधि स्रोतसां सङ्गमस्थले उत्तालतरङ्गसृष्टिरजनि । मातृणां सन्तानवात्सल्यं कियद्गभीरं पवित्रं चाभूदिदमपि राज्ञीत्रयजीवननाट्याभिनयेऽवलोकयितुं शक्यम् ।

सीताजीवनचरितं त्यागस्य पवित्रतायाश्च जीवन्ती कथास्ते । सीतयोक्तमासीत्—

"पतिर्हि देवता नार्याः पतिर्बन्धुः पतिर्गुरुः ।
प्राणैरपि प्रियं तस्माद्भर्तुः कार्यं विशेषतः ॥"

इयमेव सीताचरितानां सजीवव्याख्या तया स्वकीयसमग्रजीवने विहितावलोक्यते। तयाऽसत्यं कदापि नोक्तम् परं केवलमान्तरिकभाव एव प्रकटितः। सीतापवित्रताया अयमेव पुण्यप्रभावभारतस्य ग्राम-मात्रं गृहमात्रं चिरन्तनतीर्थं परिणतं विहितवान्। तत्फलस्वरूपं च आधुनिकसभ्यतायाः स्रोतः अभिनवविलासिजीवनं च भारतीय-ललनाः प्रभाविता विधातुमिदानीमपिनालम्। जानकीसतीत्वमलाक्षित-भावेन स्त्रीजातिषु अपूर्वपावित्र्यं सदाचारमर्यादां च जागृतां विधाय अस्माकं गृहस्थाश्रमं पवित्राश्रमे परिणतं चकार। सीता न केवलं नाममात्रम्....नापि पदवीमात्रम् नारी मातृदेवीत्वप्रतीकरूपेण सा अस्मदभ्यन्तरे चिरस्थायि स्वाधिकारं स्थापितवती। एतादृशचिरन्तन जीवनचरित्राङ्कनार्थमेव वाल्मीकिरस्मदादीना पूजार्हः।

अस्मिञ्जगति सीता दशरथनृपतेः पुत्रवधूरूपेण तथा महात्मनः पुण्यश्लोकरामचन्द्रस्य धर्मपत्नीरूपेण चावतीर्णा, किन्तु सा चिरसी-मन्तिनीनां हिन्दुरमणीनां अक्षयसिन्दूरबिन्दुरूपेण प्रतिभासिता। अद्यापि वयं तामेव चिरगौरवहेतुं सतीमूर्तिमवलोक्य कृतार्था भवामः।...

विवेकानन्दस्वामिनः दक्षिणभारते एकस्यां वक्तृतायां जानकी जीवनलोचनाप्रसंगे प्रोक्तवन्तः—'भारतीयरमणीनां यद्रूपं समुत्थितं सीता एव तद्रूपस्यादर्शः। नारीचरिते यावन्तो भारतीयदर्शाः सर्वे-ऽपि सीताचरित एव केन्द्रीभूताः। पुनः अखिलार्यावर्तभूमौ च सहस्र-

शौर्यपर्यन्तं ते आबालवृद्धवनितं पूजां प्राप्नुवन्ति । महामहिमशालिनी सीता स्वयं शुद्धता सती शुद्धतरा, सहिष्णुतायाश्च श्रेष्ठतर आदर्शः, चिरकालेनैव सा एव सपर्याभाजनम् । . . . सीता अनन्तकालपर्यन्तं अस्मज्जातीयदेवतारूपेण विद्यमाना स्थास्यति । ......भारतीयनारीभिः सीतापदाङ्कानुसरणपूर्वकं स्वकीयोन्नतिविधानप्रयत्नः कार्यः । अयमेव भारतीयनारीसमभ्युदयस्यैकमात्रः पन्थाः ।

समग्रभारतवासिनामग्रतः सीतासहिष्णुताया उच्चतमादर्शरूपेण वर्तते ।....'सीता' इति नाम्नैव भारते यत्किमपि शुभं विशुद्धं वा यत्किमपि पुण्यतमं च तस्याखिलस्यापि परिचायकम् । नारीगणमध्ये वयं कञ्चिदपि गुणं नारीजनोचितं मत्वा तस्मिञ्छ्रद्धामादरं च कुर्मः तदखिलमपि 'सीता' नामोच्चारणमात्रेणैव परिज्ञायते । ........ सीता भारतीयभावस्य प्रतिनिधिस्वरूपैव, सा मूर्तिमती भारतमातैव ।'

रावणवधानन्तरं हनूमान् अशोकवनमुपेत्य सीतां प्रति रामप्रवृत्तिं ज्ञापयामास । अत्यधिकहर्षफलस्वरूपं सीतायाः वाक्यस्फुरणमप्यसम्भवं जातम् । अनन्तरं हनूमानब्रवीत्—'देवि ! एताः सर्वाः क्रूरप्रकृतयः चेटयः त्वामनेकप्रकारमपीडयन्; अनुमन्यसे चेत्तर्हि मुष्टिप्रहारैः चरणाघातैः केशाकर्षणैर्वा एताः सर्वा अपि घातयिष्यामि ।'

सीता कातर्यस्तम्भितकण्ठा सती व्याजहार—'हनुमन्! एताः खलु पार्थिवाश्रिताः तद्वशीभूताश्च दास्यः केवलम्; एतासामुपरि कः खलु कोपं कर्तुमलम्।........तास्तु मम क्षमापात्रं यतः स्वप्रभोरादेशानुसारमेवैता मयि दुर्व्यवहारपराः। इदानीं रावणनाशानन्तरं नैवमाचरिष्यन्ति। श्रूयतामेकं प्राचीनसुभाषितम्—

'न परः पापमादत्ते परेषां पापकर्मणाम्।
समयो रक्षितव्यश्च सन्तश्चारित्रभूषणाः॥

पापानां वा शुभानां वा वधार्हाणामथापि वा।
कार्यं कारुण्यमार्येण न कश्चिन्नापराध्यति॥'

लक्ष्मीरूपिणी सीता क्षमारूपिणी देवी आसीत्। सा खलु श्रद्धा शान्ति कान्ति दयातुष्टि करुणारूपेण अस्मदभ्यन्तरं चिरप्रतिष्ठिता। सीतावनवासजीवनं सर्वोच्चमहिममण्डितं जीवनम्। राज्याभिषेकानन्तरं वनवासप्रस्तावे रामचन्द्रमुखमण्डलं वेदनाच्छटास्फुरणालङ्कृतमभूत् कौसल्याजनन्यै एतन्मर्मच्छेदिसमाचारनिवेदनसमये। तस्य कण्ठः शङ्कान्वितः कम्पितस्वरश्चाजायत; किन्तु सीतया किं विहितम्? 'मया स्वकीयप्राणवल्लभेन सार्धं वनवासार्थं गन्तव्यमितिकृत्वा सा तादृशसंवादश्रवणेन नाधिगता क्वामपि कातरताम्। अत एव क्रन्दन्ती सा व्याजहार—'त्वया सार्धमरण्यं यास्यामि, विहाय त्वां स्वर्गीयसुखला

भोऽपि मह्यं न रोचते। एतस्याः सुरम्यायोध्यानगर्याः समृद्धसौधावलि-च्छायातोऽपि प्रियतमस्वामिपदच्छाया मेऽधिकतररम्या प्रतिभाति।

रामचन्द्रेण अरण्यवासकष्टशतचित्रं सीतासम्मुखमुपस्थापितम्, परं दृढतमोऽभूत्सीतासङ्कल्पः। सा व्याजहार—'अपि भवान् इमं जनं केवलं तुच्छशय्याशायिनीं मन्यते? मया तु ब्रह्मचर्यपालनपूर्वकं त्वया साकं वनवासो विधास्यते। ये खलु इन्द्रियसुखाभिलाषिणः तेषामेव प्रवासः कष्टकारकः।.... त्वया सार्धमेव मे स्वर्गसुखम्, विरहे तु नरकवासदुःखम्। एतादृशनिश्चयं मनसि कृत्वा प्रीतमनसां वनवासे नेतुमर्हसि।'

श्रुतसीताकातरवचनो रामचन्द्रः प्रत्यब्रवीत्—'देवि! त्वामित्थं दुःखभाजनं विधाय स्वर्गसुखानुभवमपि नाभिलषामि।

जनकतनया यत् तिरस्कृतनाथशतप्रतिषेधा वनं प्रचलिता नेयमबाध्यता अपि तु प्रकृतवरयता स्वाभाविकी स्वामिभक्तिः। राजान्तः पुरवासिन्याः पक्षे वनवासजीवनेन सहात्मनस्तन्मयीकरणम्। इदमेव सीताजीवनस्योत्कृष्ट सौन्दर्यम् निरुपमा अभिव्यक्तिश्च।

पञ्चवटीवनगतपर्णशालायां ब्राह्मणवेशी रावणः सीता दर्शन-विमोहितः सन् उवाच—'अयि! रौप्यकाञ्चनवर्णे! त्वामहंकमलि-नीमिवोत्प्रेक्षे। अपि त्वं ह्री-श्री-कीर्ति-लक्ष्मीणामन्यतमा? अष्टसिद्धि

रूपिणी स्वैरसञ्चारिणी रतिर्वा!...हे असितेक्षणे माल्यगन्धवस्त्राणि सर्वाण्यपि त्वच्छरीरसम्पर्केण श्लाघ्यतराणि प्रतिभासन्ते। तव स्वामिनमपि धन्यं मन्ये। *इत्यादि अब्राह्मणोचितसम्भाषणानन्तरं रावणः दत्तात्मपरिचयः सन् निजाभिप्रायं स्फुटीचकार। सा तु भ्रुकुटी भङ्गपूर्वकं प्रदीप्तकण्ठं तारस्वरेणोक्तवती—'अहं महाचलस्येव स्थिरस्य महासमुद्रस्येव गभीरस्य महेन्द्रसदृशपराक्रमस्य रामस्य पतिव्रता अर्धाङ्गिनी त्वं तु शृगालः सिंहीं कामयते! मन्दबुद्धे! त्वं क्षुधाभिभूत सिंहमुखात् रदनोत्पाटन चेष्टापरः, जिह्वया क्षुरलेहनप्रसितश्च। मक्षिकास्वादितं घृतं भक्षितं सन्न जीर्णतां याति प्रत्युत मक्षिकैव तत्र मृत्युमेति। रामे विद्यमाने तत्पत्नीहरणेन तवापि सैव गतिर्भविष्यति।'

---

*विभिन्नरामायणेभ्यः संगृहीता संग्रथिता च सीताहरणघटनावलिः अत्र संक्षेपतोऽनिवर्ण्यते सीताहरणं तु नासीदतिसुकरं कार्यम्। विविधोपायैः प्रयतमानोऽपि निष्फलीभूतव्यापारः सन् रावणः अन्ते एतादृशदुरूहकर्मसम्पादनार्थं स्वयमेवोपस्थितः।

प्रथमं शूर्पणखाधिपत्ये चतुर्दशसहस्रसंख्याकं सुसंघटितं विशेषसैन्यं दुर्धर्षसेनानायकांश्च सीतां बलपूर्वकं हर्तुं रावणः प्रेषितवान्। एतेन विफलमनोरथेन सता रावणेन मारीचप्रभृतयः गुप्तचरा नियुक्ताः। तेऽपि ऋषिमुनिच्छद्मवेशिनः पञ्चवटीं परितः आवृत्य स्थिताः। रामस्य

रावणः एतादृशवचनश्रवणार्थं नासीत्प्रस्तुतः स तु विविधदम्भ-प्रदर्शनपूर्वकं आत्मश्लाघां कर्तुमारेभे । तेनाभिदधे—'अङ्गुल्या न समो रामो मम युद्धे स मानुषः' एतस्यापि नाजनी कोऽपि परिणामः । सीता एतादृशदृढस्वरेणोक्तवती— 'दुष्टबुद्धे बन्धनं वधो वा विधीयताम् ।

---

पञ्चवटीं प्रति आगतानन्तरमेव सीताहरणस्य रामलक्ष्मणवधस्य च गुप्तषड्यन्त्रं नानाभावैः प्रचलितम् । सर्वमपीदं नासीद्रामस्याविदितम् । अतस्तेनापि अगस्त्यमुनेः सकाशात् प्रचुरमस्त्रशस्त्रादिकमानीय तमाश्रमं एकस्मिन्महति दुर्गे परिणतमकार्षीत् । एतेनैव सम्मुखसमरे एकस्मिन्नेव दिने चतुर्दशसहस्रसंख्याकराक्षससैन्यस्य विनाशसम्भवो जातः ।

रावणः गुप्तचरैः सह कृतपरामर्शः सन् सीताहरणस्यायोजनं पूर्णतां नीतवान् । प्रचुराः शरीररक्षका रथाश्च तेनात्मना सार्धमानीताः आसन् । अस्मिन्दिने निर्दिष्टसमये रावणस्य गुप्तचरैः विभिन्नदिग्भ्यः अनेके सुन्दरचित्रहरिणा बन्धनमुक्ताः विहिताः । हरिणा आश्रमं लोकांश्च विलोक्य विपरीतदिक्षुवेगेन पलायितुमारब्धाः । तानवलोक्य करधृतबाणशरासनौ रामलक्ष्मणौ मृगयार्थं निर्गतौ । अस्मिन्नेव सुयोग्यावसरे सशस्त्रः रावणः स्वगुप्तरक्षकदलसमेतः सीतां सचकितं हृत्वा पूर्वरक्षितरथोपरि चावस्थाप्य नीतवान् । सीतार्तनादं निशम्य 'हंस-पक्षयुतः' तत्स्थानीयः कश्चिद्वृद्धमृगाजीवः (जटायुः) रावणरथस्य गतिरोधं विधायोपस्थितः । रावणेन सार्धं युद्धे च मर्माहतो बभूव ।

4

ममैषदेहः निर्व्यापारः । एतच्छरीरस्य जीवनस्य वा रक्षा नेदानीमुचिता ।'

वृथा वाग्वितण्डायां समयमनतिवाह्य रावणः हिंस्रमूर्तौ आत्मानं परिणमय्य वामहस्तेन सीताकेशपाशं दक्षिणहस्तेन ऊरुद्वयं चाकलय्य सीतां समुत्तोल्य च रथोपरि स्थापयामास ।

रामः दुर्वृत्तरावणस्य कवलीकरणात् सीतोद्धारं विधातुमसमर्थः आसीत् । परं सीता निजतेजसैव स्वकीयरक्षां कृतवती । तत्तेजसः सम्मुखं रावणः स्वशिरोवनतये बाधितो जातः । तां प्रतिस्वश्रद्धामर्पयामास । रामेण सार्धं पुनर्मेलनस्य स्वर्गीया आशैव सीतां जीवितामरक्षत् । सीतातेजसैव लङ्कादहनं रावणमृत्युश्च अभूताम् ।

---

तस्मान्मुमुर्षोर्जटायोः सकाशादेव रामेण सीताहरण वृत्तान्तोऽधिगतः । रावणः रासभोढरथेन सीतां समुद्रोपकूलपर्यन्तं नीत्वा जलयानेन च समुद्रमुल्लंघ्य सीतां गृहीत्वा लङ्कां प्रविष्टः ।

वि० द०—अनेकरामायणमतानुसारं सीतां प्रति रावणस्य प्रच्छन्नोऽनुरागो बभूव । सीतास्वयंवरसभायां रावणः हरधनुरुत्तोलनेऽसमर्थः सन् विशेषरूपेण निराशः अपमानितश्च भूत्वा लङ्कां प्रतिनिवृत्तः । रामचन्द्रस्य सीतया सार्धं वनवासगमनानन्तरं रावणः सीताहरणार्थं विविधायोजनप्रसितो बभूव ।

सीता हिन्दुरमणीमात्रस्याभ्यन्तरं लज्जाविनयदैन्यैः कठोरता सहिष्णुताभ्यां, पवित्रतात्मसमर्पणरूपेण च दीर्घं शतशो वर्षपर्यन्तं निभृतं स्वे महिम्नि विराजमाना तिष्ठति। न केवलं सीता भगवतः सृष्टिः। सा खल्वासीद्भगवतो दानम्। सीतायाः मूर्तिः आत्मत्यागस्य मूर्तिः स्वर्गीय पावित्र्यस्य मूर्तिः। तस्याः प्रेम क्षमा च सार्वजनीना। तस्यास्तदेव प्रेम शान्तिरूपेण दास्यरूपेण वात्सल्यरूपेण सत्यमाधुर्य-रूपेण च विकसितमजायत।

अभेदरूपाभ्यां रामसीताचरणाभ्यां नमः

इति शम्।

## मङ्गलाचरणम्*

बालकाण्डम्—

वर्णानामर्थसङ्घानां रसानां छन्दसामपि ।
मङ्गलानां च कर्तारौ वन्दे वाणीविनायकौ ॥ १ ॥

भवानीशङ्करौ वन्दे श्रद्धाविश्वासरूपिणौ ।
याभ्यां विना न पश्यन्ति सिद्धाः स्वान्तःस्थमीश्वरम् ॥ २ ॥

वन्दे बोधमयं नित्य गुरु शङ्कररूपिणम् ।
यमाश्रितो हि वक्रोऽपि चन्द्रः सर्वत्र वन्द्यते ॥ ३ ॥

सीतारामगुणग्रामपुण्यारण्यविहारिणौ ।
वन्दे विशुद्धविज्ञानौ कवीश्वरकपीश्वरौ ॥ ४ ॥

उद्भवस्थितिसंहारकारिणीं क्लेशहारिणीम् ।
सर्वश्रेयस्करीं सीतां नतोऽहं रामवल्लभाम् ॥ ५ ॥

---

* गोस्वामि - श्रीतुलसीदासकृतरामचरितमानसस्य प्रतिकाण्डम् आदि स्थितमङ्गलश्लोकानां संग्रहः ।

यन्मायावशवर्ति विश्वमखिलं ब्रह्मादिदेवासुरा
यत्सत्वादमृषेव भाति सकलं रज्जौ यथाहेर्भ्रमः ।
यत्पादप्लव एक एव हि भवाम्भोधेस्तितीर्षावतां
वन्देऽहं तमशेषकारणपरं रामाख्यमीशं हरिम् ॥ ६ ॥

अयोध्याकाण्डम्—

नानापुराणनिगमागमसम्मतं यद्
रामायणे निगदितं क्वचिदन्यतोऽपि ।
स्वान्तःसुखाय तुलसीरघुनाथगाथा-
भाषानिबन्धमतिमञ्जुलमातनोति ॥ ७ ॥

वामाङ्के च विभाति भूधरसुता देवापगा मस्तके
भाले बालविधुर्गले च गरलं यस्योरसि व्यालराट् ।
सोऽयं भूतिविभूषणः सुरवरः सर्वाधिपः सर्वदा
शर्वः सर्वगतः शिवः शशिनिभः श्रीशङ्करः पातुमाम् ॥

प्रसन्नतां या न गताभिषेकतस्तथा न मम्लौ वनवासदुःखतः ।
मुखाम्बुजश्री रघुनन्दनस्य मे सदास्तु सा मञ्जुलमङ्गलप्रदा ॥९॥

नीलाम्बुजः श्यामलकोमलाङ्गं सीतासमारोपितवामभागम् ।
पाणौ महासायकचारुचापं नमामि रामं रघुवंशनाथम् ॥ १० ॥

आरण्यकाण्डम्—

मूलं धर्मतरोर्विवेकजलधेः पूर्णेन्दुमानन्ददं
वैराग्याम्बुजभास्करं ह्यघहरं ध्वान्तापहं तापहम् ।
मोहाम्भोधर पुञ्जपाटनविधौ खे सम्भवं शङ्करं
वन्दे ब्रह्मकुले कलङ्कशमनं श्रीरामभूपप्रियम् ॥ ११ ॥

सान्द्रानन्दपयोदसौभगतनुं पीताम्बरं सुन्दरं
पाणौ बाणशरासनं कटिलसत्तूणीरभारं वरम् ।
राजीवायतलोचनं धृतजटाजूटेन संशोभितं
सीतालक्ष्मणसंयुतं पथिगतं रामाभिरामं भजे ॥ १२ ॥

किष्किन्धाकाण्डम्—

कुन्देन्दीवरसुन्दरावतिबलौ विज्ञानधामावुभौ
शोभाढ्यौ वरधन्विनौ श्रुतिनुतौ गोविप्रवृन्दप्रियौ ।
मायामानुषरूपिणौ रघुवरौ सद्धर्मवर्मौ हितौ
सीतान्वेषणतत्परौ पथिगतौ भक्तिप्रदौ तौ हि नः ॥

ब्रह्माम्भोधिसमुद्भवं कलिमलप्रध्वसनं चाव्ययं
श्रीमच्छम्भुमुखेन्दुसुन्दरवरे संशोभितं सर्वदा ।
संसाराभयभेषजं सुखकरं श्रीजानकीजीवनं
धन्यास्ते कृतिनः पिबन्ति सततं श्रीरामनामामृतम् ॥ १४॥

सुन्दरकाण्डम्—

शान्तं शाश्वतमप्रमेयमनघं निर्वाणशान्तिप्रदं
ब्रह्माशम्भुफणीन्द्रसेव्यमनिशं वेदान्तवेद्यं विभुम् ।
रामाख्यं जगदीश्वरं सुरगुरुं मायामनुष्यं हरिं
वन्देऽहं करुणाकरं रघुवरं भूपालचूडामणिम् ॥ १५ ॥

नान्या स्पृहा रघुपते ! हृदयेऽस्मदीये
सत्यं वदामि च भवानखिलान्तरात्मा ।
भक्तिं प्रयच्छ रघुपुङ्गव ! निर्भरां मे
कामादिदोषरहितं कुरु मानसं च ॥ १६ ॥

अतुलितबलधामं स्वर्णशैलाभदेहं
दनुजवनकृशानुं ज्ञानिनामग्रगण्यम् ।
सकलगुणनिधानं वानराणामधीशं
रघुपतिवरदूतं वातजातं नमामि ॥ १७ ॥

लङ्काकाण्डम्—

रामं कामारिसेव्यं भवभयहरणं कालमत्तेभसिंहं
योगीन्द्रज्ञानगम्यं गुणनिधिमजितं निर्गुणं निर्विकारम् ।
मायातीतं सुरेशं खलवधनिरतं ब्रह्मवृन्दैकदेवं
वन्दे कुन्दावदातं सरसिजनयनं देवमुर्वीशरूपम् ॥ १८ ॥

शङ्खेन्द्वाभमतीव सुन्दरतनुं शार्दूलचर्मावृतं
कालव्यालकपालभूषणधरं गङ्गाशशाङ्कप्रियम् ।
काशीशं कलिकल्मषौघशमनं कल्याणकल्पद्रुमं
नौमीड्यं गिरिजापतिं गुणनिधिं श्रीशङ्करं कामहम् ॥ १९ ॥

उत्तरकाण्डम्—

केकीकण्ठाभनीलं सुरवरविलसद्विप्रपादाब्जचिह्नं
शोभाढ्यं पीतवस्त्रं सरसिजनयनं सर्वदासुप्रसन्नम् ।
पाणौ नाराचचापं कपिनिकरयुतं बन्धुना सेव्यमानं
नौमीड्यं जानकीशं रघुवरमनिशं पुष्पकारूढरामम् ॥ २० ॥

कोशलेन्द्र पदकञ्जमञ्जुलौ कोमलावजमहेशवन्दितौ ।
जानकीकरसरोजलालितौ चिन्तकस्य मनभृङ्गसङ्गिनौ ॥

कुन्द-इन्दुदर-गौरसुन्दरं अम्बिकापतिमभीष्टसिद्धिदम् ।
कारुणिककलकञ्जलोचनं नौमि शङ्करमनङ्गमोचनम् ॥ २२ ॥

# बालकाण्डम्

## वैकुण्ठपुरी।

सलक्ष्मीकगदाधरो विष्णुर्ज्योतिर्मयगोलोकवैकुण्ठपुरीमधिवसति। तस्मिन्नानन्दधामनि दिवानिशं पूर्णचन्द्रमा विराजते। अनेके पुण्यात्मानः सालोक्यसामीप्यसारूप्यैकत्वप्राप्तिपूर्वकं श्रीभगवता विष्णुना सममेतल्लोकनिवाससुखमनुभवन्ति। श्रीमद्भागवतेऽयं लोकः इत्थमुपवर्ण्यते- 'एतस्मिन् वैकुण्ठधाम्नि श्रीहरिः स्वसमानरूपधारिभिर्महापुरुषैः सार्धं नित्यं निवसति। एते महापुरुषाश्च निष्कामभावेन धर्मानुष्ठानतत्पराः भगवद्भजनप्रसिताः सन्तः सुखेन समयमतिवाहयन्ति।

अस्मिन्वैकुण्ठे वेदप्रतिपादितः षडैश्वर्यशाली सनातनपुरुषः श्रीहरिः धृतसात्त्विकमूर्तिः भक्तजनमनोऽभिलाषपरिपूरकः सन् तेभ्यो भक्तेभ्यो सुखशान्तिप्रदानं विदधाति।

इह धामनि युगपदेव सकलर्तुषु प्रसूनादिसम्पदन्वितेन निखिलकामनापरिपूरकेण कल्पशाखिसमूहेन परिशोभितं नैश्रेयसाभिधानमास्ते काननमेकम्। ध्रुवं मूर्तिमान् मोक्ष एव काननरूपेण वर्तमानस्तिष्ठति।

देवाधिदेवस्य श्रीहरेः समाराधनाफलस्वरूपं ये खलु ममत्व-भावनाविरहिताः प्रशंसनीयचरिताः सन्तः तस्यैव प्रभोः श्रीहरेः सुमङ्गललीलाचरितकीर्तनपराः अनुरागभावविवशाः साश्रुनयनाः रोमाञ्चितकलेवराश्च त एव वैकुण्ठलोकगमनाधिकारिणो भवन्ति ।

* * *

कदाचिन्नारदमुनिर्वीणया हरिगुणगानतत्परः वैकुण्ठधाम्नि उपस्थितोऽभूत् । द्वारपालगणेन ससम्भ्रमं मार्गो दत्तः । प्रविश्य च अकुण्ठितधीः नारदः सविस्मयं तत्र सलक्ष्मीकं नारायणमनवलोक्य तत्स्थाने श्रीरामलक्ष्मणभरतशत्रुघ्नाः विराजमानाः सन्तीत्यद्राक्षीत् । राम वामपार्श्वे च सीतादेवी उपविष्टा, लक्ष्मणः श्रीरामचन्द्रोत्तमाङ्गे धृतस्वर्णच्छत्रः, भरतशत्रुघ्नौ चामरचालनतत्परौ, पवनतनयश्च बद्धाञ्जली रामस्तवनप्रसित इत्यपि दृष्टवान् ।

नारायणं स्वांशचतुष्टयेन नररूपधारिणं लक्ष्मीं प्रकटितसीताकारां च विलोक्य नारदः आनन्दाश्रुपूरितलोचनः विह्वलान्तःकरणश्च सन् कैलासशिखरं प्रति प्रयातः ।

नारदमवलोक्य त्रिलोकनाथो देवाधिदेवोऽप्यानन्दितो जातः । त्रिकालज्ञं भूतभावनमहेश्वरं साष्टाङ्गपातं प्रणम्य नारदः विनीतभावेन निवेदयामास—"देव ! गोलोकेऽद्य जगन्नाथस्यापूर्वदर्शनेन धन्योऽस्मि जातः पूर्वं गोलोके चतुर्भुजनारायणमूर्तिर्मयावलोकिता आसीत् ।

परमद्य नारायणम् अंशचतुष्टयविभक्तं कमनीयकान्ति नररूपेण विराजमानं किमर्थमवलोकितवानस्मि ! भवान् एतद्रहस्योद्घाटनानुकम्पां विदधातु ।"

नारदानुयोगं कर्णविषयीकृत्य नीलकण्ठः स्मितपूर्वकं पार्वतीवदनदत्तनयनः मधुरस्वरेणागादीत्—'अद्य एतादृशरूपेण नारायणदर्शनमतीव रहस्यमयम् । 'भगवान् अङ्गीकृतैतादृशरूपो धराधाम्नि अवतीर्णो भविष्यति' इत्यनेन सूचितं भवति । स खलु मोक्षप्रदः 'राम' इत्यभिधानेन विश्रुतो भविष्यति । धरातलं पापभारप्रपीडितमजनि । एतत्पापभारपरिहारपूर्वकं धर्मराज्यस्थापनार्थं भगवान् विष्णुः स्वकीयैश्चतुर्भिरंशैरवतरिष्यति । महादुर्दान्तं पापमतिं लंकाधिपतिं रावणं सान्वयं विनाश्य अयोध्यां प्रत्यागमिष्यति; तत्र च सिंहासनाधिष्ठितः सन् अश्वमेधादियज्ञानुष्ठानतत्परः अनेकविधधर्माचरणप्रसितः सरयूसलिले नरदेहविसर्जनपूर्वकं पुनश्चतुरोंऽशानेकीकृत्य वैकुण्ठपुरीं प्रत्यागमिष्यति । * भूतभावनशंकरमुखतः एतादृशीमद्भुतां प्रवृत्तिं निशम्य सविस्मयो नारदः

---

* यद्यपि वाल्मीकिरामायणेऽवलोक्यते यत् रामचन्द्रः एकादशसहस्रवर्षपर्यन्तं शासनं विधाय ब्रह्मलोकं प्रस्थित इति, तथापि अयमेकादशसहस्रसंवत्सरात्मकः कालः सौरवत्सररूपः नाक्षत्रवर्षस्वरूपः वा इतिमहान्मतभेदविषयः । स्कन्दपुराणस्य पद्मपुराणस्य च मतेन रामचन्द्रः विवाहसमये पञ्चदशवर्षदेशीयः सीता च षड्वर्षदेश्या चाभू-

पुनर्जितासां कृतवान्—'परमेश्वर! भगवतः आत्मानं चतुर्धा विभज्य नररूपेण धरातलावतरणस्य को हेतुः? स तु वैकुण्ठधामावस्थित एव भूतलभारलघूकरणसमर्थः। तदिच्छामात्रेणैवैतदखिलं संपत्स्यते।'

नारदप्रश्नं निशम्य महेश्वरः ईषद्विहस्योक्तवान् — अस्मिन्विषये मया पितामहसकाशात् यत्किञ्चिच्छ्रुतिविषयीकृतं तदेव श्रावयामि। प्रायो लोकान् भोगविलासमत्तान्, वेदोक्तकर्मविरतान्, उच्छृङ्खल जीवनान्, चौर्यदस्युवृत्तिपरायणान् देहेन्द्रियसुखवादिनः, न्यायनीति-सत्यधर्मपराङ्मुखान्, देवद्विजश्रद्धाशून्यान्, असंयमिनः, कामक्रोध-प्रवणान्, असूयासम्पन्नाम्, हीनवीर्यान् भोगाश्रयिणश्चावलोक्य दशाननप्रभृतिदुरन्तरक्षोगणपदभाराक्रान्ता वसुमती गोरूपधरासती अमर-मुनिगणपरिवृता भगवतः परमेष्ठिनः समीपमागत्य रुदती सकलविषय-निवेदनसंकल्पं कृतवती।

.................................

ताम्; सप्तविंशतिवर्षवया रामः वनवासं प्रस्थितः। कृतसीतोद्धारः प्रत्यागतो रामः स्वराज्याभिषेक समये द्वाचत्वारिंशद्वर्षवयाः सीता च त्रयस्त्रिंशद्वर्षीयाऽऽसीत्। राज्यप्राप्तेः परं दशसु एकादशवत्सरेषु वा रामोऽश्वमेधेनेजे। एतदप्यगस्त्यमुनेर्विधानानुसारम्। रावणस्तु वर्णतो ब्राह्मणः, यद्वधस्वरूपं रामेण ब्रह्महत्यापापमाचरितम्, तत्क्षालनार्थं रामोऽश्वमेधयज्ञानुष्ठान तत्परोऽभूत्। एतत्तु पद्मपुराणवचनम्।

अनन्तरं ब्रह्माप्यखिलामरगणैर्वसुन्धरया च सार्धं क्षीरसागरतीरमासाद्य बाष्पाकुललोचनः भक्तिगद्गदवचनैः पुराणोक्तविमलपदयुक्तश्रुतिशुद्धस्तवैः अखिललोकाश्रयस्य अन्तर्यामिणः अजन्मनः सर्वज्ञसर्वेश्वरहरेः अभ्यर्थनामारेभे । स्तुतिप्रीतोद्युति शाली दिनकरसहस्रप्रभासम्पन्नो नारायणः स्वकीयदीप्तिविदलितान्धकारराशिः पूर्वस्यां दिशि आविर्बभूव । नारायणदर्शनोत्सुकः पितामहः अकृतात्मभिर्जनगणैरशक्यदर्शनस्य जगदीश्वरहरेः कृतसाक्षात्कृतिः स्वात्मानं धन्यममन्यत । इन्द्रनीलसदृशवर्णं, स्मितविकसितवदनारविन्दं, पद्मदलोपमनयनं, किरीटहारकेयूरकुण्डलाद्यनेकालङ्कारभूषितं, श्रीवत्सकौस्तुभप्रभाशोभमानं, चतुर्भिर्हस्तैः धृत शङ्खचक्रगदापद्मं, वनमालिनं हेमयज्ञोपवीतिनं, पीताम्बरधरं कमलाविश्रम्भराभ्यां सार्धं गरुडासनासीनं, चतुर्दिक्षु बद्धाञ्जलिस्थितैः सनकादिमुनिभिः पार्षदगणैश्च परिवृतं वरदमूर्तिं नारायणमाविर्भूतमवलोक्य लोकपितामहो ब्रह्मा आनन्दगद्गतवचनैः तत्स्तवमारब्धवान्—हे देवाधिदेव! कर्मपाशेभ्यो मुक्तिलाभार्थं मुमुक्षुजना यदभयपदस्य नित्यं ध्यानतत्परा जायन्ते तदेव त्वच्चरणयुगुलं प्रत्यहं प्रणतोऽस्मि । संसारतापतप्तानां जनानां त्वयि भक्तिरेवैकमात्रमौषधम् । अत एव त्वदङ्घ्रिसरोजयोः नित्यमेव ममैकान्तिकी भक्तिरास्ताम् इत्येवाभ्यर्थये ।'

आत्मभूविहितस्तुतिभिः सुप्रसन्नो भगवान् हरिः वरददक्षिणहस्तमुद्यम्य स्मितपूर्वमुवाच—'उच्यतां किं विधातव्यम्? युष्माकमभिलषितं पूरयिष्यामि ।'

भगवतः आश्वासनवचनैरानन्दितः परमेष्ठी प्रत्यगादीत्—'भगवन्! अस्ति पुलस्त्यात्मजः महापराक्रमो रावणः रक्षोगणाधीश्वरः। सविश्वपीडको राक्षसराजः मद्वरप्रदानत एव बलदीप्तः सन् स्वकीयपापाचरणैः क्रूरकर्मभिश्च त्रैलोक्यस्य सकललोकपालादीनां चोपरि घोरात्याचारप्रवणः; इदानीं तस्य नाश एव विश्वमङ्गलकारणम्। मया तु 'तव मृत्यु केनचिदपि मनुष्येणैव भविता' इति तस्मै प्रतिश्रुतम्। अतः हे देव! हे प्रभो! भवता नररूपधारिणा तस्य संहारः कार्यः।'

चतुराननस्य प्रार्थनां निशम्य भगवान् विष्णुः स्मितवदनः प्रत्यब्रवीत्—'पूर्वं काश्यपः स्वकृततपोभिः सन्तुष्टं वरदानोद्यतं च मां 'त्वामहं पुत्ररूपेण प्राप्तुमभिलषामि' इति प्रार्थयामास। मया च तत्प्रार्थनाङ्गीकृता। इदानीं स (काश्यपः) दशरथाभिधानेन भूलोके शासनपरः। अहं च तत्पुत्रत्वस्वीकारपूर्वकं कौसल्यासुमित्राकैकेयीगर्भेषु चतुर्भिरंशैः पृथक् पृथक् अवतीर्णो भविष्यामि। अपरत्र च योगमाया राजर्षिजनकगृहे सीताख्ययाऽऽविर्भविष्यति। तत्सहायेनाहं निजकार्यसाधनं विधास्यामि।'

इत्थं भाषमाण एव भगवान् नारायणोऽन्तर्हितो जातः। अनन्तरं सुरज्येष्ठोऽमरगणं व्याजहार - 'दिवौकसः! विष्णुः मनुष्यरूपेण रघुकुलेऽवतरिष्यति। यूयमपि सर्वे निजनिजांशैर्वानरवंशे स्वात्मान-

मुत्पाद्य भगवान् हरिः यावत्कालपर्यन्तं भूमण्डलवासतत्परः तावत्काल-पर्यन्तं तस्य सहायकरणे प्रस्तुता भवत ।'

देवगणान् प्रतीत्थं व्याहृत्य वसुमतीं चाश्वास्य कमलासनो निश्चिन्तभावेन सन्तुष्टमनसा च स्वधाम्नि प्रयातः । इतश्चामरगणा हरिसहायार्थं वृक्षपर्वतवासिमहाबलवानररूपेणाविर्बभूवुः । गिरिकाननखण्डेषु भगवदागमनप्रतीक्षां कुर्वन्तः अवतस्थिरे ।'

भगवदवतरणरहस्यमित्थं संकीर्त्य महेश्वरो नारदमब्रवीत् - 'नारद ! विष्णुर्यद्रामरूपं धृत्वावतीर्णो भविष्यति तद्रूपमखिलकलुषनाशनम् । येन 'रामनाम्ना' च स विश्रुतो भविता तस्य नाम्न एतावान् महिमा यत् मनुष्यः ब्रह्महत्या-गोहत्या-परस्त्रीगमन चौर्य-भ्रूणहत्यादिषु मध्ये यानि कान्यपि पापानि करोतु नाम श्रद्धापूर्वकमान्तरिकभावेन एकवारमपि रामनामोच्चारणं विधाय सकलवृजिनेभ्यो विमुक्तो जायेत । महापापोऽपि अकुतोभयरामनामोच्चारणतः संसारसागरसमुत्तरणसमर्थः स्यात् । च्यवनमुनेरात्मजः महापापी रत्नाकरः रामनाम्नि दीक्षितो विधीयताम्, तज्जीवनस्य परिवर्तनमवलोक्य लोको रामनाम्नि विश्वासपरो भविष्यति ।'

महेश्वरमुखात् भगवतो नूतनाविर्भाववार्तां तन्नाम्नः अलौकिकमहिमानं च निशम्य विस्मयाप्लुतमानसः नारदः धूर्जटिचरणयुगुलेऽसकृत्साष्टांगपातं प्रणम्य चिन्तातुरः गमनानुज्ञामभ्यर्थितवान् ।

## नारदवाल्मीकिसंवादः

गङ्गातमसानदीतीरे महर्षिवाल्मीकेस्तपोवनमासीत् । स किलास्मिन्स्थाने देवर्षिनारदस्योपदेशतस्तपस्यानिरतोऽभूत् । दिवानिशं 'रामनामजपप्रसितस्य रामनामसंकीर्तनासक्तस्य तस्य समीपे धर्मलाभार्थमनेकशिष्यवृन्दसमागमः समजनि । स च तेभ्योऽन्तेवासिभ्य शमदमतितिक्षोपरतीनां ध्यानधारणासमाधीनां चोपदेशं प्रतिपादितवान् । पुण्यकर्मा शिष्यगणोऽपि 'रामनाम' जपं 'रामनाम' गानं चाकार्षीत् ऋषिरप्यानन्दपुलकितगात्रः तन्मयमानसस्तकितगात्रः तन्मयमानसस्तद्गानश्रवणपरो बभूव । रामनामश्रवणतः तस्याश्रुपुलककम्पनादिकं सञ्जातम् । आनन्दसागरे स मग्नोऽभूत् । किन्तु महर्षिनारदस्योपदेशस्तेन न विस्मृतः स 'रामचरित' विषये ध्यानतत्परस्तच्चिन्तनासक्तश्चासीत् । नारदः यद्रामनामोपदेश कृतवान्—यस्याभिधानस्यैतावान्महिमा, कः खलु स स पुरुषोत्तमः ? केनोपायेन ज्ञायेत लभ्येत वा ।

कस्मिंश्चिद्दिने शिष्यगणपरिवृते मधुररामनामगानतत्परे वाल्मीकिमुनौ नारदः अकाशमार्गेण गच्छन् श्रुतमधुरगानस्वरः तस्मिन्नेवाश्रमेऽवातरत् चिरवसन्तलक्ष्म्यान्वितस्याश्रमस्यासीत् काव्यवर्णनीया सुषमा । अकस्मदेव नारदर्षिदर्शनेन वाल्मीकिर्विशेषतः सानन्दो जातः । अर्घ्यपाद्यादिभिः कृतातिथिसत्कारः कृताञ्जलिः स नारदमासनपरिग्रहार्थमभ्यर्थयामास ।

सुखासनोपविष्टस्य नारदस्य चरणसमीपमुपविश्य विनीतभावेन वाल्मीकिः तं पर्यनुयुयोज । 'प्रभो! भवान् त्रिकालज्ञः भूतभविष्यद्वर्तमानानि सर्वाण्यपि ते विदितानि । कथ्यताम्, अस्ति कश्चनैतादृशः पृथिव्यां यः सत्यवादी, दृढव्रतः, विद्वान्, गुणवान्, वीर्यवान्, धर्मज्ञः, भक्तिमान्, प्रियदर्शनः, कर्तव्यपरायणः, संयमी, कान्तिमान्, जितक्रोधः, असूयाशून्यश्च, यस्य च नाम वृजिननाशकं, मोक्षप्रदं च भवेत् ।'

वाल्मीकिप्रश्नानन्तरं क्षणं तूष्णीं स्थितो नारदः प्रत्यब्रवीत्—'येषां सद्गुणानां प्रस्तावस्त्वया विहितः ते एकस्मिन् मानवे दुर्लभाः । सर्वेषामेषां गुणानां केवलं भगवत्येव समावेशः सम्भवः । इदानीमिक्ष्वाकुनृपवंशे दशरथस्य पुत्ररूपेण नारायणांशभूतः रामाभिधानः एकः प्रसिद्धो नरपतिरवतीर्णो भविष्यति । पापात्मनोऽसुरप्रभृतीन्विनाश्य जगति धर्मराजस्थापनार्थं नारायणः स्वकीयैश्चतुर्भिरंशैर्नररूपेणाविर्भविष्यति । तस्यैव जीवने एतेषां सर्वेषामपि गुणानामैश्वर्यस्य च विकासो भविता । स खलु महावीरः, कान्तिमान्, संयतचित्तः, धीरस्वभावः, जितेन्द्रियः, बुद्धिमान्, राजनीतिज्ञः, वाग्मी, शत्रुञ्जयश्च भविता । पुनश्च स स्थूलस्कन्धदेशः, कम्बुतुल्यरेखाङ्कितकण्ठः, विशालवक्षाः, आजानुलम्बितबाहुः, वीरोचितसुघटितललाटमस्तकश्च स्यात् । आयतनेत्रः, प्रतापशाली, सुलक्षणयुक्तः, धर्मज्ञः, शास्त्रज्ञः, सत्यसन्धः वृद्धसेवी, प्रजाहितरतः यशस्वी, ज्ञानी, शुद्धाचारः, विनीतः स्थिरचित्तश्च

भवेत् । स गाम्भीर्ये समुद्रसदृशः, धैर्ये हिमालयोपमः आकाश इव च महान् स्यात् । '

अनन्तरं नारदः श्रीरामचन्द्रस्य दिव्यजन्मकर्मविषये लोकपितामहसकाशात् यत्किञ्चिच्छ्रुतवान् तदखिलमुपवर्ण्य देवताप्रसन्नतार्थं रामस्यालौकिकं जन्म, बाल्ये पितृमातृभक्तिः, भ्रातृस्नेहः, विश्वामित्रस्य यज्ञरक्षा, मिथिलागमनम्, हरधनुर्भङ्गः, (रामसीतयोः) विवाहः, परशुरामदर्पदलनम्, अयोध्याप्रत्यावर्तनम्, राज्याभिषेकस्यायोजनम्, पितृसत्यपालनार्थं राज्यत्यागो वनगमनं च, चित्रकूटावस्थानम्, भरतमेलनम्, भरताय पादुकाप्रदानम्, दण्डकारण्यगमनम्, राक्षसगणानामत्याचारेभ्यः ऋषिमुनीनां तपस्विनां च कृते सुरक्षाव्रतग्रहणम्, पञ्चवटीनिवासः, शूर्पणखादर्पशातनम्, ससैन्यखरदूषणवधः, रावणकर्तृकसीताहरणम्, सुग्रीवेण सह सख्यं, बालिवधः सुग्रीवाय राज्यप्रदानं च, सीतान्वेषणं, हनूमतः समुद्रोल्लङ्घनम् लङ्काप्रवेशश्च, सीतासंवादानयनम्, रामचन्द्रस्य युद्धयात्रा, समुद्रे सेतुबन्धनम्, विभीषणेन सह सौहार्दं, ससैन्यरावणवधः, विभीषणस्य लङ्काराज्यभिषेकः, सीतोद्धारः, सीतायाः अग्निपरीक्षा, रामस्यायोध्याप्रत्यावर्तनम् राज्याभिषेकश्चेत्याद्यशेषतः संकीर्त्याब्रवीत् - 'रामः सुदीर्घकालपर्यन्तं शासनं विधाय प्रजाहितार्थं अश्वमेधयज्ञस्यायोजनं विधास्यति । रामराज्ये प्रजागणः सुखी, आनन्दितः, सन्तुष्टः, धर्मपरायणः, नीरोगः,

निर्भयः दुर्भिक्षमहामारीभयशून्यश्च स्यात् । कोऽपि जनकः स्वात्मजस्य निधनं न द्रक्ष्यति, नारीगणः नानुभविष्यति वैधव्यव्यथाभोगम् । चतुर्णामपि वर्णानां प्रजागणाः स्वीयधर्मानुष्ठानपरा भवेयुः । 'रामनाम' सर्वपापनाशकं इति तु त्वया स्वजीवन एवानुभूतम् । मया यद्रामस्याखिलगुणवर्णनं विहितं तस्यालौकिकजीवनघटनानां च संक्षेपतः यद्गानं कृतं तदवलम्ब्य त्वया रामचरितरचना तत्कीर्तनं च विधातव्यम् । वेदतुल्यपवित्रस्य पुण्यजनकरामचरितस्य श्रवणेनैव निखिलकल्मषविमुक्तो जीवः अन्ते विष्णोर्भगवतः रामस्य पदमधिगम्य धन्यतामेति । इत्थं सकामभक्तगणोऽनन्तस्वर्गसुखलाभपरो भवति ।

महेश्वरोऽपि 'रामनाम' महामन्त्रजपतत्परो वर्तते । एतन्नाम चतुर्वर्गफलप्रदं इहलोके यशस्करममुत्र च मुक्तिप्रदं भवति । अस्यैव सर्वसुखदरामनाममहिम्नः रामचरितमाहात्म्यस्य च प्रचारार्थं स्वयं विष्णुभगवान् निजांशं चतुर्धा विभज्य रामरूपेण धराधाम्नि अवतीर्णो भविष्यति । रामदर्शनादपि रामनाम श्रेष्ठतरम् । सर्वव्यापि ब्रह्म एकमविनाशी सच्चिदानन्दरूपम् । परब्रह्मैवेदं नरतनुधारणपूर्वकं भक्तानां दुरितदूरीकरणार्थं परमपुरुषरूपेण नरलीलां करिष्यति । त्वमस्य देवमानवस्य मर्यादापुरुषोत्तमस्य सविस्तरं जीवनचरितकीर्तनरचना प्रचारपरो भवेः ।' देवर्षिर्नारदः वाल्मीकिमित्थमुपदिश्य आशीर्वचनदानपूर्वकमन्तर्हितः । वाल्मीकिश्चैकान्तवासी रामचरितध्यानतत्परो बभूव ।

## क्रौञ्चवधो रामायणरचना च

जाह्नवीसमीपं तमसानदीतीरे स्वाध्यायतपोनिरतस्य ब्रह्मनिष्ठ-वाल्मीकेः रमणीयः आश्रमः । भरद्वाजादि शिष्यगणपरिवृतः ऋषिः तत्र निवासमकरोत् । आश्रमस्य समीपमेवास्ते निबिडवृक्षलतासमाकीर्णं निर्मलसलिलं मीनपरिपूर्णं अनेकक्रौञ्चमिथुनवासस्थलं विशालं सरोवरम् । ऋषेरन्तःकरणमिदानीं केवलमनुकम्पापूरितमासीत् । क्रौञ्चमिथुनगानतस्तस्यान्तरं सानन्दमजनि ।

एकस्मिन्दिने प्रातराह्निकसमाप्त्यनन्तरं वाल्मीकिः इतस्ततः भ्रम-माणः तत्सरोवरतीरमासाद्य पार्श्वस्थशिष्यं भरद्वाजमब्रवीत् - 'पश्य सरोवरस्य शोभा कीदृशी रमणीया ! वत्स ! त्वं कलशमवस्थाप्य प्रयच्छास्मद्वल्कलम्; अस्मिन्नेव स्निग्धसलिलेऽवगाहिष्ये ।'

शिष्यहस्ताद्वल्कलमादाय निर्गतस्य निसर्गशोभादर्शनविमुग्धस्य वाल्मीकेः पुरतः अकस्मादेकः शरविद्धः रक्ताक्तशरीरः क्रौञ्चपक्षी पतितः सन् आर्तस्वरेण चीत्कारं कर्तुमारेभे । उत्तमाङ्गोपरि रुदन्ती क्रौञ्ची चार्तनादमकार्षीत् । अस्मिन्नेव समये धनुर्बाणहस्तः कश्चिद्व्या-धोऽपि तेनैव पथा निर्गतः ।

क्रौञ्चं पुरतः पतितमवलोक्य क्रौञ्चीकरुणविलापं च निशम्य वाल्मीकेरान्तरं व्याकुलं जातम् । दारुणशोकाभिभूतस्य तस्य मुखतः निष्ठुरं व्याधं लक्ष्यीकृत्य आन्तरिकावेगेन सहैकं छन्दोबद्धमभिशाप-

वाक्यं निर्गतम् । 'राम' 'राम' इत्युच्चारणपूर्वकं महतावेगेन स निजगाद—

'मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ बा.का. २-१५

एतदभिशापवाक्योच्चारणपूर्वकं वाल्मीकिरसकृत् चिन्तयामास 'किमिदं मयोक्तम् ? कोऽस्याभिप्रायः ? . यदिदं छन्दोबद्धं समानाक्षर-विन्यासयुक्तं मन्मुखान्निःसृतमवश्यमेव साभिप्रायम् ।'

वाल्मीकेः वचनं निशम्य तच्छिष्यो भरद्वाजोऽपि परितुष्टमानसस्तमनुमुमुदे । अनन्तरं वाल्मीकिस्तस्मिंस्तीर्थे यथाविधि विहितस्नानादिक्रियाकलापः इममेव विषयमधिकृत्य चिन्तनपरः स्वाश्रमं प्रत्यागतः । भरद्वाजोऽपि करधृतजलपूर्णकलशस्तमनुजगाम । शिष्यगणैः सहाश्रममागत्योपविष्टस्यापि मुनिवरस्य वाल्मीकेर्मनसि क्रौञ्चवधः क्रौञ्चीकृतार्तनादश्च शोकावहक्रन्दनध्वनिमुदभावयताम् । अत्रान्तरे महातेजस्वी लोकस्रष्टा चतुराननः ब्रह्मा वाल्मीकिमीक्षमाणस्तत्रोपास्थितः । अकस्मादेवदेवं ब्रह्माणमवलोक्य परमविस्मितो मुनिः समुत्थाय यतवाक् कृताञ्जलिश्च भूत्वा विनम्रभावेन तं प्रति यथाविधि प्रणामानन्तरं पाद्यार्घ्यासनवन्दनैः सम्पूज्य सादरं तस्यागतः स्थितः । भगवान् ब्रह्मा सुखासनोपविष्टः मुनेः वाल्मीकेः कुशलप्रश्नानन्तरं तं समुपवेष्टुं समुपादिशत् । वाल्मीकि-

रिदानीमपि निषादस्य निष्ठुरव्यापारं क्रौंचीविप्रयुक्तासह्यवियोगशोक-घटनां च भावयन् पूर्वोक्तं 'मा निषाद' इत्यादि श्लोकं मनसा आवर्तयन् स्थितः। त्रिकालज्ञः स्वयंभूः वाल्मीकेर्मनोभावं जानन् स्मितपूर्वमुवाच—'अस्मदिच्छयैव त्वन्मुखादियं वाणी विनिर्गता। इदं छन्दोबद्ध-वचनं 'श्लोक'नाम्ना विश्रुतं भविष्यति। एतादृशश्लोकबद्धवचनैरेव त्वया धर्मात्मनः धीमतः लोकाभिरामस्य राघवेन्द्ररामस्य समग्रचरितं वर्णनीयम्। अर्थात् नारदसकाशात् रामचरितस्य ज्ञातः रहस्यमयश्च यथाश्रुतः सर्वोऽपि वृत्तान्तः एतादृशछन्दोबद्धवचोभिर्ग्रथनीयः। राम-लक्ष्मणजानकीनां राक्षसादीनां च यत्किञ्चिद्विवरणं तव विदितं रहस्यमयं वा विद्यते तदखिलमपि त्वं ध्यानबलेन ज्ञास्यसि। अस्मिन्काव्ये यत्किमपि त्वया लिख्येत तस्मिन्नेकमपि वाक्यमनृतं न स्यात्। यावन्ति दिनानि भूतले नदीपर्वतसमुद्रादिकं स्थास्यति, यावन्मृत्युलोके त्वद्विरचितरामायणाख्यानप्रचारश्च भविष्यति, तावत्कालपर्यन्तं त्वत्कीर्तिरप्रतिहतगतिः प्रसरेत्। त्वं च मल्लोके निवासं करिष्यसि।' भगवान् ब्रह्मा एतादृशं व्याहृत्यान्तर्हितोऽजनि। वाल्मीकिः पितामह-वचनैः विस्मयविमुग्धोजातः; भगवदादेशं स्मृतिविषयीकुर्वन् धीशक्तिसम्पन्नरामचन्द्रस्य धर्मादित्रिवर्गसमन्वितमोक्षरूपपरमकल्याण-प्रदं जीवनवृत्तान्तं स्पष्टरूपेण हृदयगम्यं विधातुं समुद्योगपरः कुशासनोपविष्टः यथाविधि कृताचमनः कृतमनःसंयमनः योगारूढः सन् तद्वृत्तान्तध्यानतत्परो बभूव। तदा वाल्मीकिः योगबलेन राजा

दशरथः, तद्भार्यागणः, रामलक्ष्मणसहिता सीता, पौरजनस्य च हास्यालापगतयः एतत्सर्वमपि यथार्थरूपेण ध्यानगम्यं विधाय अधिगतराज्यस्य श्रीरामचन्द्रस्य समग्रं जीवनचरित्रं विचित्रपदैः सुप्रशान्तार्थैश्छन्दोभिरवर्णयत् । एवं षट्काण्डात्मकं पञ्चशतसर्गपरिष्कृतं चतुर्विंशतिसहस्रश्लोकसमन्वितं च काव्यं रचयामास । * इदमेव काव्यं 'वाल्मीकिरामायणा'ख्यया प्रसिद्धम् ।

## अयोध्यानगरी

सरयूतीरे कोसलो नाम आनन्दमयः समृद्धिशाली प्रचुरवनधान्यसम्पन्नश्चासीदेको महान् जनपदः । तस्य च जनपदस्याभूल्लोकविश्रुता अयोध्या नाम नगरी । इयं मनोहरा महानगरी द्वादशयोजनानि दीर्घा, योजनत्रयविस्तीर्णा, प्रशस्तमहापथा, सुविन्यस्तराजपथा चासीत् । एते च रमणीयमार्गा नित्यं सलिलसिक्ता, विकसितकुसुमगन्धामोदिताश्चासन् । स खल्वासीत् इक्ष्वाकुवंशीयस्य, महाबलिनः,

---

* रामजन्मनः चिरपूर्वमेव रामायणरचना जाता इति किंवदन्ती प्रचलितास्ते । अवश्यमेव एतादृशपक्षविपक्षयोरनेका युक्तयस्तथ्यानि च विद्यन्ते । रामायणरचनासमयविषयेऽपि प्रचलिताः सन्त्यनेकगवेषणाः किन्तु अद्यावधि न कोऽपि सर्ववादिसम्मतोऽखिलसंशयनिरासकश्च समयो निर्धारितः । केनचिन्मतेन श्लोकसंख्या विंशतिसहस्रश्लोकात्मिकापि अभिधीयते ।

पराक्रमशीलस्य, दशरथमहीपतेः शासनकालः। इयं नगरी सुरक्षिता सर्वविधयुद्धास्त्रायुधसमन्विता च। सुदृढकपाटा तोरणविराजिता विपणिपंक्तिसुशोभिता चाभूत्। विविधशिल्पिनः सूतमागधगणाश्चास्यां महानगर्यां न्यवसन्। श्रीसम्पन्ना सुशोभना चेयं नगरी उच्चप्रासादध्वजसमूहप्रभाभासिता च सती अमितशतघ्नीसुरक्षिता चाभूत्। पुरनारीणां कृते बहुनाट्यशाला; मनोरमोद्यानैराम्रकाननैश्चास्याः शोभा वर्धनशीला, चतुर्दिक्षु सालवनेन दुर्दम्यप्राकारेण च परिवेष्टिता। दुर्गमगभीरपरिखासुरक्षितायामस्यां नगर्यामन्येषां प्रवेशो दुःसाध्यः। सा गजाश्वधेनुरासभादिपालितपशुभिरतितरां हृष्टपुष्टा च। अयोध्या वासिनश्चानन्दिता धर्मपरायणाः शास्त्रज्ञाः स्वधनपरितुष्टा निर्लोभाः सत्याश्रयिणश्च। एतन्नगरवासिनः कुण्डलमुकुटमाल्यधारिणः सुवस्त्रपरिच्छन्नाश्चन्दनादिविलेपनसुवासिताङ्गाश्च। पर्वतकन्दरासु केसरिण इव अस्यां नगर्यामग्नितुल्यतेजस्विनश्चतुरा असहिष्णवः धनुर्विद्याविशारदाश्च योद्धारो न्यवसन्।

दशरथनृपस्य सुमन्त्रप्रभृतयोऽष्टसंख्याकाः कर्मसचिवा आसन्। तेषु धीसचिवेषु वसिष्ठवामदेवाविति द्वौ प्रधानौ। एतेभ्यः अन्येऽपि सुयज्ञ-जाबालि-काश्यपगौतमप्रभृतयो महर्षयोऽप्यासन्। सर्वेऽप्येते विद्याविनयसम्पन्नाः, सुनिपुणाः, जितेन्द्रियाः राजनीतिज्ञाः, शास्त्रज्ञाः, पराक्रमिणः, धीरबुद्धयः आज्ञावहाः, निर्लोभाः व्यवहारकुशला देशवि-

देशवत्सनाभिज्ञा राजप्रजोभयहितकांक्षिणश्चासन् । दशरथः एतादृशानुरक्तदक्षसकलमन्त्रिमण्डलपरिवेष्टितः ज्योतिष्मानंशुमालीव शुशुभे ।

### दशरथस्य पुत्रकामना

अयोध्याधीशो दशरथः अनेकविधयज्ञानुष्ठानेन देवराज इन्द्र इव दीप्तिलाभान्वितोऽभूत् । स किल वीरः, श्रीमान्, सत्यपरायणः सर्वलोकविश्रुतश्चासीत् । परमभूत्सन्तानहीनः । अतः नितान्तदुःखितचित्तः सन् कदाचित्कुलगुरुवसिष्ठं अभिवादनपूर्वकं उक्तवान्— 'भगवन्! अपुत्रकोऽहम्, पुत्रेण विना च सम्पूर्णराज्यमैश्वर्यं चास्मदशेषदुःखकारणम् । पितृपुरुषेभ्यः चुलुकमात्रजलदानाधिकारादपि वञ्चितोऽहम् । इदानीं येन विधानेन सर्वलक्षणसम्पन्नपुत्रलाभो भवेत्, येन पुंनामनरकादात्मोद्धारसमर्थो भवेयम् ईदृशः कोऽप्युपायश्चिन्त्यताम् । दशरथस्य व्याकुलवचनं निशम्य वसिष्ठोऽब्रवीत्— 'राजन्! मा दुःखितो भूः । कश्यपात्मजविभाण्डकमुनेस्तनयं ऋष्यशृङ्गमानीय पुत्रेष्टियज्ञः सम्पादनीयः तत्फलस्वरूपं त्वं लोकपालतुल्यान् पराक्रमशालिनः चतुरः पुत्रान्प्राप्स्यसि ।'

अथ वसिष्ठस्याज्ञया दशरथः पुत्राभिलाषी सन् यज्ञानुष्ठानकरणं स्थिरी चकार; मन्त्रिभ्यश्च तदायोजनार्थमादिदेश ।*

---

* दशरथपुत्रजन्मविषयः स्कन्दपुराणान्तर्गतनागखण्डे समुपलभ्यते—अपुत्रको राजा दशरथः हाटकेश्वरनामकक्षेत्रमभ्येत्य पितृ-

एकदा मन्त्री सुमन्त्रोऽपि दशरथनृपतिमेकान्ते निवेदयामास—'महाराज! मया सनत्कुमारोक्ता पुराणकथाश्रुता। विभाण्डकमुनेः पुत्रः ऋष्यशृङ्गनाम्नाख्यातः, स खलु महाऋत्विक्। कदाचिदङ्गदेशे भयंकरानावृष्टिकारणात् प्रजाजना आहाराभावेन देशं परित्यज्य पलायितुमारब्धाः। ये किल तत्रैव स्थितास्तेऽपि अखाद्यवस्तुभक्षणेन कथमपि

---

प्रतिष्ठां देवीमूर्तिपूजां, शुभावहकुण्डजलस्नानम् विविधपुण्यायतनदर्शनं तीर्थजलावगाहनम्, प्रचुरदानादिकं च विधाय कठोरतपस्यानिरतो बभूव। वर्षशतपर्यन्तं तपोऽनुष्ठानानन्तरं देवदेवो जनार्दनः दशरथस्य तीव्रतपसा प्रसन्नः सन् गरुडारूढस्तत्रोपस्थितः पार्थिवं चावोचन्—"वत्स! त्वत्तपसा प्रसन्नोऽस्मि, वरप्रार्थना क्रियताम्। हे सुव्रत! दुर्लभमपि तवाभीष्टं पूरयिष्यामि।"

नृपतिः साष्टांगपात प्रणम्य जनार्दनमुवाच—"हे देव! पुत्रलाभार्थमेवेत्थं तपःपरोऽहम्। अतःतपः फलस्वरूपं वंशवृद्धिकरपुत्रदानेनानुग्राह्योऽयं जनः।"

विष्णुरुवाच—"राजन्। देवकार्यसम्पादनार्थमहं स्वयमेवात्मानं चतुर्धा विभज्य तवपुत्ररूपेणावतरिष्यामि। नास्मिन्विषये कोऽपि संदेहः। त्वयात्विदानीं राज्यं प्रतिनिवृत्य प्रजापालनपरेण भाव्यम्।" अनन्तरमेतत्तीर्थमाहात्म्यवर्णनं विधाय विष्णुरन्तर्हितोऽभूत्।

प्राणधारणपरा बभूवुः । पार्थिवस्य पापाचरणादेव प्रजाः कष्टमनुभवन्ति । लोमपादनृपतिः स्वप्रजादुःखेन चिन्तितः सन् स्वमित्रगणैः सह परामर्शपरो बभूव ।

---

अल्पसमयाभ्यन्तरमेव दशरथस्य त्रिषु प्रधानमहिषीगर्भेषु चत्वारः पुत्रा अजायन्त । ज्येष्ठमहिष्याः कौसल्याया गर्भे प्रथमपुत्ररूपेण रामः, कनिष्ठराज्ञीकैकेयीगर्भे द्वितीयपुत्ररूपेण भरतः, मध्यममहिषी सुमित्रा गर्भे च तृतीयचतुर्थपुत्ररूपेण लक्ष्मणशत्रुघ्नावजायेताम् । अन्यच्च राज्ञः काचित्कन्याप्यासीत् (किन्तु कस्याम हिष्या गर्भे सा जाता इत्यस्य उल्लेखः नास्ति) एषैवात्मजा दशरथेन अपुत्रकलोमपादनृपतये प्रदत्ता इत्यादि । पुत्रेष्टियज्ञस्वरूपं दशरथस्य यः पुत्रलाभोऽभवत् नास्त्यत्र कोऽप्युल्लेखः ।

किञ्चिदन्यपुराणमतेन दशरथस्य पुत्रप्राप्त्यर्थं पुत्रेष्टियज्ञानुष्ठानसमर्थनं न कृतम् । तन्मते श्रीभगवतः आविर्भावः पुत्रेष्टियज्ञफलस्वरूप इति न युक्तिसङ्गतम् । गीतावचनानुसारं धर्मसंस्थापनार्थं भगवान्स्वयमेवाविर्भवति इति नात्र यज्ञानुष्ठानापेक्षा ।

बौद्धरामायणा(दशरथजातका)नुसारं पुरा वाराणस्यां दशरथो नामैकः नृपतिरासीत् । स किल द्वन्द्वद्वेषमोहभयपरित्यागतः यथाधर्मं प्रजापालनमकरोत् । तस्याग्रमहिष्या गर्भे एका कन्या द्वौ पुत्रौ चाजी-

मन्त्रिगणा ऊचुः—"महाराज! मुनिवरं ऋष्यशृङ्गमानीय इन्द्रपूजा विधानं वरुणयज्ञः क्रियेतचेत् राज्ये वृष्टिः स्यात्।" मन्त्रिवचनं निशम्य पार्थिवः ऋष्यशृङ्गानयनार्थमादिदेश। तत्पुरोहितेन मन्त्रिगणेन चोक्तम्—'देव! ऋष्यशृङ्गः सर्वदा वनौकाः तपस्यारतः वेदाध्ययनतत्परश्चास्ते। स लोकसङ्गविमुखः तेजस्वी, वनितासंगानभिज्ञः सुखोपभोगपराङ्मुखश्च। कोसलमानीतेन सह चेद्भवता प्राप्तयौवनायाः शान्ताभिधात्मजाया विवाहायोजनं विधास्यते, तदैव सोऽस्मिन् राज्ये निवत्स्यति; यज्ञाद्यनुष्ठानपरश्च सन् लोककल्याणसाधनं करिष्यति।'

लोमपादः विनीतभावेन पुरोहितप्रभृतीन् ऋष्यशृङ्गं राज्ये आनेतुं प्रार्थयामास। मन्त्रिगणोऽपि परामर्शपरः सर्वोत्कृष्टवस्त्रालंकारपरिष्कृतं रूपवद्गणिकाजनं विविधोपहारविलासद्रव्यादिभिः सह ऋष्यशृङ्गं प्रलोभ्य आनेतुं प्रेषयामास। पार्थिवसकाशात् यावदावश्यकवस्तूनि धनरत्नादिकं च प्राप्य काचिद्वृद्धा गणिका एकस्यां नौकायां कृत्रिमवृक्षगुल्मलताभिः फलपुष्पादिभिश्च परिष्कृत्य कंचिद्रमणीयमाश्रमं विरच्य कांचिद्रूपयौवनसम्पन्नां गणिकां गृहीत्वा विभाण्डकमुनेराश्रमस्यानतिदूरं समेत्य नौकां बबन्ध।

---

जनन्। ज्येष्ठो रामः कनिष्ठो लक्ष्मणश्च। अग्रमहिष्या मृत्योरनन्तरं अमात्यादीनां परामर्शतः दशरथेनापरपत्नीपाणिग्रहणं कृतम्। नवीनमहिषीसुतो भरत इत्यादि।

ऋष्यशृङ्गः जन्मनःप्रभृति पितृस्नेहपरिवर्धितोऽभूत् । स आश्रमाद्बहिः कुत्रापि न प्रययौ; जनपदस्था नगरवासिनः ग्रामीणाश्च केऽपि स्त्रीपुरुषाः तेन नावलोकिताः । केवलं निबिडकानने तपस्यारत आसीत् । मन्त्रिभिः प्रेषितः गणिकागणः गुप्तरूपेण आश्रमसमीपमेव स्थितः । ऋष्यशृङ्गः कस्मिंश्चिद्दिने भ्रममाणस्तत्रैव सम्प्राप्तः । विचित्र-वेशः सुसज्जितो युवतिगणः सुमधुरकण्ठगानतत्परः नृत्यंश्च ऋषिपुत्र-समीपमभ्येत्यावोचत्—'ब्रह्मन्! को भवान्? किमत्र क्रियते भवता? अस्मिन्निर्जने बने एकाकी किमर्थमितस्ततो भ्राम्यसि?

तादृशसुन्दररमणीदर्शनेन मोहितः ऋष्यशृङ्गोऽब्रवीत्—'अह-मस्मि विभाण्डकऋषेरौरसः पुत्रः नाम्ना ऋष्यशृङ्गः । के यूयं? किं युष्माकं कर्म तपः साधनादिकं वा? हे शुभाननाः! समीपमेव ममा-श्रमः । आगम्यताम्, पाद्यफलमूलादिभिः यथाविधियुष्मत्सत्कारपरो भविष्यामि ।' ता अपि आश्रममागताः सत्यः पाद्यार्घ्यफलमूलादिभिः समादरप्रवणं ऋष्यशृङ्गं प्रसन्नमनसावोचन्—'अस्माकं त्वयमेव धर्मः यद्वयं पाद्यजलाङ्गीकारानर्हाः । न भवानस्मदभिवादनं कर्तु-मर्हति, किन्तु वयमेव भगवत्पादवन्दनं कुर्मः । अस्मद्व्रतनियमानु-सारं वयं तवालिङ्गनं विधास्यामः । वयं तु भवन्तं ज्योतिः पुञ्जमिवाव-लोकयामः । वन्दनीयोऽसि भवानस्माकम् ।" वाराङ्गनागणः मुनि-पुत्रस्य सत्काराङ्गीकारपूर्वकं उत्तमफलानि स्वादुसुगन्धिजलम् बहुमूल्य-

मन्त्रिगणा ऊचुः—"महाराज! मुनिवरं ऋष्यशृङ्गमानीय इन्द्रपूजा विधानं वरुणयज्ञः क्रियेतचेत् राज्ये वृष्टिः स्यात्।" मन्त्रिवचनं निशम्य पार्थिवः ऋष्यशृङ्गानयनार्थमादिदेश। तत्पुरोहितेन मन्त्रिगणेन चोक्तम्—'देव! ऋष्यशृङ्गः सर्वदा वनौकाः तपस्यारतः वेदाध्ययनतत्परश्चास्ते। स लोकसङ्गविमुखः तेजस्वी, वनितासंगानभिज्ञः सुखोपभोगपराङ्मुखश्च। कोसलमानीतेन सह चेद्भवता प्राप्तयौवनायाः शान्ताभिधात्मजाया विवाहायोजनं विधास्यते, तदैव सोऽस्मिन् राज्ये निवत्स्यति; यज्ञाद्यनुष्ठानपरश्च सन् लोककल्याणसाधनं करिष्यति।'

लोमपादः विनीतभावेन पुरोहितप्रभृतीन् ऋष्यशृङ्गं राज्ये आनेतुं प्रार्थयामास। मन्त्रिगणोऽपि परामर्शपरः सर्वोत्कृष्टवस्त्रालंकारपरिष्कृतं रूपवद्गणिकाजनं विविधोपहारविलासद्रव्यादिभिः सह ऋष्यशृङ्गं प्रलोभ्य आनेतुं प्रेषयामास। पार्थिवसकाशात् यावदावश्यकवस्तूनि धनरत्नादिकं च प्राप्य काचिद्वृद्धा गणिका एकस्यां नौकायां कृत्रिमवृक्षगुल्मलताभिः फलपुष्पादिभिश्च परिष्कृत्य कंचिद्रमणीयमाश्रमं विरच्य कांचिद्रूपयौवनसम्पन्नां गणिकां गृहीत्वा विभाण्डकमुनेराश्रमस्यानतिदूरं समेत्य नौकां बबन्ध।

---

जनन्। ज्येष्ठो रामः कनिष्ठो लक्ष्मणश्च। अग्रमहिष्या मृत्योरनन्तरं अमात्यादीनां परामर्शतः दशरथेनापरपत्नीपाणिग्रहणं कृतम्। नवीनमहिषीसुतो भरत इत्यादि।

ऋष्यश्रृङ्गः जन्मनःप्रभृति पितृस्नेहपरिवर्धितोऽभूत् । स आश्रमाद्बहिः कुत्रापि न प्रययौ; जनपदस्था नगरवासिनः ग्रामीणाश्च केऽपि स्त्रीपुरुषाः तेन नावलोकिताः । केवलं निबिडकानने तपस्यारत आसीत् । मन्त्रिभिः प्रेषितः गणिकागणः गुप्तरूपेण आश्रमसमीपमेव स्थितः । ऋष्यश्रृङ्गः कस्मिंश्चिद्दिने भ्रममाणस्तत्रैव सम्प्राप्तः । विचित्र-वेशः सुसज्जितो युवतिगणः सुमधुरकण्ठगानतत्परः नृत्यंश्च ऋषिपुत्र-समीपमभ्येत्यावोचत्—'ब्रह्मन्! को भवान्? किमत्र क्रियते भवता? अस्मिन्निर्जने बने एकाकी किमर्थमितस्ततो भ्राम्यसि?

तादृशसुन्दररमणीदर्शनेन मोहितः ऋष्यश्रृङ्गोऽब्रवीत्—'अह-मस्मि विभाण्डकऋषेरौरसः पुत्रः नाम्ना ऋष्यश्रृङ्गः । के यूयं? किं युष्माकं कर्म तपः साधनादिकं वा? हे शुभाननाः! समीपमेव ममा-श्रमः । आगम्यताम्, पाद्यफलमूलादिभिः यथाविधियुष्मत्सत्कारपरो भविष्यामि ।' ता अपि आश्रममागताः सत्यः पाद्यार्घ्यफलमूलादिभिः समादरप्रवणं ऋष्यश्रृङ्गं प्रसन्नमनसावोचन्—'अस्माकं त्वयमेव धर्मः यद्वयं पाद्यजलाङ्गीकारानर्हाः । न भवानस्मदभिवादनं कर्तु-मर्हति, किन्तु वयमेव भगवत्पादवन्दनं कुर्मः । अस्मद्व्रतनियमानु-सारं वयं तवालिङ्गनं विधास्यामः । वयं तु भवन्तं ज्योतिः पुञ्जमिवाव-लोकयामः । बन्दनीयोऽसि भवानस्माकम् ।'' वाराङ्गनागणः मुनि-पुत्रस्य सत्काराङ्गीकारपूर्वकं उत्तमफलानि स्वादुसुगन्धिजलम् बहुमूल्य-

विचित्रवसनानि सुरभिमाल्यादिकं च तस्मै समर्प्य मुनिकुमारमुक्तवत्यः- 'फलानीमानि पानीयं च भवता त्वरितमास्वादनीयम् ; तव कुशलं भविष्यति ।' ऋष्यशृङ्गोऽब्रवीत्—'मया भवतीभ्यः पक्कानि भल्लातकामलककरुषकप्रियलकप्रभृतीनि फलानि समर्पितानि । कृष्णाजिनावृतसुखासनेषु उपविशन्तु भवन्तः । क्वास्ते भवदाश्रमः ।

ताः सर्वाः मन्दस्मितपरा मुनिकुमारकं गाढमालिलिङ्गुः । लता इव नम्रीभूय मुनिपुत्रगात्रेण निजगात्राणि घट्टयन्त्यः अभीक्ष्णं तमस्पृशन् । नानाप्रकारैः प्रलोभनानन्तरं च मुनिकुमारकं विकारवशमवलोक्य विभाण्डकमुनेरागमनभयात् अग्निहोत्रहोमविधानच्छलेन ताः सर्वाः आश्रमतः प्रययुः । ऋष्यशृङ्गः मदनपरवशः सन् दीर्घनिःश्वासपरो बभूव । क्षणकालानन्तरमेव विभाण्डकः स्वाश्रमं प्रत्यागतः । आश्रमं वेदध्वनिशून्यं पुत्रं च विह्वलमवलोक्य सव्याजहार—'वत्स ! त्वां चिन्तातुरमानसं कातरमिव कुतो विलोकयामि ? किमत्र केऽपि समागता आसन् ?' ऋष्यशृङ्गः प्रत्यब्रवीत्—'पितः, केऽपि जटाधारिब्रह्मचारिणः अत्रागतवन्तः तेऽनतिदीर्घाकृतयः, सुवर्णसदृशवर्णाः आयतलोचनाः देवदूता इव सुन्दरशरीराः तेषां सुदीर्घकृष्णवर्णजटाः सुवर्णसूत्रग्रथिताः सन्ति । नभसि सौदामिनीव तेषां कण्ठे किमपि वस्तु दोलायमानं स्थितम् । तेषां पदेषु हस्तेषु च मम जपमालेव कापि शब्दायमानाऽऽश्चर्यहेतुः स्रक् विद्यते । परिधा-

नान्यपि तेषामत्यद्भुतानि न खल्वस्मच्चीवरवसनसदृशानि । आननानि च तेषां कीदृङ्मनोहराणि लोमविहीनानि च । कण्ठस्वरोऽप्येतेषां कोकिलस्येव मधुरः ।' तद्वचनैरपि मानसं सानन्दं जायते । एतद्देवकुमारोपरि समुत्पन्नो मम गाढोऽनुरागः । ते मामालिङ्गया-स्मज्जटाग्रहणपूर्वकं मन्मुखेन स्वमुखानि संस्पृशन्तः मधुररवम-कुर्वन् येन रोमाञ्चितमभून्मम गात्रम् । तैरेतादृशमधुरफलानि मह्यमास्वादयितुं समर्पितानि यानि बीजकवचोभयशून्यान्यासन् । कीदृङ्मधुराणि ! तत्प्रतिपादितस्वादुसुगन्धितजलपानेन भृश-मानन्दितोऽहम् । मन्ये सकला धरित्री भ्राम्यतीव । एताः सर्वाः सुरभिविविधस्रजः तैः समर्पिताः अत्र तिष्ठन्ति । तेषां विरहे तु मृत-प्रायोऽहम् । येन मम गात्रं भूमौ पिपत्सु इव ! पितः ! अहं तु तत्समीपमेव गन्तुमभिलषामि । तैः सहैवाहं तपोनिरतः स्थास्यामि । विभाण्डकोऽब्रवीत्—'तास्तु मायाविन्यः राक्षस्यः तपस्यायामन्तराय-मुत्पादयन्ति । तासु दृष्टिपातोऽपि नोचितस्तपस्विनाम् ।' पुत्र ! असाधव एव सुरापानतत्परा जायन्ते । नोचितमेतादृशं सुरापानमृषी-णाम् । तास्त्वां सुरामपाययन्; एताः स्रजोऽपि नास्माकं व्यवहार-योग्याः ।'

पुत्रं नानाप्रकारैर्निवर्तयन् विभाण्डकः दिनत्रयपर्यन्तं गणि-कान्वेषणार्थं परिभ्रमन्नपि तासां कामपि प्रवृत्तिमलभमानः स्वाश्रमं

प्रत्यावर्तत। अनन्तरं तस्मिन्पुनरपि तपस्यार्थं वनं प्रयाते ताः गणिकाः पुनरप्याश्रममुपस्थिताः। ऋष्यशृङ्गस्तदवलोकनतः प्रहृष्टमनाः उक्तवान्—'युष्माकमाश्रमः कियद्दूरं यावत्। कस्मिन्नुदेशे च ?' वाराङ्गनाः ऊचुः—'अस्यैव योजनत्रयमभिव्याप्य स्थितस्य पर्वतस्यापरपार्श्वे एवास्तेऽस्माकं रमणीयाश्रमः।

ऋष्यशृङ्गोऽगदीत्—'पितुः पुनरागमनात्पूर्वमेव युष्मदाश्रममुपगच्छेयम्, आगम्यताम्।

वेश्यागणः तं नौकामानीतवान्, विविधोपायैश्च तं प्रलोभ्य अङ्गदेशाभिमुखयात्रार्थं प्रस्तुताः।

नौका क्रमशः लोमपादराज्यसीमानमाससाद। नृपतिश्चात्रैकं विचित्राश्रमं निर्माय ऋष्यशृङ्गं अत्यधिकसम्मानपूर्वकं निजराजधानीं प्रति नीतवान्। राज्ये च प्रचुरा वृष्टिर्जाता - अंगराजश्च शान्ताख्यां स्वकन्यां ऋष्यशृङ्गेण सहोदवाहयत्। इत्थं महातेजाः ऋष्यशृङ्गः सर्वकामसम्पन्नो भूत्वा अङ्गेषु निवासं कर्तुमारेभे।

राजा दशरथः सुमन्त्रमुखादृष्यशृङ्गोपाख्यानमुपश्रुत्य वसिष्ठानुमतिक्रमेण अमात्यादीन्गृहीत्वाङ्गदेशं प्रयातः। आसीदङ्गराजेन सार्धं दशरथस्य बन्धुता। लोमपादः तस्य सादरं स्वागतं कृतवान्। कतिचिद्दिवसपर्यन्तमत्रैव कृतनिवासो दशरथः लोमपादमभिहितवान्—

अङ्गराज ! पुत्रकामनया यज्ञानुष्ठानार्थं कृतसङ्कल्पोऽहम् । तादृश संकल्पनिर्वाहार्थं चेद्भवान्स्वजामातरं मदीयनगरीं प्रेषयिष्यसि, महाननुग्रहो भविता।' लोमपादोऽपि सानन्दं सपत्नीकं ऋष्यशृङ्गमयोध्यापुरीयात्रार्थमनुरुन्धन्नब्रवीत्—'यया सार्धं त्वमुद्वाहमकरोः सा शान्ता अस्यैव गृहेऽजीजनत्। अतस्तस्य जामाता* एषोऽप्यनेन विधिना त्वच्छ्वशुरः ।

---

* अन्यस्मिन् रामायणग्रन्थे समुपलभ्यते। शान्ता दशरथस्य कन्यासीत् परन्तु एतद्घटनाङ्गीकारे उपतिष्ठन्त्यनेकेऽन्तरायाः। प्रथमे कस्याः महिष्याः गर्भे तदुद्भवः ? विशेषतः सन्तानहीनस्य दशरथनृपतेः प्रथमोत्पन्नापत्यस्य कृतककन्यारूपेण लोमपादनृपतये प्रतिपादनमस्याभाविकमिव प्रतिभाति। अपरं च सत्यपि बन्धुस्वसंबन्धे लोमपादः किमर्थमेतत्कन्याङ्गीकारायोद्यतो भवेत् ? अनेकसन्तानवतो दशरथस्य एतादृशघटनासम्भवो भवेदपि । अतः इदमेव युक्तिसङ्गतं भाति यत् शान्ताया दशरथस्यौरसात्मजात्वेऽपि सा प्रधानमहिषीत्रयगर्भतः अपरविवाहितपत्नीगर्भतो वा न समुत्पन्ना । अपुत्रको राजा दशरथः यदा पुत्रेष्टियज्ञसम्पादनार्थं ऋष्यशृङ्गमयोध्यामानीतवान् तदैव ऋष्यशृङ्गः शान्तापाणिग्रहणमकार्षीत् । अत एव शान्ता जनुषोऽनन्तरं एतावद्दीर्घकालपर्यन्तं दशरथस्य नाभूत्किमप्यपत्यमिति वक्तुं शक्यते। यद्यपि अनेकरा-

'अयमपुत्रकः। दूरीक्रियतामिदमस्य कलुषम्'। लोमपादवचनश्रवणात् ऋष्यशृङ्गो ध्यानबलेन-भगवान् विष्णुः स्वकीयांशचतुष्टयेन दशरथपुत्ररूपेणावतरिष्यति - इति ज्ञात्वा सानन्दमयोध्या यात्रार्थमनुमतिप्रकाशमकार्षीत्। यथाकालं ऋष्यशृङ्गमुनिं पुरस्कृत्य

---

मायणमतेन दशरथस्य सार्धत्रिंशत्संख्याका अभूवन् पत्न्यः तथापीदमवलोक्यते यद्वार्धक्यप्राप्तिपर्यन्तं सोऽपुत्रक एवाभूत्।

अन्यरामायणमतेन अपुत्रको राजा दशरथः षष्टिवर्षदेशीयः परमसुन्दरकेकयराजकन्यया बाल्यावस्थया कैकेय्या सह विवाहमकरोत्। विवाहप्रस्तावे केकयनृपतिना निर्धारितमासीत् कैकेयीगर्भजसन्तानस्यैव राज्येऽधिकारो भवेदिति। दशरथेनाप्येतत्समयाङ्गीकारपूर्वकमेव कैकेय्याः पाणिग्रहणं कृतम्।

कतिपयपुराणमतेन दशरथस्य जन्म ख्रिस्तपूर्वं २१५८ (अष्टपञ्चाशदधिकशतोत्तरद्विसहस्र) तमवर्षेऽभूत्। तथा एकषष्टिद्विषष्टिर्वा वर्षाणियावत् जीवितः आसीत्। सर विलियम् जोन्स मतेन पुनः रामस्य जन्म ख्रिस्तपूर्व २०२९ वर्षेऽभूत्। एतन्मतगणनानुसारं (नवविंशत्युत्तरद्विसहस्र वर्षे) रामादीनां जन्मसमये दशरथस्य वयः १२९ वर्षात्मकं बभूव। ततश्च २७ (सप्तविंशति) वर्षानन्तरं अर्थात् १५६ वर्षवयसि तस्य मृत्युर्जातः।

राजा दशरथः शंखदुन्दुभिनिनादैः सार्धं सुसज्जितां सुवासितां चायोध्यानगरीं प्रविवेश। ऋष्यशृङ्गागमनेऽयोध्यावासिनो भृशं सन्तुतुषुः। आगत एव स मुनिरब्रवीत्— 'प्रथममश्वमेधयज्ञ सम्पादनपूर्वकं साराधनं विष्णुः प्रसादयितव्यः। अनन्तरं च पुत्रेष्टियज्ञो भवेत्।

अथ वसन्तकाले दशरथः ऋष्यशृङ्गं प्रणम्य तं यज्ञस्य प्रधानयाजकरूपेण वरयामास। वसिष्ठवामदेवप्रभृतिभिश्च ऋषिभिर्यज्ञसङ्कल्पं कारयामास।

ते ऋषयः आनन्दितमानसाः सन्तः दशरथं आशीर्वचनपूर्वकं यज्ञसामग्रीसमाहरणार्थं, सरयूतीरे यज्ञमण्डपनिर्माणार्थं चोपदिदिशुः। दशरथश्च यज्ञायोजनस्य सर्वोऽपि भारममात्येषु समर्पितवान्।

अथ दशरथः महर्षिं वसिष्ठमब्रवीत्—'हे मुनिवर! भवतैव यथाविधि यज्ञसम्पादनं विधेयम्। एतादृशी च समुचिता व्यवस्था करणीया येन यज्ञानुष्ठाने न स्यात्कापि हानिः प्रत्यूहो वा। भवान् मम सुहृत्परमगुरुश्च। यज्ञस्यास्य सर्वोऽपि भारस्त्वय्यैव निहित आस्ते।'

राजचक्रवर्तिनं दशरथमाश्वास्य वसिष्ठः गणकखनकस्थपतीन्, सूत्रधरशिल्पकारान् शुद्धस्वभावशास्त्रज्ञपण्डितांश्च समाहूयाब्रवीत्— 'युष्माकं भूपतेर्निर्देशानुसारं यज्ञस्यायोजनं कार्यम्। विस्तीर्णा च यज्ञशाला विनिर्मिता भवतु। नृपतिब्राह्मणातिथिनिवासार्थं वासभवनानि अश्वशालाप्रभृतयश्च सुचारुरूपेण निर्मीयन्ताम्।' स्वनिर्देशानु-

तुरगाङ्गानि खण्डशो विधाय आहुतीः प्रदत्ताः । श्रौतकर्मनिपुणा ऋत्विग्गणाः तस्याश्वस्य वसामेदोमज्जावपाः शास्त्रानुसारं हुतवन्तः । दशरथेन राज्ञा वसाधूमगन्धावघ्राणं विहितम् । विष्णुप्रीत्यर्थं विहिते अश्वमेधयज्ञे पूर्णतां गते दशरथः होत्रध्वर्यूद्गातृयाजकेभ्यः अन्यान्य-ब्राह्मणगणेभ्यश्च प्रचुरदक्षिणादानपरो बभूव । आनन्दिता ब्राह्मणाश्च दशरथं धन्यं मन्यमाना आशीर्वचनदानप्रसिता बभूवुः ।

विष्णुप्रीत्यर्थं विधीयमानेऽश्वमेधयज्ञसमारोहे समाप्तिं गते ऋष्य-शृङ्गमुनिः ब्राह्मणगणैः सह अथर्वोक्तमन्त्रैः पुत्रेष्टियज्ञानुष्ठानतत्परो बभूव । सप्रयत्नं यथाविधिहवनफलस्वरूपं यज्ञीयाग्निसकाशात् अतुलनीयप्रभासम्पन्नो महाबलस्तप्तकाञ्चनवर्णो भगवान् विभावसुः कर-धृतपायसपूर्णस्वर्णपात्रः आविर्भूय दशरथमवादीत्—'प्रजापतिप्रेषित-पुरुषोऽहम् । महाराज! देवप्रस्तुतं पुत्रोत्पत्तिहेतुभूतं गृहाणेदं दिव्यं पायसम् । इदमेव पायसं महिषीभ्योऽपि भक्षयितुं दातव्यम् । ध्रुवं त्वं परमात्मानं हरिं पुत्ररूपेण प्राप्स्यसि ।' नृपतिपाणौ पायसपात्रं समर्प्यासौ दिव्यपुरुषोऽन्तर्हितो जातः । पूर्णाश्च मनोरथा नृपतेः । सामोदं वसिष्ठं ऋष्यशृङ्गं च साष्टांगपातं प्रणम्य नृपतिः तदाज्ञानुसारं पायसार्धं प्रधानमहिष्यै कौसल्यायै प्रददौ । अवशिष्टपायसस्यार्धांशं सुमित्रायै ततोऽप्यवशिष्टस्य चार्धं कैकेयीमहिष्यै प्रतिपाद्य शेषमंशं

पुनर्मनसि विचार्य सुमित्रायै एव समर्पितवान् । * इत्थं राजमहिष्यः तादृशदिव्यचरुभक्षणपूर्वकं गर्भधारणामकार्षुः । ताश्च स्वकीयदीप्त्या देवाङ्गना इव राजप्रासादे निवासं कृतवत्यः ।

## रामादीनां जन्म

यज्ञसमारोहः समाप्तिमयात् । निमन्त्रितो राजन्यगणः ब्राह्मण-वर्गः अतिथ्यभ्यागतेतरद्विजगणाः सपत्नीकः ऋष्यशृङ्गश्च स्वस्वस्थानानि प्रतिनिवृत्ताः । अथ अतीतेषु दशसुमासेषु कौसल्याराज्ञी दिव्यलक्षण-सम्पन्नं देवशिशुमिवापूर्वपुत्ररत्नमजीजनत सतु पुत्रः साक्षाद्विष्णोरर्धांशः। समयस्तु चैत्रमासः, शुक्लपक्षः, शुभा च नवमीतिथिरासीत् । पुनर्वसुन-क्षत्रयुक्तकर्कराशौ रविभौमबृहस्पतिशुक्रशनिषु क्रमशः मेषमकरकर्क-मीनतुलाह्वयपञ्चराशिस्थितेषु मध्याह्नसमये सनातनः परमात्मा जगन्नाथः दशरथनृपतिभवने रामरूपेणावतीर्णोऽभूत् । कैकेयी पुष्यनक्षत्रे भरत, सुमित्राचाश्लेषानक्षत्रे लक्ष्मणशत्रुघ्नौ प्रसूतवती । स्वप्रभावतः भगवान्विष्णु-

---

* पद्मपुराणानुसारं राजा दशरथः कौसल्यासुमित्रा सुरूपा-सुवेशाख्याभ्यश्चतसृभ्यः प्रधानमहिषीभ्यः इदं दिव्यपायसं समानांशैर्वि-भज्य प्रददौ । तासां चतसृणां गर्भतश्च क्रमशः रामलक्ष्मणभरतशत्रुघ्ना जाताः । तत्र दशरथप्रियमहिष्याः कैकेय्याः न दृश्यते कोऽप्युल्लेखः सम्भवतः कैकेय्याः एव 'सुरूपा' इति अन्यत् नाम अभूत् ।

श्चतुर्भिरंशैः दशरथपुत्ररूपेण क्षितितलेऽवततार । तेषां कान्तिः पूर्वाभाद्रपदोत्तरभाद्रपद्रनक्षत्रप्रभेव । तदानीं नभसः पुष्पवृष्टिः पपात । समुत्थितश्च देवलोके दुन्दुभिनादः। विविधोत्सवमुखरिता चाभूदयोध्या नगरी। प्रीतेन दशरथेन सहस्रशो ग्रामाः, स्वर्णरत्नादिकं, बहुमूल्य-वस्त्राणि पयस्विन्यो धेनवश्च ब्राह्मणसात्कृताः। इत्थं पुत्ररत्नलाभेन दशरथो राजाऽऽनन्दसागरे मग्नोऽजनि। कुलगुरुवसिष्ठेन सह नृपः पुत्रदर्शनमकार्षित् । राजीवलोचनरामचन्द्रदर्शनेन नासीत्तस्यानन्दस्य मर्यादा। गुरुसहायेन पार्थिवेन पुत्राणां जातकर्मादिकं सम्पादितम्। जन्मतश्चैकादशेऽह्नि गुरुर्वसिष्ठः सर्वेषां नामकरणसंस्कारमकार्षीत्।

## देवांशैर्वीरगणाविर्भावः

भगवान् विष्णुः दशरथस्य पुत्ररूपेण स्वकीयचतुर्भिरंशैरवतीर्ण इत्याधिगम्य प्रजापतिर्ब्रह्मा सामोदं देवगणानाहूय भगवदभिप्रायमनुसृत्या-ब्रवीत् - 'हे अमरगणाः । यूयं सर्वे देवकार्यसहायकरूपेण अनेक-वीरसृष्टिपरा भवथ, ये वीराः भगवतः राक्षसवधरूपमहाकार्यार्थं श्रीहरिः यावत्कालपर्यन्तं भूमण्डले स्थास्यति तावत्कालपर्यन्तं तत्सहायका भविष्यन्ति। ममाननात् ऋक्षराजः जाम्बवान् उत्पत्स्यते । यूयमपि विद्याधरयक्षगन्धर्वस्त्रीणां अप्सरः-किन्नरवानरीणां च गर्भेषु पराक्रम-शालिनः वीरगणानुत्पादयत । इत्थं इन्द्रसूर्यकुबेराः क्रमशः वालिसुग्रीवगन्धमादनान्, विश्वकर्माग्निवरुणाः नलनीलसुषेणांश्च

सृजन्तु। वायुश्च गरुडतुल्यवेगवन्तं बलवन्तं बुद्धिमन्तं हनूमन्तमुत्पादयतु। एवं अमरगणाः हरेः सहायार्थं पर्वतवृक्षयोद्धॄन् महाबलवीरगणानुत्पाद्य भगवदाविर्भावप्रतीक्षापराः स्थास्यन्ति।

## बाल्यलीलाः

दशरथात्मजाः पूर्णचन्द्र इव प्रतिदिनं वर्धितुमारेभिरे। श्रीरामचन्द्रः स्वभ्रातृभिः सह बाल्यलीलायाः मनोमोहनचेष्टानां बाल्यालापानां च माध्यमेन मातापित्रोरानन्दपरिवर्धनहेतुर्बभूव। मनोहरवेशसज्जितः पुत्रगणः प्रासादाङ्गणे इतस्ततो भ्रमणपरोऽभूत् मातरः स्वस्वपुत्रेभ्यः नानाविधपायसापूपमोदकादिमिष्टान्नप्रदानेनातोषयन्। एवं व्यतीते कस्मिंश्चित्काले राजपुत्रगणः क्रमेण कौमार्यमारूढः। वसिष्ठो महर्षिस्तेषामुपनयनसंस्कारं निर्वर्तयामास तेभ्यश्च विद्याशिक्षां दातुमुपचक्रमे। कतिपयैरेव दिनैः कुमाराः धनुर्वेदे न्यायशास्त्रेषु च पारंगताः। तेषु लक्ष्मणः रामं, शत्रुघ्नः भरतं च छायेवान्वगच्छताम्। चतुर्ष्वपि ज्येष्ठो रामः पितुर्विशेषरूपेणानन्दहेतुरासीत्। स्वयंभूर्ब्रह्मेव स सकलप्राणिनां प्रियतरो बभूव। सर्वेऽपि दशरथसुता वेदज्ञाः शौर्यसम्पन्नाः लोकहितकांक्षिणः विज्ञाः क्षात्रोचितसर्वगुणभूषिता आसन्; किन्तु रामः सर्वापेक्षया तेजस्वितरः, अधिकसत्यपराक्रमः निर्मलशशधर इव लोकानां प्रियतरः, धनुर्वेदवित्, पितृशुश्रूषापरायणः गजाश्वरथारोहणे दक्षतरश्चासीत्। रामः धृतशरशरासनतूणीरः अश्वारूढः भ्रातृभिः

सह नित्यं मृगयासक्तः सन् हतान् वन्यपशून् पितृसमीपमानयामास। प्रातरुत्थाय स्नानादिकं च विधाय रामः कृतजननीजनकाभिवादनः सविनयं समस्तपौरकार्यावलोकनपूर्वकं पुरजनपदवासिनां कुशलपरामर्शपरो बभूव। ततः स्वभ्रातृबन्धुगणैः सार्धं विहिताभ्यवहारः मुनीनां सविधे धर्मशास्त्रादिरहस्यसन्दोहं सश्रद्धमशृणोत। इत्थं भगवान् हरिः स्वकीयचतुरंशैः मनुष्यलोकमवतीर्य मानवकर्मानुसरणपरः सन् मर्त्य इवाचरणमकरोत।

सकलोऽपि राजकुमारगणः शूरः लोककल्याणरतः ज्ञानवान्, गुणवान्, सर्वशास्त्रज्ञः सेवापरायणः तेजस्वी च सम्पन्नः। महापराक्रमशाली रामः सकलजननयनरञ्जको बभूव। स्वात्मजान् यौवनपदार्पणपरानवलोक्य धर्मात्मा दशरथो नृपः उपाध्यायेन बान्धवगणैश्च सार्धं तेषां विवाहायोजनविषये परामर्शपरो जातः।

कदाचित् यशस्विनि दशरथनृपतौ अमात्यवर्गपरिवेष्टिते सिंहासनोपविष्टे महातेजस्वी विश्वामित्रऋषिस्तत्रोपस्थितोऽभवत्। दशरथो नृपतिस्तमवलोक्य ससम्भ्रममुत्थितः सन् वसिष्ठेन सह तत्प्रत्युद्गमनपूर्वकं यथाविधि पाद्यार्घ्यादिभिः सम्पूज्य कृताञ्जलिपुटो भक्तिनम्रः व्याजहार—'हे मुनिवर! भवदागमनेन कृतार्थोऽहम्। येषां गृहे भवादृशा महात्मानः पदार्पणं कुर्वन्ति तत्रैव सर्वसम्पदः समुपस्थिता भवन्ति। उच्यताम्, किमागमनप्रयोजनम्? भवदाज्ञापालनतत्परोऽहम्।

दशरथस्यात्यद्भुतवचनविनयेन हर्षपुलकितो विश्वामित्रः उक्तवान्—'राजशार्दूल! महावंशोत्पन्नो भवान्, वसिष्ठोपदेशानुसारं सम्यगाचरणप्रसितः, अतः एतादृशविनयसम्पत् त्वय्येव शोभतेतराम्। हे नरशार्दूल! सत्यप्रतिज्ञः खलु त्वम्। मम काचिदभ्यर्थना त्वया पूरयितव्येति समीहे। उपस्थितेषु पर्वसु देवपितृलोकादीन्समुद्दिश्य यज्ञकर्मारम्भपरे मयि मारीचसुबाहूतदनुसारिगणाश्च उपस्थिताः सन्तः यज्ञीयवेदीं मांसरुधिरप्लावितां विधाय अध्वरविध्वंसं विदधात। तेषां शापदाने नाहमभिलाषुकः यतः यज्ञदीक्षितेन कस्मैचनापि शापदानं न विधातव्यमिति नियमः। अतस्तद्वधपूर्वकं अस्मद्यज्ञरक्षार्थं लक्ष्मणेन सार्धं स्वज्येष्ठपुत्रं रामचन्द्रं प्रेषय। हे नरपते! राम विहाय यज्ञध्वंसकारिराक्षसविनाशार्थं न काप्यन्या व्यक्तिः समर्था। यतस्ते दुरात्मानोऽत्यधिकपापरायणा बलदृप्ताश्च। वसिष्ठेन सार्धं परामर्शपरेण त्वया रामलक्ष्मणौ मया सार्धं प्रेषितव्यौ येन तव कल्याणं जायेत।'

विश्वामित्रवचनं निशम्य राजा दशरथः विशेषरूपेण चिन्तितान्तरः भीतश्चाजायत। एकान्ते सवसिष्ठमब्रवीत्—'प्रभो उपदिश्यतामत्र किमस्मत्कर्तव्यम्? रामं कथमपि त्यक्तुं नाभिलषामि। अद्यापि रामः केवलं पञ्चदशवर्षीयो बालकः। कथं स दुर्धर्षमायाविराक्षसगणैर्युद्ध्येत? वरं ममैव स्वकीयामक्षौहिणी सेनां गृहीत्वा विश्वामित्रयज्ञरक्षार्थं गमनम्। अहो! दीर्घकालपर्यन्त संतानहीनेन मया देव-

नाशीर्वादफलस्वरूपं अमरसदृशाश्चत्वारः पुत्राः प्राप्ताः। रामस्तु तेषां मध्ये मम प्रियतमः। रामस्यादर्शन मम कदापि सह्य न स्यात्। अत्र विश्वामित्रमुनेः प्रत्याख्यानं कर्तुमसमर्थोऽहम्। स ध्रुवं मय्यभिशापनपरो भवेत्। इदानीं केन मम सत्यपालनं मङ्गलं च स्यात् इत्युपदिशतु भवान्।'

दशरथखेदवचनं निशम्य वसिष्ठस्तं सान्त्वयन्नुवाच। राजन्! श्रूयताम् दिव्यं रहस्यमिदं यत्प्रयत्नपूर्वकं गोपनीयम्। न खलु रामः मनुष्यमात्रः, परमात्मा सनातनपुरुष एव भूभारहरणार्थं ब्रह्मणा प्रार्थितः सन् तव पुत्ररूपेणावतीर्णः। त्वमपि ब्रह्मणो वंशधरः प्रजापतिकश्यपः। यशस्विनी कौसल्या च देवमाता अदितिः। भूतभावनो विष्णुस्त्वत्तपस्यासन्तुष्टस्त्वत्पुत्ररूपेणाजनि। राजन्! लक्ष्मणस्तु अनन्तस्यांशः। अय निरंतरं रामानुगमनपरः। शंखचक्रगदापद्मपाणेः विष्णोः शखचक्रे भरतशत्रुघ्नरूपेणाजनिषाताम्। योगमाया सीता अपरत्र विदेहराजजनकस्य कन्यारूपेणावतीर्णा। तया सार्धं रामं संयोजयितुमेव देवप्रेरितो विश्वामित्र उपास्थितः। यज्ञरक्षार्थं राक्षसवधविधानं केवलं व्याजमात्रम्। इदं रहस्यं त्वया कदापि कस्यापि पुरतः नोद्घाटयितव्यम्। अत एव विश्वामित्रं सम्पूज्य प्रीतमनसा त्वया रमानाथरामेण सह लक्ष्मणः प्रेषितव्यः। एतेन तव कल्याणं भविष्यति।'

श्रुतवसिष्ठवचनो दशरथः आनन्दितः आत्मानं कृतकृत्यं धन्यं च मन्यमानः सानन्दं रामलक्ष्मणावाहूय मङ्गलाचरणसमाप्त्यनन्तरं उभावपि

शिरसि समाघ्राय समालिङ्ग्य च प्रीतेन मनसा तौ विश्वामित्रेण साकं प्रेषयामास। राजीवलोचनौ रामलक्ष्मणौ कौसल्यामातरं पितरं दशरथं च प्रणम्य विश्वामित्रानुगमनपराबभूताम्; सुगन्धिः सुखस्पर्शश्च समीरणः वातुमारेभे, अयोध्यायां शंखदुन्दुभिनादः समुत्थितः, पुष्पवृष्टिरपि समजनि। शोभमानबाणासनः समुन्नततूणीरो बद्धाङ्गुलित्राणः खड्गधारी च रामः विश्वामित्रमुनिं भूषयन् पुरोगामिनं तमनुससार। काकपक्षधरो लक्ष्मणोऽपि धृतधनुर्बाणः राममन्वगमत्। अथ मुनिवरो विश्वामित्रः क्रोशषट्कदूरवर्ति सरयूतीरमासाद्य मधुरस्वरेण राममुक्तवान् –'वत्स! त्वं शीघ्रमाचम्य शुचिर्भूत्वा च मत्तः बलातिबलाख्य विद्याद्वयं अन्यान्यमन्त्रांश्च गृहाण। तात राघव! एतन्मन्त्रप्रभावतः श्रमज्वरपिपासापीडितः, केनापि रूपेण विकारग्रस्तो वा न भविष्यसि। प्रमत्तं प्रसुप्तं वा कस्यामप्यवस्थायां राक्षसगणः प्रधर्षयितुं नालं भविता। भूतले त्वमेव सर्वेषु बलशालितमः, तथा सौभाग्यकर्मदक्षताज्ञानबुद्धिषु, दयादाक्षिण्ययोः वादप्रतिवादे च त्वत्तुल्यकक्षः कोऽपि न स्यात्। बलातिबलामन्त्रजपेन तव क्षुत्पिपासाक्लान्तिर्नश्येत्। इदं विद्याद्वयं श्रेष्ठज्ञानमङ्गलयोः प्रसूतिः। अनेकसद्गुणभूषितस्यापि भवतः कृते एतद्विद्याद्वयमुपयुक्तमिति मनसि विचार्य तुभ्यमिदं दातुमुत्सहे।'

विश्वामित्रवचनं निशम्य रामः प्रहृष्टान्तरः आचम्य शुचिर्भूत्वा उक्तविद्याद्वयग्रहणमकर्षीत्। त्रयोऽपि ते तस्यां रजन्यां सरयूदक्षिणतीरे

सुखं वासं चक्रुः । दशरथनृपतेरेतावात्मजौ अनभ्यस्ततृणशय्याशायिनावपि विश्वामित्रस्य मधुरालापैः तां रात्रिं सानन्दमत्यवाहयताम् ।

परस्मिन्नहनि प्रातःकाले आह्निकदेवकार्यादिकं सावित्रीजपं च विधाय ते यात्रार्थं प्रस्थिताः । कियद्दूरं च गत्वा जाह्नवीसरयूसङ्गमस्थले कश्चिद्रमणीय आश्रमः समुपस्थितः । विश्वामित्रोऽब्रवीत— 'पूर्वमस्मिन्नेवस्थले कन्दर्पस्याश्रम आसीत् ।'

विश्वामित्रगमनेन विशेषतः प्रीतः आश्रमवासिमुनिगणस्तेषामनेकविधसत्कारपरो भूत्वा तां निशीथिनीमतिवाहयितुं समुचितव्यवस्थां कृतवन्तः । अन्येद्युः त्रयोऽप्येते नौकया भागीरथीमुदतरन् । मध्येगङ्गं जलस्रोतसः तुमुलशब्दं निशम्य कुतूहलाक्रान्तमना रामः जिज्ञासितवान—'मुनिवर ! कस्यायं शब्दः ?' विश्वामित्रो व्याजहार —'ब्रह्मणो मनसः यन्मानससरोवरं समुत्पन्नं तस्मादेव सरसः निःसृता सरयूसरित् अनतिदूरमेव जाह्नवीगर्भविलीना अजायत । अत एवायं विपुलजलोच्छ्वासकल्लोलशब्दः । इदं सङ्गमस्थलं अतिपुण्यं तीर्थम् । त्वयेदं सभक्तिभावं प्रणम्यताम ।' नदीमुत्तीर्य ते त्रयोऽपि हिंस्रजन्तुपरिपूरितमेकं घोरमरण्यं प्रविविशुः । तदानीं विश्वामित्रः सत्यपराक्रमं रामं संबोध्याब्रूत—'इदं तु ताडकावनम् । अत्रैव ताडकाभिधाना काचित् मायाविनी ऋषिशापग्रस्ता यक्षिणी निवसति । सा किल यज्ञान्तरायकारिणी लोकानां च दुःखकारणम् ।

मलदकरूषाभिधं जनपदद्वयमनया विध्वस्तम् । त्वं जनकल्याणार्थं दुर्वृत्तामेनां हत्वा राजधर्मपालनपरो भव । शास्त्रवचनमप्यास्ते—

"नृशंसमनृशंसं वा प्रजारक्षणकारणात् ।
पातकं वा सदोषं वा कर्तव्यं रक्षता सदा ॥"

२६ सर्ग १८ वा. रा.

'भृतप्रजापालनभाराणां पक्षेऽयमेव सनातनो धर्मः ।'

विश्वामित्रवचनश्रवणानन्तरं अमितवीर्यः रामः जगाद—'यात्रासमये पित्राहं निर्विचारं भवदाज्ञापालनार्थमादिष्टः । अहमपि त्वदादेशं पूर्णतयानुसरिष्यामि ।' इत्युक्त्वा सज्जशरासनग्रहणपूर्वकं चतुर्दिक्षु प्रतिध्वनितं टंकारमुदपादयत् । तेनैव टंकारशब्देन सम्पूर्णापि वनस्थली निनादिता जाता । ज्याघोषमिमं निशम्य क्रोधाविष्टा ताडका आकाशे धूलिविक्षेपं शिलावृष्टिं च कुर्वन्ती सगर्जनं रामदिशायामेव प्रचलिता । दृढव्रतो रामः तां बृहदाकारां विकृतदशनां क्रुद्धां यक्षिणीं विलोक्य लक्ष्मणं निजगाद—'लक्ष्मण ! दृश्यताम्, कीदृग्भयानकमस्या यक्षिण्याः शरीरम् ? दृष्टमात्रायामप्यस्यां दुर्बलव्यक्तेर्हृदयं कम्पितं स्यात् । पश्य मया छिन्नकर्णनासिका सा दुष्टा स्वयमेव पलायिष्यति । स्त्रीजातिवधं विधातुं नाभिलषामि ; अस्याः पराक्रमं गतिं शक्तिं च नाशयिष्यामि । तत्क्षणमेव ताडका चतसृरपि दिशः

शिलावर्षणेनाच्छाद्य रामलक्ष्मणौ व्याकुलाविवकृतवती । तदैव रामः शरद्वारा शिलावृष्टिनिवारणपूर्वकं निमेषादेव यक्षिणीहस्तद्वयं निकृत्तवान् । लक्ष्मणश्च गर्जनपरायणायाः ताडकायाः कर्णनासिकं चिच्छेद । कामरूपिणी ताडका अकस्मादन्तर्हिता सती अलक्षितैव वृक्षादिक्षेपणं शिलावृष्टिं च विधाय रामलक्ष्मणौ व्यथितावकार्षीत् । तदवलोक्य विश्वामित्र उवाच—

"अलं ते घृणया राम! पापैषा दुष्टचारिणी ।
यज्ञविघ्नकरी यक्षी पुरा वर्धेत मायया ॥
वध्यतां तावदेवैषा पुरा सन्ध्या प्रवर्तते ।
रक्षांसि सन्ध्याकाले तु दुर्धर्षाणि भवन्ति हि ॥" २६-२१, २२

एतन्निशम्य रामः एकेनैव सुतीक्ष्णशराघातेन तां ताडकां धाराशायिनीमकार्षीत् । * ताडका, शापग्रस्ता अभूत्कापि यक्षिणी । श्रीरामचन्द्रहस्तादधिगतनिधना ; मृत्युकाले रामदर्शनफलस्वरूपं पापमुक्तायास्तया आत्मा ऊर्ध्वगतिलाभान्वितोऽभूत् ।

---

*ताडका मारीचस्य जननी आसीत् । कृत्तिवासविरचितरामायणेऽपि तद्वर्णितमास्ते; ताडकायाः—-ताटकायाः वा विषये पुराणादिषु ज्ञायते—यत् सा सुकेतुनाम्नः कस्यचिद्यक्षस्य कन्या (यक्षास्तु देवयोनिविशेषाः । एते च कुबेरस्यानुचराः अत्यन्तकृष्णवर्णाः । ...

दिव्यास्त्रप्राप्तिः

ताडकावधानन्तरं सहस्राक्षः पुरन्दरः मरुद्गणाश्च साधुवाद-पूर्वकं श्रीरामचन्द्रमभिनन्द्य विश्वामित्रमब्रुवन्—'महर्षे! स्वस्ति भवते!

---

ब्रह्मा प्रजोत्पादनसमयेऽन्धकारे यां क्षुधार्तप्रजासृष्टिं चकार तेषु ये क्षुधानिवारणार्थं ब्रह्माणमेव भक्षयितुमुद्यतास्ते यक्षाः सञ्जाताः—ये च एतादृश-क्रूरकर्मणः प्रतिरोध (रक्षात्वं) विधातुं प्रवृत्ताः ते राक्षसा इति प्रसिद्धाः [इति पाद्मे] यक्षराक्षसनाम्नो अपरोपि अनेकविधेतिहासो लभ्यते—स्वयंभूरादौ जलवृष्टिं विदधौ ततश्च एतज्जलरक्षणार्थं प्राणि-सृष्टिं चकार। ये जलपूजां विधातुमैच्छन् ते यक्षाः (यक्षामः) संवृत्ताः। ये च जलरक्षाभिलाषिणः ते राक्षसाः (रक्षामः) अभूवन्। एतेन सम्यग्ज्ञायते यत् यक्षा राक्षसाश्च साधारणमनुष्यजात्यपेक्षया स्वतन्त्राः बलवत्तराश्चासन्निति।

पितामहवरलाभतः ताडका सहस्रमत्तदन्तिबलान्विताऽऽसीत्। जम्भदैत्यात्मजसुन्देन (अयं तु दैत्यराजनिकुम्भपुत्र 'सुन्द'तो अपरा व्यक्तिः) सह ताडकायाः विवाहोऽजायत; तस्यास्तु बलशाली औरसः पुत्रो मारीच नामा जातः। केनाप्यपराधेनागस्त्यमुनिः क्रुद्धः सन् सुन्दं गतप्राणं विदधौ। प्रतिहिंसापरायणो मारीचः पितृघातक-मगस्त्यमुनिं हन्तुमासीत्प्रयत्नशीलः। ताडकापि स्वामिवधकर्तुरुपरि

रामचन्द्रे स्नेहप्रकाशपरो भवेः । कृशाश्वप्रजापतेः सत्यपराक्रम-सम्पन्नान्, तपोवनसम्भूतान् अस्त्ररूपात्मजान् श्रीरामचन्द्राय समर्पय । विप्रवर ! अयं रघुनन्दन एवैतादृशशस्त्रप्राप्तियुयोग्यपात्रम् । यतः तेन देवतादि हेतोः अतिमहत्कल्याणकार्यं विधेयमास्ते' इत्यभिधाय देवगणाः प्रययुः ।

---

प्रतिरोधोद्यताऽभूत्—अगस्त्यमुनिः आत्मरक्षार्थं ताडकामारीचौ शप्तवान् येन उभावपि जनन्यात्मजौ राक्षसरूपेण परिणतौ प्रतिहिंसार्थं द्रावयेतौ अगस्त्यश्रमस्थानां ब्राह्मणतपस्विनां तत्पोषणादिकर्तृणां चोपरि घोरमत्याचारं विधातुमारेभाते। तपस्विजनांश्च बहिर्निष्कास्य मलदकरुषाभिधसमृद्धजनपदद्वये स्वाधिकारं स्थापयामासुः । क्रमशश्च अगस्त्यमुनेस्तपोवनं ताडकावने परिणतम् । तदानीं तत्स्थानीयः कोऽपि क्षत्रियशासकः तयोर्दमनकर्मण्यसमर्थः आसीत् । निरुपायः सन् विश्वामित्रः अयोध्यामेत्य ताडकानिग्रहार्थं प्रति सहायप्रार्थनां विदधे ।

रामेण सह युद्धे ताडका हता, समग्रमपि ताडकासैन्यं च ध्वस्तम् ; पुत्रो मारीचोऽप्याहतो भूत्वा सप्ताहाभ्यन्तरे लङ्कामागत्य रावणं आश्रितः । केषांचिन्मते तदानीं रावणराज्यसीमा विन्ध्याचलदक्षिणदिक्पर्यन्तं प्रसृता बभूव । ताडकामारीचावपि रावणनियोजितौ प्रशासकावास्ताम् । विभिन्नरामायणेषु दृश्यते यन्मारीचः कोटित्रयसेनापरिवृतः रामेण सार्धं युद्धे ... एतेन ताडकामारीचौ कियन्महतो

सन्ध्यासमयो जात इति कृत्वा ते सर्वेऽस्मिन्नेव वने तां रजनीमतिवाहयामासुः। प्रभाते महायशा विश्वामित्रः सस्मितं मधुरवचनैः रामं निजगाद—'हे महायशस्विन् अभिराम! राघव! प्रीतोऽस्मि तवानेन प्रशंसनीयकार्येण। कल्याणमस्तु तुभ्यम्। इदानीं तेऽह-ममितशक्तिशालीनि सकलदिव्यास्त्राणि परमप्रीत्या प्रदास्यामि। एतैरेवास्त्रैः देवदानवगन्धर्वनागगणान् पराभवितुं समर्थः स्याः। तुभ्यमहं सुमहान्ति दण्डचक्रकालचक्रधर्मचक्राणि विष्णुचक्रेन्द्रचक्रे, वज्रास्त्रम्, शैवशिरो ब्रह्मशिरोऽभिधानेऽस्त्रे, सर्वोत्तम ब्रह्मास्त्रम्, मोदकी शिखरिनाम्नयौ शुभफलदायिन्यौ गदे, धर्मपाशकालपाशौ, अनुत्तमं

---

जनपदस्याधिकारिणावास्तामिति अनुमातुं सुकरम्। तस्मिन्कालेऽपि रावणस्य राज्यं दक्षिणभारतस्याधिकांशे विस्तृतमासीत्। सम्पूर्णं जनस्थानमपि लङ्केश्वराधीनं जातमासीत्। रामचन्द्रः वनवासकाले युद्धं विधाय सर्वमपीदं क्षेत्रं रावणाधिकारतः मुक्तमकार्षीत्।...

पुराणवर्णिता विद्याधरा, गुटिका-अञ्जनविद्या पारदर्शिनः यक्षा इत्यादयः संज्ञा रहस्यमयाः। एक एव प्रथमजीवने यक्षः पुनश्च शेषजीवने दानवः, असुरः, राक्षसो वा जायते। नेयं तेषां जन्मगतो-पाधिः अपि तु कर्मगता इति प्रतिभाति। इदमपि पुनः दृश्यते राक्ष-सरूपेण परिणतानामसुराणां न केवलं मुखाकृतावेव परिवर्तनं जात-मपितु तेषामाचारव्यवहाररीतिनीत्यभ्यवहारादिकमपि पूर्वतो भिन्न-

वरुणपाशास्त्रम्, शुष्क-आर्द्र नामकम्शनिद्वयम्, पाशुपतनारायणास्त्रे, मुसलकरालकिङ्किण्यस्त्राणि, चन्द्रबाणः, वर्षणशोषणास्त्रे, गन्धर्वमायामयबाणौ, सौरास्त्रम् इत्यादिविविधदिव्यास्त्राणि दातुमभिलषामि। एतानि सर्वाण्यपि अस्त्राणि असीमशक्तिशालीनि कामरूपीणि च। त्वया शुचिना भूत्वा सर्वाणीमानि गृहीतव्यानि।'

अनन्तरं विश्वामित्रोऽपि शुचिः सन् पूर्वाभिमुखोपविष्टः तानि सकलश्रेष्ठास्त्राणि तेषामावाहनप्रयोगप्रत्याहारांश्चोपादिश्य रामाय मंत्रादिप्रदानमकरोत्। मुनिना ध्यातमात्राणि सर्वाण्येतान्यस्त्राणि प्रत्यक्षीभूय विश्वामित्रनिर्देशानुसारं रामस्य पुरतः आविर्भूय कृताञ्जलिपुटानि निजगदुः—'हे परमोदारचरित राम! स्वस्ति भवते! वयं युष्मत्किङ्कराः। यत्किञ्चिद्भवतादिश्यते तदेव विधास्यामः।' रामः प्रसन्नमनमभूत्। एते प्रायः इन्द्रजालविद्याविशारदाः स्वशरीमन्यदर्शनतां नेतुं समर्थाः। **अप्सरसः**—अद्भयः सरन्ति (अर्थात् जलाज्जायन्ते) एताः सूक्ष्मशरीरधारिण्योऽपि स्थूलदेहिन्यः, **यक्षाः**—कुबेरानुचराः चारुचक्षुषः, **राक्षसाः**--मृतदेहभक्षका निशाचराः हिंसकाश्च; **गन्धर्वाः**--यच्छरीरेभ्यः सुरभिगन्धो निःसरति, विलासिनः सुगन्धिप्रसाधनकारिणश्च; **किन्नराः**—अश्वमुखाः कुरूपाः; **गुह्यकाः**—कुबेरकोषाध्यक्षाः; **सिद्धाः**—अणिमाद्यष्टसिद्धियुक्ताः। **कुबेरः** उत्तरदिगीश्वरः विपुलसम्पदन्वितो राजा वा।

सा दिव्यास्त्रदेहोपरि दत्तहस्त उपस्पृश्य च मधुरकण्ठं व्याजहार—'सर्वाण्यपि यूयमस्मन्मानसवर्तीनि भूत्वा तिष्ठत। कार्यकाले स्मृतमात्राणि उपस्थितानि भवत।' दिव्यास्त्रगणः राघवेन्द्रं प्रणम्य प्रास्थात्। *

---

*वाल्मीकिरामायणमतानुसारं—विश्वामित्रः शुचिर्भूतः विविधास्त्राणामादानसंहारावुपदिश्योवाच—राघव! शिवमस्तु तुभ्यम्। त्वं मत्सकाशात् सत्यव्रत - सत्यकीर्ति - धृष्टरभसप्रतिहारतराणि पराङ्मुखावाङ्मुखे, अलक्ष्यलक्ष्ये, दृढनाभ सुनाभिके, दशास्यशतवक्त्रे, दशशीर्षशतोदरे, पद्मनाभ महानाभ दुन्दुनाभानि, ज्योतिषशकुनम्, नैराश्यविमलम् दैत्यप्रमथनम्, यौगन्धरशुचिबाहुनी निष्कलिविरुचे अर्चिर्मालिधृतिमालिनी, कृत्तिमत्, रुचिरपित्र्ये विधूतमकरकरवीरम्, रतिधनकामरूपाणि, सर्वनाथपन्थानवरुणानि इत्यभिधानैः प्रसिद्धानि अतिदीप्तिशालीनि कामरूपाणि कृशाश्वपुत्ररूपाणि सकलान्यस्त्राणि गृहाण।... एतेषु सकलेषु दीप्तिमत् देहधारि-अस्त्रेषु कानिचिद्धूम्रवर्णानि कानिचिच्चन्द्रसूर्याविव उज्ज्वलगौर-वर्णानि। रामायणमहाभारतग्रन्थयोः एतद्व्यँ अनेकेषामस्त्रशस्त्राणां नामोल्लेखो दृश्यते। तद्यथा - अर्धचन्द्रबाणः, अञ्जलिक बाणः अन्तर्धानम्, अष्टवज्रमाग्नेयमस्त्रम्, ऐन्द्रास्त्रम्, क्षुरप्रधानम्, गरुडास्त्रम्, चक्रव्यूहम्, चक्रं तोमरं, नागपाशं, नाराचास्त्रम्, नालीशम्, पट्टिशं, परशुः, ब्रह्मास्त्रम्, पाशः, पाशुपतास्त्रम् परिघम्, प्रासः, वज्रबाणः

पुनरपि ते शनैः शनैः गन्तुं प्रवृत्ताः। अनुपदमेव जलधर-निबिडमरण्यमवलोक्य राघवो जिज्ञासितवान्—'इह कस्याश्रमो विद्यते? विश्वामित्रोऽगादीत्—'अस्मिन्वने वामनरूपधरो विष्णुस्तपस्यार्थं सिद्धोऽभूत्। अत एवैतत्स्थानं 'सिद्धाश्रम' इति ख्यातम्। अयमेव सिद्धाश्रमः मम निवासस्थानम्। राक्षसगणोऽत्रैव यज्ञविघ्नमुत्पादयति।'

---

विजयधनुः, वैष्णवास्त्रम्, ब्रह्मशिरोऽस्त्रम्, भल्लः, भूषण्डी, शक्तिः, शक्तिशेलम्, शतघ्नी चक्रादिकं च।

एतानि सर्वाण्यपि मारणास्त्राणि भीषणानि शक्तिशालीनि च। सामान्ययोद्धारः एतेषामस्त्राणामधिकारिणः भवितु नार्हन्ति। एतेषु अधिकृतराणि 'दिव्यास्त्राणी'ति ख्यातानि कठोरतपस्यया ब्रह्मचर्य-पालनेन च अर्जितुं योग्यानि। अत्रायं प्रश्नः समुद्भवति यदीमानि अस्त्रशस्त्राणि लोहनिर्मितानि विभिन्नाकृतयः शराः क्षेपणास्त्रविशेषाः सिद्धमन्त्रशक्तिविषया वा आसन्निति।

विश्वामित्रेण श्रीरामचन्द्राय यानि दिव्यास्त्राणि प्रदत्तानि तेषां विषये मुनिनोक्तम्—(वा. रा.) एतानि सकलानि अस्त्राणि प्रजापति कृशाश्वतनयाः। विविधमन्त्ररूपाणि एतानि अस्त्राणि प्रदाय तेषामाह्वान-प्रयोगप्रत्याहारशिक्षाप्युपदिष्टा। शुचिर्भूत्वाऽऽचम्य ध्यानपरस्य च विश्वामित्रमुनेः पुरतः एतानि दिव्यास्त्राणि आविर्भूतानि। विश्वामित्र-

रमणीयां वनशोभामवलोकयन्तस्ते अल्पकालेनैव सिद्धचारण-सेवितं सिद्धाश्रमं प्रति समुपस्थिताः। तत्स्थानगतो मुनिगणः तेषां यथोचितसत्कारपरो बभूव। अथारिन्दमः श्रीरामः कौशिकमगादीत्—'हे महाभाग मुने! भवताद्यैव यज्ञदीक्षितेन भवितव्यम्।' एतन्निशम्य विश्वामित्रो नियतमानसः यथाविधि दीक्षितोऽभूत्।

---

निर्देशानुसारं रामसमीपमेत्य तान्यस्त्राणि उक्तवन्ति—'वयं भवतः किंकराः; कः आदेशः क्रियताम्? यदेव कर्तुमाज्ञापयसि तदेव करवामः।' इत्यादि। रामः हस्तेन तानि संस्पृश्य उक्तवान्—'यूयं सर्वाण्यस्मन्मानसवर्तीनि भवत; स्मृतमात्रैरेवोपस्थितैर्भवितव्यम्; यत्किञ्चित्कर्तुमभिवास्यामि तदेव विधेयम्'। एतानि दिव्यास्त्राणि ततः प्रभृति रामाज्ञानुवर्तीनि अजनिषत। यस्मिन्क्षणे यस्यास्त्रविशेषस्य स्मरणं विहितं तत्तदस्त्रं समुपस्थितं सत् रामाज्ञामनुससार। वाल्मीकिरामायणत एव पुनर्ज्ञायते "यदा महाप्रस्थानार्थं कृतसंकल्पो रामः सान्तः—पुरपुरवासिगणः सरय्वभिमुखं यात्रार्थं प्रस्थितः तदा नानाशरनिकरा धनूंषि शस्त्रास्त्रप्रभृतीति च मनुष्यरूपेण तेनैव सार्धं प्रचलितानि"। देहविसर्जनार्थं सरयूजले प्रविष्टं रामं च सकलानि सशरीराण्यस्त्राणि तमनुजग्मुः।

पाशुपतास्त्राधिगमविषये पुराणादिषु लभ्यते—गाण्डीवी कठोर-तपस्यारतः सन् महेश्वरसकाशादिदं शस्त्रमधिगतवान्। अस्य तेजः

अपरेद्युः प्रातः रामचन्द्रः सन्ध्योपासनं यथानियमं गायत्रीजपादिकं समाप्य विश्वामित्रं प्रणतिपूर्वकं व्याजहार—'भगवन्! दुराचारि राक्षसानामत्याचारेभ्यः कदा यज्ञरक्षा विधातव्या' इति निर्देष्टव्यम्; येन समयव्यतिक्रमो न भवेत्।' आश्रमवासि मुनिगणाः उक्तवन्तः—'मुनिश्रेष्ठः यज्ञार्थं दीक्षितः स दिनषट्कपर्यन्तं मौनं स्थास्यति युवाभ्यामवहितचित्तेनाश्रमरक्षा विधातव्या।'

---

"युगान्तकालानलसदृशमासीत्। तच्चास्त्रं पञ्चवक्त्रं, दशबाहु, त्रिलोचनाचितं चाभूत्।" 'ब्रह्मशिरोऽस्त्रशक्तिविषये ज्ञायते तद्ब्रह्मतेजःपूर्णमस्त्रविशेषः।" द्रोणाचार्येण अर्जुनाश्वत्थामभ्यां इदमस्त्रमुपदिष्टम्; अस्य प्रयोगसंहारशिक्षा अर्जुनाय प्रदत्ता प्रयोगशिक्षामात्रमश्वत्थाम्ने। अश्वत्थाम्नापि सान्वयपाण्डवविनाशार्थं एतदस्त्रप्रयोगोऽकारि। एकाम् इषीकां मन्त्रपूतां विधाय तस्याः ब्रह्मास्त्ररूपेण प्रयोगफलस्वरूपमिदमस्त्रमुत्तरागर्भंप्रविश्य तत्रस्थशिशुमनाशयत्। अत एवैतदस्त्रं किञ्चिद्धातुनिर्मितः पदार्थः किमपि स्थूलं वस्तु वा स्यात्। परन्तु तद्गर्भिणीजठरे कथं प्रविशेदित्येव प्रश्नः।—

परशुरामःस्ताद्वैष्णवं धनुर्गृहीत्वा रामेण तस्मिञ्शर आरोपितः मुक्तश्च। तेन च शरेण परशुरामस्य तपोबलार्जितस्वर्गादिलोकप्राप्तिशक्तिः स्वर्गपथश्चावारुध्यत। केनापि लोहादिनिर्मितेन अनुरूपधातुप्रणीतेन वास्त्रेण एवं स्वर्गपथविरोधो न सम्भवेत्। अतः एतादृशमस्त्रं

पराक्रमशालि, यशस्वि, महाधनुर्धारि च रघुनन्दनयुगं आश्रमवासिवचनं निशम्य सन्नद्धं जागरूकं च सत् धनुर्बाणहस्तं मुनिरक्षाप्रसितमजायत। क्रमेण षष्ठदिवसः समागतः रामलक्ष्मणौ युद्धसन्नद्धौ सन्तौ अस्थिरान्तरावपि सावधानौस्थितौ। ऋत्विग्गणैर्यज्ञीयोऽग्निः प्रज्वालितः। तदानीं दर्भचमसस्रुक्समित्कुशकुसुमसमूहैः परिव्याप्ता यज्ञवेदी उपाध्यायपुरोहितर्त्विजानां विश्वामित्रस्य च योगेन उज्ज्वला अजायत। यथाविधि वेदमन्त्रोच्चारणपूर्वकं यज्ञानुष्ठानं च

---

ध्रुवं कोऽपि सिद्धमन्त्रशक्तिविशेषः इति प्रतिभाति। मन्त्रशक्तिबलादेव स्वर्गादिप्राप्तिहेतुपुण्यक्षयो जातः।

देवराजस्य इन्द्रस्य वज्रमपि अनुरूपमन्त्रशक्तिस्वरूपमेवेति भाति। दधीचिमुनेरस्थिभिर्विनिर्मितमित्यादिवर्णनं रूपकमात्रम्। दधीचिस्तपस्याबलेन मन्त्रशक्त्या वा वज्रमेतादृश शक्तिशालि संवृत्तं—अत्र 'अस्थी'ति गौणावलम्बनमात्रम्। यथा इषीकावलम्बेन ब्रह्मास्त्रप्रयोगो विहितः। एतस्मादिदमेव बगम्यते यद्दिव्यास्त्रमात्रं देवतानां ऋषीणां वा शक्तिविशेषः। निर्दिष्टमन्त्राद्युच्चारणेनास्त्राणामाह्वानप्रयोगौ विख्यातव्यावास्ताम् एतादृशदैवशक्तिसम्पन्नास्त्रलाभार्थं कठोरतपोऽपेक्षितमासीत्। एतेषां दिव्यास्त्राणां शक्तिरमोघा विपुला अप्रतिहता च। दिव्यास्त्रमात्रं वा अवन्ध्यप्रयोगम्, एतत्सहायेन सहस्रशः शत्रूणां विनाशः शक्योऽभूत्।

समारब्धम् । मध्याह्नसमये सहसा नभोमण्डले भीषणशब्दः समजनि मारीचः सुबाहुश्च भयङ्करदेहानुचरैः सह रुधिरमेदोवर्षमारब्धवन्तौ । राजीवलोचनो रामः क्षिप्रगतिः सन् शरासनात् नैकविधदिव्यास्त्रप्रयोगेन द्विषतः प्रतिहतान्विधाय आकर्णाकृष्टप्रत्यञ्चात्यन्तदीप्तिशालिमानवास्त्रेण मारीचवक्षः स्थलं लक्ष्यमकल्पयत् । मारीचोऽपि विगतचेतनावस्थायामतिदूरं निक्षिप्तो निपीडितश्च सञ्जातः । अनन्तरं रामः विविधदिव्यास्त्रैः दुराचारिणः मखविध्वंसकारिणश्च अनेकराक्षसान्हत्वा शीघ्रगत्याऽऽग्नेयास्त्रद्वारा सुबाहोर्हृदयं विव्याध । लक्ष्मणोऽपि वायव्यास्त्रेणानेकसंख्याकान् राक्षसान्निपात्य विजयशालिं वीरसदृशं आस्फालनपूर्वकं धनुष्टङ्कारमकरोत् । तदवलोक्य मुनिगणाः सानन्द साधुवादानातुमारेभिरे ।

निर्विघ्नतया यज्ञकर्मणि समाप्तिं गते विश्वामित्रः रामलक्ष्मणावुत्तमाङ्गेऽवघ्रायोवाच—'वीरौ ! युवाभ्यां स्वगुरोरादेशपालनेन एतत्सिद्धाश्रमाभिधानं सार्थकीकृतम् । वयमपि कृतार्थाः स्मः ।

## मिथिलायात्रा

वीर्यशालिनौ रामलक्ष्मणौ कृतार्थीभूय हृष्टमानसौ अत्र तां रजनीमवाहयताम् । अपरेद्युः प्रभाते समाप्ताह्निकादि प्रातःकरणीयौ विश्वामित्रं अन्यमुनिगणं च नमस्कृत्य बद्धाञ्जलिपुटौ तौ उक्तवन्तौ—

'भवतां द्वौ सेवकावुपस्थितौ स्वः। उच्यतां किं शुभकार्यं विधेयम्?' रामस्य मधुरवचनं निशम्य प्रीतो मुनिगणोऽगादीत्—'हे राम! वयं विदेहराजनगरे महात्मनः जनकस्य भवने महायज्ञमेकमवलोकयितुं गच्छामः। तत्रैकं अद्भुतं विशालं च रुद्रधनुः सुरक्षितमास्ते। देव-गन्धर्वाः असुरगणाश्च तदधिज्यं विधातुमसमर्थाः। धनुरेतदगरुधूपैः विविधगन्धद्रव्यैश्च नित्यं पूजितं भवति; त्वयापि तन्महासत्वं प्रेक्षितु-मागन्तव्यम्। जनकनृपतिस्त्वां सम्मानयिष्यति।'

तदानीं ब्रह्मवादिनः अनेके महर्षयः अग्निहोत्रादि सम्भारान्गृहीत्वा शकटशतैर्यात्रार्थं प्रस्तुताः। वनदेवतादीनाभिवाद्य आश्रमं च प्रदक्षिणीकृत्य सकला एव ते रामलक्ष्मणाभ्यां साकं उत्तरदिग्यात्रार्थं प्रतस्थिरे। आश्रमपालिता मृगाः पक्षिगणाश्चताननुजग्मुः। किन्तु सन्ध्यासमये ते सर्वेऽपि मृगपक्षिणा विश्वामित्रेण प्रतिनिवर्तिताः आश्रमं प्रत्यागताः।

शोणनदीतीरे यात्राविरामं विधाय अवगाहनस्नानाग्निहो-त्रादिकं समाप्य सुखोपविष्टे मुनिगणे महातेजस्वी रामः विश्वामित्र-मनुयुयोज—'भगवन्! समृद्धवनश्रीभूषितस्यास्य देशस्येतिवृत्तं श्रोतुमहमभिलषामि।' रामजिज्ञासातृप्तः विश्वामित्रः एतद्देशेतिहासं वर्णयितुमारेभे। मुनिप्रवरविश्वामित्रमुखात् सविस्तरमितिवृत्तादि निशम्य परमानन्देन क्षणदा क्षयमुपगतवती। उषसि चोत्थाय

पूर्वाह्णिककृत्यसमाप्त्यनन्तरं पुनः सर्वेऽपि यात्रार्थं प्रस्थिताः। दीर्घमन्तरमतिक्रम्य मध्याह्ने हंससारससेवितां पुण्यसलिलां सरिद्वरां भागीरथीमवलोकयामासुः। शुद्धाचारा महर्षयः प्रमुदितान्तरा भागीरथ्यामवगाह्य यथाविधि अग्निहोत्रहवनं देवपितृतर्पणादिकं च समाप्य देवतादीनुद्दिश्योत्सर्गीकृतं हविर्युक्तममृततुल्यमन्नमुपभुक्तवन्तः। मुनिगणेषु सुखोपविष्टेषु रामः विश्वामित्रमवोचत्—'मुनिवर! त्रिपथगामिजाह्नवीजन्मविषये श्रोतुमभिलषामि।' अथ महामुनिः सर्वेषामपि मुदं वर्धयन् गंगोपाख्यानं सागरगमनं कार्तिकेयस्य जन्म च वक्तुमारेभे।

ज्वलन्ननलोपमविश्वामित्रतः प्रातिहेतु गङ्गोपाख्यानं श्रुत्वा रघुनन्दनः कुतूहलवशः हृष्टचित्तस्तमब्रवीत्—'ब्रह्मन्! स्वस्ति भवते। अस्मत्पूर्वपुरुषसगरनृपतेरितिहासं श्रावय। विश्वामित्रः सस्मितं प्रथमं सगरनृपतेरुपाख्यानं सविस्तरं यज्ञविवरणं च विधाय भगीरथकृत-गंगानयनं वर्णयामास।

निर्मलप्रभातसमये पूर्वाह्णिकक्रियासमाप्त्यनन्तरं समुपविष्टं तपोधन-विश्वामित्रं कमललोचनो रामः प्रोक्तवान्—'मया श्रोतव्यतमो विषयः कर्णगोचरीकृतः। सुखेनातिवाहिता च कल्याणप्रदा क्षणदा। इदानीं गंगापरतीरं गच्छेम। अस्मदागमनवृत्तान्तं निशम्य पुण्यकर्मा ऋषिगणः उत्तमास्तरणसंवृतां नौकां गृहीत्वा समुपस्थितः। विश्वामित्रः

समुनिगणं नौकया गंगोत्तरतीरमासादितवान् । तत्रत्यऋषिसमूहेनाभिनन्दिताः सर्वेऽपि तत्र सुखोपविष्टाः । अथानतिदूरं अमरलोकसदृशो काचित् 'विशाला' नगरी तैर्दृग्गोचरीकृता । मुनिवरो विश्वामित्रः रामलक्ष्मणादीन् गृहीत्वा तामेव नगरीमनुप्रचलितः । मार्गे रामेण जिज्ञासितम् । 'अस्यां विशालानगर्यामिदानीं कः खलु राजवंशोऽधिकारारूढ आस्ते ? इति श्रोतुं मम कौतूहलम् । प्रीतः सन् विश्वामित्रोऽब्रवीत् —' मया इन्द्रात् यद्विशालोपाख्यानं श्रुतं तदेव त्वां श्रावयामि ' इत्यभिधाय सोऽदितिपुत्रसुराणां दितिपुत्रासुराणां चोत्पत्तिं, क्षीरोदसमुद्रमथनं तत्फलस्वरूपविषोत्पत्तिः अग्रपूज्यदेवाधिदेवमहेश्वरद्वारा तद्विषप्राशनं, अमृतस्योत्पत्तिः अमृतस्य कृते देवासुरसंग्रामः मारुतगणोद्भववर्णनं च विधाय उक्तवान्— 'राम! अत्रैव इन्द्रः दितिपरिचर्याप्रसित आसीत् । अलम्बुषागर्भे इक्ष्वाकुनरपतेः विशालनामा एकः धार्मिकपुत्रोऽजनि । तेनैवेयं नगरी स्थापिता । तन्नामानुसारमेव एतन्नगर्या नामधेयमपि प्रतिष्ठितम् । तस्यैव (विशालस्य) नवमः वंशधरः महातेजस्वी सुमतिर्नाम एतत्स्थानीयो वर्तमानप्रशासकः । इक्ष्वाकुनरपतेः प्रसादतः विशालाप्रदेशस्थिताः सर्वेऽपि नृपतयः दीर्घायुषः, परमधार्मिकाः, वीर्यवन्तः पराक्रमिणः नरश्रेष्ठाश्च । वयमद्यात्र सुखेन रजनीमतिवाह्य श्वः प्रातः प्रस्थाय च जनकदर्शनसमर्था भवेम ।'

 


विश्वामित्रो मुनिवरः विशालामागच्छति इति ज्ञात्वा महायशाः नरश्रेष्ठः सुमतिः सोपाध्यायः सब्राह्मणवर्गः सबन्धुगणश्च प्राञ्जलिस्तं प्रत्युज्जगाम। तान्सम्पूज्य च कुशलप्रश्नानन्तरमवादीत्—'मुने! अहो भाग्यमस्माकम्! यतः यूयं मद्राज्यमुपस्थिताः, दर्शनपथातिथीभूय चास्माननुग्रहपात्रं कृतवन्तः। अतः अस्मदपेक्षया न कोऽप्यन्यो धन्यतरः। मुने! भद्रमस्तु ते। —गजाविव धीरमन्थरौ केसरिणाविवा-प्रतिहतगती, देवतुल्यपराक्रमौ, कमलपत्रायतलोचनौ, खड्गतूण-धनुर्धारिणौ नवयौवनान्वितौ, सौन्दर्येऽश्विनीकुमारसदृशौ, शौर्ये शार्दूलवृषसमौ कावेतौ राजकुमारौ? यथा चन्द्रसूर्यौ नभः सुषमां विवर्धयतः तथैवेतदागमनेनायं प्रदेशोऽतितरां शोभते। एताववलोक्य मन्येऽमरयुगलं स्वर्गलोकतः स्वेच्छायुवशान्मर्त्यलोकमुपस्थितमिति। एतदुत्तममायुधधारि कुमारद्वयं परस्परचेष्टा-इङ्गितप्रमाणेषु तुल्यकक्षम्। उभयोरेतयोः परिचयं ज्ञातुमभिलषामि।' श्रुत्वेदं विश्वामित्रः दशरथा-त्मजयोः परिचयदानेन सुमतिनृपतेः कौतूहलपरिहारमकरोत्। विश्वामित्र-वचनं निशम्य विस्मितचित्तः हतवाक् सुमतिः श्रेष्ठातिथिद्वयस्य समुचितसपर्यासत्कारमकार्षीत्।

### गङ्गासमीपवर्ति पुण्यतमगौतमाश्रमः

सुखेन रजनीमतिवाह्य सर्वेऽपि विश्वामित्रं पुरस्कृत्य मिथिला-भिमुखयात्रार्थमुद्यताः, [illegible] [illegible]तिक्रमानन्तरं राजर्षिजनकस्य मिथि-

लाभिधानां नगरीमाययुः । मिथिलोपवने कञ्चित्पुरातनं निर्जनं रमणीय चाश्रममवलोक्य रघुनन्दनः विश्वामित्रमन्वयुङ्क्त—'भगवन् ! दिव्यपत्र-पुष्पफलसम्पन्नः सर्वतो मनोहरविटपिपरिवृतः, जीवजन्तुवर्जितः, तापससुखहेतुः, अतिमनोहरः कस्यायमाश्रमो दृश्यते ? अत्रागम्य अस्मदान्तरमाह्लादितमजनि ।' कौशिकमहर्षिरुवाच—'वत्स राम ! श्रूयतां पुरावृत्तम् । धार्मिकाग्रणीः लोकविश्रुतः महर्षिगौतमः कठोरतपश्चरणेन विष्णोर्भगवतः आराधनापरो भूत्वा अस्मिन्नेवाश्रमे निवासं चकार । कमलयोनिर्ब्रह्मा तत्तपस्यया ब्रह्मचर्येण च प्रसन्नः सन् तस्मै शुश्रूषातत्परां लोकललामभूतामहल्यां समर्पयामास । तापसश्रेष्ठः गौतमः तया परमसुन्दरवनितया सह अस्मिन्नेवाश्रमे चिरसमयपर्यन्ततपो निरतो बभूव । अथ गौतम्या अलौकसामान्यसौंदर्येणाकृष्टः शचीपतिः सहस्राक्षो महेन्द्रस्तदुपभोगार्थमतीवोत्सुको जातः । कदाचित् महर्षिगौतमस्यानुपस्थितौ पाकशासनः छद्मवेशेनाश्रमं प्रविश्य गौतमीं प्रति स्वपरिचयदानपूर्वकं निजाभिलाषं प्रकटीचकार । अहल्यापि दुर्बलतावशतः मौनसम्मतिं ज्ञापयामास ।

अनन्तरमहल्या सुराधिपतिमुक्तवती—

'कृतार्थास्मि सुरश्रेष्ठ ! गच्छशीघ्रमितः प्रभो !
आत्मानं मां च देवेश ! सर्वथा रक्ष गौतमात् ॥

अस्मिन्नेव समये महातपोबलसमन्वितः अनलोपमदीप्तिमान् सदाचारी मुनिवरः कृततीर्थोदकस्नानः समित्कुशहस्तः, आश्रमं प्रविशन्नेव निजवेशधारिणं दुर्वृत्तमिन्द्रं त्रस्तं पलायमानं चावलोक्य क्रोधेन पर्यपृच्छत्—'रे दुरात्मन्! नीच! कस्त्वं मद्रूपधारी? सत्यं ब्रूहि, नो चेत् क्षणादेव त्वां भस्मसात् करिष्यामि।' बिडौजा भयलज्जितस्वरेणाब्रवीत्—'देवराजोऽहम्, मदनपरवशीभूय कुत्सितान्तरः भवदाश्रममागत्येदं गर्हितकृत्यमकार्षम्। क्षमस्व माम्।'

क्रोधरक्तनयनो गौतमोऽमरेन्द्रं शशाप—'रे कामलम्पट! दुरात्मन्! त्वं सहस्रभगयुक्तो भवेः।' अथ गौतमः निजाश्रमं प्रविश्य कृताञ्जलिपुटां कम्पमानशरीरामहल्यामपश्यत्। गौतमस्तामगादीत्—हे दुष्टे! दुर्वृत्ते! त्वमपि शिलामाश्रित्य अन्यैरनवलोक्यमाना आश्रमस्था* भव। निराहारा सोढशतवर्षातपा रात्रिं दिवं परमतपोऽवलम्बना

---

* वाल्मीकिरामायणप्रभृतिग्रन्थेषु अहल्यायाः शिलारूपप्राप्तेर्नास्ति स्पष्टतरोल्लेखः। अस्मन्मते अहल्या गौतमेन परित्यक्ता सती तस्मिन्नाश्रमेऽन्यैरलक्षिता कस्यामपि गुहायां (शिलागृहे) तपः परायणा बभूव। भाग्यवशतश्च परमपुरुषरामचन्द्रस्य दर्शनं तच्चरणस्पर्शं च विधाय शापपापमुक्ता जाता।

वेदव्यासप्रणीत-'पद्मपुराणे' गौतमी-उपाख्याने समुपलभ्यते यदा इन्द्रः धृतगौतमच्छद्मरूपः गौतमाश्रममागतः असमयेऽहल्यासङ्गन

हृदयस्थं परमात्मानं परमेश्वरं श्रीरामरूपं एकाग्रचित्तेन ध्यायस्व । अस्मिन्नाश्रमे केऽप्यन्ये जीवजन्तवः न स्थास्यन्ति । एवमनेकानुतापानलदग्धाराती तिष्ठ । यदा श्रीदशरथनन्दनः श्रीरामः स्वानुजेन लक्ष्मणेन सहेममाश्रममेष्यति यदा च निजचरणयुगलेन तवैतच्छिलामय देहस्पर्शं विधास्यति तदैव तस्यातिथ्यं चरणपूजां च विधाय त्वं शापमुक्ता लोभमोहविवर्जिता सती शुचिः निर्मलशरीरा च भूत्वा प्राप्तनिजपूर्वरूपा मया सार्धं सङ्गता भविष्यसि ।' इत्यभिधाय गौतमस्तमाश्रमं परित्यज्य तपस्यार्थं हिमालयं प्रति प्रस्थितः । ततः प्रभृति अहल्या प्राणिमात्रस्यादर्शनीया सती उत्कृटतपश्चरणतत्परा एतदाश्रमस्था त्वच्चरणरजः स्पर्शमपेक्षते । ब्रह्मणः कन्यां मुनिपत्नीमिमां देवीरूपिणीमहल्यां पवित्रीकुरु ।''

मुनिश्रेष्ठः विश्वामित्रः स्वकरधृतरामहस्तः आश्रमं प्रविष्टः तपः प्रभोद्भासितश्रियं महाभागामहल्यां दृष्टवान् । नूनं सा विधात्रा प्रयत्नातिशयैर्मायामयप्रतिमारूपैव निर्मिता तपः प्रभावेण सैवातिशोभनाङ्गिनी

---

आसीत् । तदाहल्या देवराजं इन्द्ररूपेण न ज्ञातवती ।........किन्तु गौतमर्षिः यदा अकस्मादेवाश्रममागत्योपस्थितः तदा इन्द्रः दूरतस्तमवलोक्य भयेन बिडालरूपं धृत्वा पलायितः । परंतु गौतमस्तं पाकशासनं निगृह्य एतदन्यायकार्यार्थं शप्तवान् । आश्रमं प्रविश्य भयकम्पमानामहल्यां धिक्कृत्याब्रवीत—'' त्वं परपुरुषसम्बन्धात् पापचारिणी

 


अहल्या तदा धूमावृतप्रदीप्तानलशिखेव, मेघतुषारावृता पूर्णचन्द्रकान्तिरिव प्रकाशमाना मध्येजलं प्रतिबिम्बितदुर्दर्शनीयसूर्यप्रभेव दीप्तिशीला प्रतीयमाना आसीत्। श्रीरामचन्द्रोऽपि देवीमूर्तेरस्या दर्शनं विधाय सानन्दं पादवन्दनं च कृत्वोक्तवान्—'रामोऽस्म्यहम्'। पीतकौशेयवाससं धनुर्बाणधरं स्मितानन्नं कमललोचनं रघुश्रेष्ठं रमानाथं रामचन्द्रं सलक्ष्मणं द्युत्या दशदिशोऽपि आलोकिताः कुर्वाणं नीलकान्तमणिमिवालोक्य अहल्याऽऽनन्दाश्रुपरिप्लुतनयना सती श्रीरामं नारायणं परमात्मनमवगत्य अर्घ्यादिभिर्विधिवत्सम्पूज्य साष्टाङ्गपातं प्राणंसीत्। राजीवलोचनरामचन्द्रस्य स्पर्शनदर्शनपूर्वकं पुलकितगात्राऽऽनन्दगद्गदकण्ठेन तमस्तौत्—

---

अमेध्या च संवृत्तासि। अतएव आस्थे चर्ममात्रावशेषा मांसनखवर्जिता दीर्घकालपर्यन्तं अत्रैव वासं विधेहि। .... वसिष्ठेन सार्धमागत्य दाशरथिरामः यदा "अहल्याया नास्ति कोऽपि दोषः यः कश्चिदपराधः स इन्द्रस्यैव" इति व्याहरिष्यति तदैव त्वं पापमुक्ता सती मत्सङ्गता भवेः।" घटितमपि तदेव वसिष्ठेन सह गौतमाश्रमं प्रविश्य "अस्थिचर्मसारां नारीं कङ्कालरूपिणी" गौतमीमवलोक्य श्रीरामचन्द्रः वसिष्ठमपृच्छत्। वसिष्ठमुखाच्च श्रुतसकलवृत्तान्तो रामः 'अहल्या निर्दोषा इन्द्रस्यैवायमपराधः' इत्युक्तवान्। ...अनन्तरमेव गौतमेन सह अहल्यायाः पुनर्मिलनमभवत्।

अहो कृतार्थोऽस्मि जगन्निवास ते पादाब्जसंलग्नरजःकणानहम् ।
स्पृशामि यत्पद्मजशंकरादिभिः विमृग्यतेरान्धितमानसैः सदा ॥ १ ॥
अहो विचित्रं तव राम ! चेष्टितं मनुष्यभावेन विमोहयन् जगत् ।
चलस्यजस्रं चरणादिवर्जितः सम्पूर्ण आनन्दमयोऽति मायिकः ॥ २ ॥
यत्पादपङ्कजपरागपवित्रगात्रा भागीरथी भवविरिञ्चिमुखान् पुनाति ।
साक्षात्स एव मम दृग्विषयो यदास्ते किं वर्ण्यते मम पुराकृत भागधेयम् ॥
मर्त्यावतारे मनुजाकृतिं हरिं रामाभिधेयं रमणीयदेहिनम् ।
धनुर्धरं पद्मविशाललोचनं भजामि नित्यं न परान्भजिष्ये ॥ ४ ॥
यत्पादपंकजरजः श्रुतिभिर्विमृग्यं यन्नाभिपङ्कजभवः कमलासनश्च ।
यन्नामसाररसिको भगवान्पुरारिस्तं रामचन्द्रमनिशं हृदि भावयामि ॥ ५ ॥
यस्यावतारचरितानि विरिञ्चिलोके गायन्ति नारदमुखा भवपद्मजाद्याः ।
आनन्दजाश्रु परिषिक्त कुचाग्रसीमा वागीश्वरी च तमहं शरणं प्रपद्ये ॥६॥
सोऽयं परात्मा पुरुषः पुराण एष स्वयंज्योतिरनन्त आद्यः ।
मायातनुं लोकविमोहिनीं यो धत्ते परानुग्रह एष रामः ॥ ७ ॥

---

पद्मपुराणगतवृत्तान्ते अहल्यायाः शिलारूपप्राप्तेर्नास्ति कोऽप्युल्लेखः । .... रामचन्द्रेण च सह वसिष्ठ आसीत् न तु विश्वामित्रः । रघुवंशकुलगुरुणा वसिष्ठेन सार्धं रामः मिथिलानगरीं पाणिग्रहणार्थं गत आसीत् । एतद्विवाहनिश्चयार्थं वसिष्ठ एव गतोऽभूदिति अन्यपुराणेष्वपि दृश्यते ।

अयं हि विश्वोद्भव संयमानामेकः स मायागुणबिम्बितो यः ।
विरिञ्चिविष्ण्वीश्वरनामभेदान्धत्ते स्वतन्त्रः परिपूर्ण आत्मा ॥ ८ ॥

नमोऽस्तु ते राम तवाङ्घ्रिपङ्कज श्रिया धृतं वक्षसि लालितं प्रियात् ।
आक्रान्तमेकेन जगत्त्रयं पुरा ध्येयं मुनीन्द्रैरभिमानवर्जितैः ॥ ९ ॥

जगतामादिभूतस्त्वं जगत्त्वं जगदाश्रयः ।
सर्वभूतेष्वसंयुक्त एको भाति भवान्परः ॥ १० ॥

ॐकारवाच्यस्त्वं राम ! वाचामविषयः पुमान् ।
वाच्यवाचकभेदेन भवानेव जगन्मयः ॥ ११ ॥

कार्यकारणकर्तृत्वफलसाधनभेदतः ।
एको विभासि राम! त्वं मायया बहुरूपया ॥ १२ ॥

तन्मायामोहितधियस्त्वां न जानन्ति तत्त्वतः ।
मानुषं त्वभिमन्यन्ते मायिनं परमेश्वरम् ॥ १३ ॥

आकाशवत्त्वं सर्वत्र बहिरन्तर्गतोऽमलः ।
असङ्गो ह्यचलो नित्यं शुद्धो बुद्धः सदव्ययः ॥ १४ ॥

योषिन्मूढाहमज्ञाते तत्त्वजाने कथं विभो ।
तस्मात्ते शतशो राम ! नमस्कुर्यामनन्यधीः ॥ १५ ॥

देव ! मे यत्र कुत्रापि स्थितायाा अपि सर्वदा ।
त्वत्पादकमले सक्ता भक्तिरेव सदास्तु मे ॥ १६ ॥

नमस्ते पुरुषाध्यक्ष! नमस्ते भक्तवत्सल!।
नमस्तेऽस्तु हृषीकेश! नारायण! नमोऽस्तु ते ॥ १७ ॥

भवभयहरमेकं भानुकोटिप्रकाशं करधृतशरचापं कालमेघावभासम्।
कनकरुचिरवस्त्रं रत्नवत्कुण्डलाढ्यं कमलविशदनेत्रं सानुजं राममीडे ॥

(ब्रह्माण्डपुराणान्तर्गतश्रीमन्महर्षिकृष्णद्वैपायनप्रणीताध्यात्मरामायणानुसारमहल्याकृतरामस्तोत्रम्।)

एवमहल्या संमुखस्थस्य साक्षात्परमपुरुषराघवस्य स्तुतिं प्रदक्षिणं प्रणामं च कृतवती। विश्वामित्रप्रभृतिऋषिगणः साधुवादपूर्वकं तपःशुद्धामहल्यां सम्मनितामकार्षीत्। ऋषिवरः गौतमोऽपि ध्यानयोगेन विदिताखिलवृत्तान्तः श्रीरामचन्द्रदर्शनार्थं योगबलेन तत्रोपास्थितःरामचन्द्रचरणावभिनन्द्य अहल्यां सङ्गतः। गौतमाहल्याभ्यां नानाभावैर्वन्दितः पूजितः सत्कृतश्च श्रीरामः हृष्टान्तरः जनकपुरीयात्रार्थं प्रस्थितः।

## मिथिलायात्रा गङ्गोत्तरणं च।

अपरेद्युः प्रातः गाधिसुतं विश्वामित्रं पुरस्कृत्य विविधवार्तालापपूर्वकं सर्वेऽप्येते क्रमेण गङ्गातीरं समुपास्थिताः। नाविकः तानपरतीरं नेतुं नौकामनयामास। अत्रान्तरे श्रीरामचन्द्रद्वारा अद्भुता अहल्याशापमोचनप्रवृत्तिः चतुर्दिक्षु प्रचारिता अभूत्। पतितपावनस्य

राजीवलोचनस्य सानुजरामचन्द्रस्य दर्शनेन नाविकः आत्मानं कृतार्थं मन्यमानः गंगासलिलेन परिक्षालितरामचन्द्रचरणयुगलः पादोदकग्रहण-पूर्वकं तच्चरणपूजां विदधौ । अनन्तरं सश्रद्धं मुनिवरविश्वामित्रः रामलक्ष्मणौ नौकामारोप्य सावधानं परतीरं नीतवान् । 'इदं पुण्य-कार्यमेव मम भवसागरपारगमन पाथेयम्' इति चिन्तयन् नाविकः आत्मानं महाभाग्यवन्तममन्यत । पारतरणस्यकपर्दिका परिमितमपि मूल्यं नागृह्णात् *

## जनककृतं तेषां संवर्धनम्

क्रमशः सर्वेऽपि ते जनकपुरीं प्रविष्टाः । 'विश्वामित्रः समुपस्थितः' इति निशम्य महातेजा जनकनृपतिः आनन्दपुरितहृदयः कृतपूजोपचारः पुरोहितशतानन्देन उपाध्यायेन च सह प्रत्युद्गमनपूर्वकं

---

* कृत्तिवासरामायणे उपलभ्यते यद्रामचन्द्रस्य चरणस्पर्शेन पाषाण-मयी अहल्या मुक्तिं लेभे । एतादृशवृत्तान्त प्रचारानन्तरं 'मम जीर्ण-नौका रामचन्द्रपादस्पर्शेन कदाचिन्मुक्तिं लभेत इति भयात् नाविकः प्रथमं रामं नदीपारं नेतुं समुद्यतो नाभूत् । अथ रामचन्द्रपदधूलि-सम्बन्धं परिहर्तुं नाविकः गंगासलिलेन तस्य (रामस्य) चरणौ प्रक्षाल्य तं नौकया परतीरं नीतवान् । किन्तु रामः नाविकभक्त्या सन्तुष्टः सन् प्रसन्नदृशा तमाशीर्वचसा संयुयोज । तत्फलस्वरूपं नौका सुवर्ण-मयतरण्यां परिणता बभूव ।

पाद्यार्घ्यादिभिः सम्पूज्य अभिवाद्य चासनपरिग्रहार्थमभ्यर्थयामास । तेन सार्धं सर्वलक्षणयुक्तौ सूर्यचन्द्रमसाविव दशोऽपि दिशः सालोका विदधतौ रामलक्ष्मणाववलोक्य जनकः सकौतूहलं विश्वामित्रं पप्रच्छ—'मुनिवर ! कावेतौ देवकुमारतुल्यौ नरशार्दूलौ बालकौ ? कस्यात्मजावेतौ किमर्थं चागतौ ? नरनागयणसदृशयोरेतयोः कुमारयोर्दर्शनेन अस्मदान्तरमवर्णनीयानन्दपरिपूरितमजायत यथा चन्द्रसूर्यौ गगनसुषमावर्धनपरौ तथैवास्मद्राज्यशोभावेतौ संवर्धयतः ।

विश्वामित्रः सर्वेषामानन्दं वर्धयन् जनकनृपतिमुवाच—'एतौ दशरथात्मजौ रामलक्ष्मणौ । मया स्वकीययज्ञरक्षार्थं सम्प्रार्थ्य दशरथनृपतिसकाशात् आनीतौ । अतिपराक्रमशालिना ज्येष्ठरामेण मार्गे आगच्छता अस्मत्प्रेरणया विश्वसन्त्रासरूपिणी ताडका नाम यक्षिणी एकेनैव शरेण निपातिता । अनन्तरं सिद्धाश्रममागत्य यज्ञविध्वंसकसुबाहुप्रभृतीन् राक्षसानभिहत्य शराघातेन मारीचमपि सुदूरं निक्षिप्तवान् । अथ विशालानगरीमागतः गंगातीरे मङ्गलमयपुण्यगौतमाश्रमे श्रीरामः स्वचरणकमलस्पर्शेन गौतमपत्नीमहल्यां पापशापमुक्तां विधाय गौतमाहल्याभ्यां परिपूजितः सन्निदानीं भवत्सकाशं श्रेष्ठधनुर्विषयकजिज्ञासयेहोपस्थितः ।

## विश्वामित्रस्य जन्मकथा

धीमतः विश्वामित्रस्य वचनं निशम्य महातेजस्वी तपःप्रदीप्तः

कान्तिमयशरीरश्च जनकपुरोहितः गौतमस्य ज्येष्ठपुत्रः शतानन्दः, स्वजनन्यास्तपस्विन्या अहल्यायाः शापमुक्तिविवरणेन परमविस्मितः रोमाञ्चितकलेवरश्च रामचन्द्रमब्रवीत्—'हे रघुनन्दन! नरवर! भवानस्मद्भाग्यक्रमादेव अपराजितं विश्वामित्रमुनिं पुरस्कृत्यात्र समुपस्थितोऽस्ति। हे राम! जगति भवदपेक्षया न कोऽप्यन्यो धन्यतरः अत एव महातपस्वी गाधिनन्दनः भवद्रक्षकः संवृत्तः। महात्मनः विश्वामित्रस्य यत्सामर्थ्यं तदहं यथाशक्ति वर्णयेयम्, श्रूयताम्', एतदुक्त्वा शतानन्दः गाधिनन्दनपूर्वपुरुषेतिहासं अवर्णयत् राज्यसञ्चालनसमये चतुरङ्गसेनया सह वसिष्ठाश्रमे आगमनम् वसिष्ठकृतसत्कारेण सन्तुष्टस्य विश्वामित्रस्य वसिष्ठकामधेनुलाभार्थमभिलाषप्रकाशनम्, वसिष्ठस्य कामधेनुप्रदानेऽसम्मतिः, तेन च विश्वामित्रवसिष्ठयोर्युद्धम्, वसिष्ठस्य एकहुंकारपातेनैव विश्वामित्रपुत्रशतनिधनम्, ससैन्यपुत्रशतविनाशेन भग्नमनोरथस्य विश्वामित्रस्य दीर्घनिश्वासपूर्वकं—

'धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम्।
एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे॥
तदेतत्प्रसमीक्ष्याहं प्रसन्नेन्द्रियमानसः।
तपो महत्समास्थास्ये यद्वै ब्रह्मत्वकारणम्॥' (५६-२३ २४

वा.रा.) इत्युक्तिः; अनन्तरं पुत्रोपरि राज्यभारमारोप्य महेश्वराराधनार्थं हिमालये गमनम्, तपस्यासन्तुष्टाच्छूलिनः सकाशात्

विविधदिव्यास्त्रलाभः, पुनरपि वसिष्ठेन सह युद्धम्, वसिष्ठद्वारा एकमात्रब्रह्मदण्डसहायेन विश्वामित्रस्य समस्तदिव्यास्त्रविनाशनम्, पराभूतस्य विश्वामित्रस्य ब्रह्मत्वलाभार्थं पुनरपि तपस्यार्थं प्रयाणं, इत्यादिघटनाः सविस्तरमुपवर्ण्य शतानन्दः त्रिशङ्कोः शुनःशेपस्य चोपाख्यानं श्रावयामास।

अनन्तरं विश्वामित्रस्य ब्राह्मणत्वलाभार्थं सुदीर्घकालपर्यन्तमुग्रतपः, ब्रह्मणः आगमनम्, विश्वामित्राय 'ऋषिः' इत्याख्याप्रदानं, तेनाप्यसंतुष्टस्य विश्वामित्रस्य पुनरपि तपश्चरणम्, तस्य तपसा देवतादीनामुत्कण्ठा, तत्तपोभङ्गार्थं अप्सरोमेनकायाः प्रेषणम्, मेनकासंसर्गेण विश्वामित्रस्य तपोहानिः, दृढव्रतविश्वामित्रतपस्यया सन्तुष्टेन ब्रह्मणा तस्मै 'मुख्यऋषि' पदप्रदानम्, तेनाप्यसन्तुष्टस्य विश्वामित्रस्य घोरतपः साधनम्, इन्द्रस्य भीतिः, विश्वामित्रतपोन्तरायोत्पादनार्थं इन्द्रेण अप्सरसो रम्भायाः प्रेषणम्, विश्वामित्रस्य तपोहानिकरक्रोधवशवर्तिनः रम्भायै शापप्रदानम्, अनन्तरं च अनुतप्तस्यास्य कामक्रोधोपरि विजयप्राप्त्यर्थं पुनः दीर्घकालं तपश्चरणम्, एतदप्यखिलं वर्णयामास। अथ ब्रह्मा सन्तुष्टः सन् विश्वामित्रस्य पुरतः प्रकटीभूयोक्तवान्—'ब्रह्मर्षे! त्वत्तपः सफलीभूतं, त्वया ब्राह्मणत्वमधिगतम्, सुदीर्घमायुश्च तुभ्यं प्रतिपादयामि।'

आत्मभूवचसा कौशिकः आनन्दितः सन्नब्रवीत्- 'यतः मह्यं

ब्राह्मणत्वं प्रदत्तम् ततः चतुर्वेदेषु ॐकारे वषट्कारे चाधिकारप्रदानमपि करोतु भवान् । त्वदात्मजं वसिष्ठं मां च 'ब्रह्मर्षिपदेन सम्बोधितुमङ्गीकुरु ।'

लोकपितामहो ब्रह्मा विश्वामित्राय सर्वानपि ब्राह्मणाधिकारान् समर्पितवान् । देवगणानुरोधेन वसिष्ठोऽपि विश्वामित्रं 'ब्राह्मण' इत्याख्ययाऽऽह्वयितुमुररीकृतवान् । ब्राह्मणत्वलाभान्वितेन च विश्वामित्रेण यथाविधि सम्पूजितो वसिष्ठोऽपि प्रीतोऽभूत् ।

विश्वामित्रवंशपरिचयं तद्ब्राह्मणत्वप्राप्तीतिहासं च वर्णयित्वा शतानन्द उवाच - हे वीर्यवन् ! राम ! विश्वामित्रः मुनिगणाग्रणीः, तपोमूर्तिः नित्यं धर्मरतः वीर्यशालिनां सर्वश्रेष्ठः ।'

शतानन्दमुखात् इमं दिव्येतिहासं निशम्य सर्वेऽपि स्तंभिता आनन्दिताश्च संवृत्ताः । जनकः कृताञ्जलिः विश्वामित्रमगादीत्—'भवदागमनेन धन्योऽहम् । दिवाकरोऽस्ताचलगमनोन्मुखः । अस्मद्यज्ञानुष्ठानसमयोऽतिवाहितप्रायः; यज्ञसमापनानुज्ञा प्रदीयताम् । महातेजस्विन् ! भवता अत्र रात्रिमतिवाह्य प्रातः पुनरपि दर्शनं दातव्यम् । शुभं भवतु तवागमनम् ।' हृष्टमानसः विश्वामित्रः पुरुषप्रवरं जनकं बहुविधं प्रशस्य तं गन्तुमनुजज्ञे सकलजनपूजितश्च सन् रामलक्ष्मणाभ्यां सार्धं निर्दिष्टं [illegible]मयासीत् ।

## श्रीरामलक्ष्मणयोर्नगरभ्रमणं पुष्पवाटिकागमनं सीतासन्दर्शनं च

परेद्युः प्रभाते माङ्गलिकवाद्यनिनादः समुत्थितः सूतमागध-बन्दिगणः समस्वरैः वन्दनागीतं गातुमारेभे। मिथिलानगर्यां स्थाने स्थाने ब्राह्मणगणो वेदपाठं कर्तुमारभत। प्रतिमन्दिरं माङ्गलिकध्वनिरश्रूयत। मिथिलानगरी नवप्रभाते आनन्दपरिपूर्णाऽजनि। रामलक्ष्मणौ प्रातः करणीयं पूर्वाह्णिकं च समाप्य महर्षिविश्वामित्रं प्रणम्योपविष्टौ सन्तौ परस्परकुशलप्रश्नानन्तरं राघवः रामानुजश्च द्वावपि विश्वविश्रुतां समृद्धिमतीं रमणीयां च जनकपुरीमवलोकयितुं निजाभिलाषं प्रकटीचक्रतुः। विश्वामित्रादेशानुसारं तदानीमश्वचतुष्टयसंयोजितः मनोहररथः समानीयत। राजपुरुषपरिवृतं च कुमारद्वयं धृतदिव्यशरतूणीरं मिथिलानगरीं परिदर्शनार्थं विनिर्गतम्। द्वावपि कुमारौ कोमलकुञ्चितकेशौ, कनककुण्डलालङ्कृतकर्णौ, सुविशालबाहुयुगलौ, कटिबद्धतूणीरौ, केसरि-केशशिखण्डकौ पीताम्बरधारिणौ, रुचिरदशौ, चारुवक्रिमभ्रूभङ्गौ-सर्वाङ्गमनोहरौ दशरथकुमारौ नगरभ्रमणार्थं निरगाताम्—इति प्रवृत्तौ तडिद्वेगेन अधिनगरं प्रसृतायां पुरवासिवृन्दाति समवेतानि, पुरनारी-गणश्च लुब्धनयनः गवाक्षपथैः नवदूर्वादलश्यामौ, नयनमनोहरौ, देव-प्रतिमासमौ, नवयौवनसम्पन्नौ राजकुमारौ अवलोकयितुं प्रवृत्तः। पुष्पफलयुक्तवृक्षशोभितं सुप्रशस्तराजपथं त्रिविधवर्णप्रासादान् मन्दिराणि चावलोकयतोस्तयोः सुसज्जितो रथः क्रमशः राजपुष्पवाटिकाद्वारमु-

पस्थितः। राजसेवकपरिवृतौ रामलक्ष्मणौ सानन्दं निरुपममनोहरवृक्षैः पुष्पवितानैः विविधफलकुसुमैश्च शोभितं वसन्तलीलायितमुद्यानमवलोकयामासतुः।

अस्यां पुष्पवाटिकायां विचित्रसोपानावलिमण्डितं, विविधकमलजलपक्षिशोभितं भ्रमरकदम्बगुञ्जितं, निर्मलजलपूरितं शोभायमानमेकं रमणीयं सरोवरमवलोक्य रघुकुलमणिः स्वानुजलक्ष्मणेन सह तस्यैव सरोवरस्य पुष्पविताने उपाविशत्। मालाकारगणः विविधसुगन्धितपुष्पैः कुसुमस्रग्भिश्च तावुभौ सुसज्जितावकुरुताम्। एतत्सरोवरतीरे राजपरिवारपरिपूजितं श्रीगिरिजादेव्याः मन्दिरमेकमासीत्। इदानीं सुन्दरी जनकदुहिता सीता नृत्यगीतरता, सखीवृन्दपरिवृता, करकलितपूजोपकरणा गिरिजा-(मतान्तरे कात्यायनी) देवीमन्दिरं समागता; सरोवरतीरगतपुष्पविताने च शारदचन्द्रप्रतिमं नयनाभिरामं रामचन्द्रं विलोक्य केनाप्यनिर्वचनीयामोदेन तस्या मानसं नर्तितुमारब्धम्। सा परवशदेहा पुत्तलिकेव अनिमिषनेत्रेणालोकयन्ती तत्रैवावस्थिता।

## भवानीवरप्राप्तिः

सीतासखीगणस्य कलगानस्वरेण कनककिङ्किणीनां नूपुराणां च मधुरध्वनिना समाकृष्टो रघुकुलरत्नं रामचन्द्रः तस्यामेव दिशि दृष्टिपातं विधाय सखीपरिवृतां जनकनन्दिनीमवालोकयत्।

जानकी राममयमानसा सती भक्तिभरेण पूजार्थं भवानीमन्दिरमायाता श्रीरामचन्द्रं च पतिरूपेणाधिगन्तुं शुभवरप्रसादयिन्याः त्रिपुरारिप्रियतमायाश्चरणयोः सकरुणं प्रार्थनां कृतवती। देवी भवानी जनकनन्दिन्याः सोत्कण्ठं प्रार्थनया प्रसन्नासती प्रत्यक्षदर्शनं दत्वा स्वकीयं कण्ठमाल्यं तत्कण्ठे परिधापितवती, सस्नेहचुम्बनपूर्वकं सस्मितमवोचत्-'तव मनोऽभिलाषः पूर्णतां यातु। यस्त्वया मनसा वृतः तमेवश्यामलसुन्दरं पतिरूपेण प्राप्नुयाः।' गौरीशुभाशीर्वचसा जनकसुतायाः वाममङ्गं आनन्देन स्फुरितुमारेभे।

वैदेहीमुखचन्द्रचिन्तापरः स रामोऽपि लक्ष्मणेन सह विश्वामित्रसमीपं प्रत्यावर्तत। तस्मिन्नेव क्षणे जनकनृपतिः पूर्वाह्णकरणीयमग्निहोत्रादिकं च समाप्य यज्ञमण्डपमागत्य पुरोहितं गौतमपुत्रं शतानन्दं, महात्मानं विश्वामित्रं, रामलक्ष्मणौ च समानेतुं प्रेषयामास। विश्वामित्रागमेन जनकः समुत्थाय पाद्यार्घ्यादिभिः सकलान् यथाविधि पूजयित्वा कृताञ्जलिपुटः महर्षिमुवाच—'भगवन्! स्वागतं भवते! किङ्करोऽहं तव; किं मया कर्तव्यमित्यादिश्यताम्।'

वाक्यविशारदो धर्मात्मा महर्षिर्विश्वामित्रः महात्मनः जनकस्य वचनेन प्रसन्नः सन्नवादीत्— 'एतौ लोकप्रसिद्धक्षत्रियभूपतेर्दशरथस्य पुत्रौ। तव प्रासादे यत्पूजितं श्रेष्ठं शिवधनुरास्ते यच्चानेकराजन्यैरवलोकितपूर्वं तदवलोकनार्थमेतावुपास्थितौ। शिवमस्तु ते! एतयोरपि

तन्महांधनुर्दशय। धनुर्दर्शनानन्तरं य एवैतयोरभिलाषो भवेत् तत् क्रियताम्।'

श्रुतकौशिकवचनः जनकः मधुरवाक्यं व्याजहार। 'महर्षे! इदं महच्छैवचापमस्मद्गृहे कथमागतं तच्छ्रूयताम्। दक्षयज्ञध्वंससमये वीर्यवान् महादेवः यज्ञं विनाशयेदमेव शैवं धनुः आकर्णाकृष्टं विधाय च क्रोधेन देवतादीनब्रवीत्—'हविर्भागमर्हतेऽपि मह्यं स (हविर्भागः) न प्रदत्तः तेनाहं युष्मन्मस्तकच्छेदं करिष्यामि।' भीता देवगणा महेश्वरस्तुतिपरा बभूवुः। आशुतोषो हरोऽपि तेषां स्तवेन सन्तुष्टः सन् प्रसन्नमनसा तदेव धनुः देवताभ्यो दत्तवान्। अनन्तरं देवगणैरेतत् अस्मत्पूर्वपुरुषदेवरातताय न्यासरूपेण प्रदत्तम्। ततः प्रभृति धनुरिदमस्मद्गृहे पूजितमास्ते।'

## *सीतायाः जन्म

ततः जनकः अयोनिजायाः सीतायाः उत्पत्तिविषयं विशदीकृतवान्— 'हे मुनिपुङ्गव! कदाचिन्मया क्षेत्रकर्षणसमये लाङ्गलमद्धति (सीता) सकाशात् एकाकन्याऽऽसादिता। हलरेखातश्चोद्भवाद्धेतो-

*कृत्तिवासरचितरामायणे लभ्यते — रामे सप्तदशवर्षदेशीये सति जनकगृहे सीताजन्माभूत्। सीताजन्म अज्ञानतमसावृतं दिव्य रहस्यमयं च। तेन सा जनकस्यौरसकन्या नासीदिति सर्ववादिसम्मतम्। सा परन्तु तस्य पालिता दुहिताऽऽसीत्।

रस्माभिस्तस्या नाम 'सीता' इति कृतम्। आत्मजारूपेण च सास्मद्गृहे लालिता पालिता संवर्धिता च। मया च सा कन्या वीर्यशुल्का (अर्थात्) यः कोऽपि वीर्यबलेन अस्मिन्नेवशिवधनुषि ज्यारोपणादि कर्तुमलंभवेत् तस्मै एव सीता वरमालार्पणं कुर्यादिति (वीर्यशुल्का) कृता। एमेतं पणं निशम्य अनेके राजानः सीतापाणिग्रहणार्थिनः सन्तः अत्र समायाताः। किन्तु एतावत्काल-पर्यन्तं कोऽपि नृपतिः इदं शिवधनुरुत्थाप्य तस्मिञ्छरारोपणे नालमासीत्। अतः सर्वेऽपि ते मया प्रत्याख्याताः। त एव भग्नमनो-रथा नृपतयः समवेता बलात्सीता मपहर्तुमुद्यता मिथिलोपरि आक्रमणं चक्रुः। देवगणाशीर्वादेन मया चतुरङ्गिणी सेनासहायतः सर्वेऽपि पराभूता बहिष्कृताश्च। मुनिशार्दूल! तदेव परमधनूरघुनन्दनं दर्श-यिष्यामि। चेद्दशरथी रामः धनुषि प्रत्यञ्चारोपणं विधाय तदाकर्षण-समर्थो भवेत् तर्हि सीता ते वृणुयात्।'

---

महर्षिवाल्मीकि विरचितेऽद्भुतरामायणे सीताजन्मविषये उपल-भ्यते - वैकुण्ठे लक्ष्मीसेविकागणेन देवर्षिर्नारदः वेत्राघातेन ताडितः; तेन क्रुद्धः नारदः लक्ष्मीं शप्तवान् - 'पृथिव्यां राक्षसीगर्भे तव जन्म भवेदिति। ........ इत्थं लक्ष्मीः राक्षसीगर्भे जन्म गृहीतवती।

दण्डकारण्यस्थं अग्निकल्पं ऋषिगणं हतवीर्यं विधाय त्रिलोक-विजयीबुभूषुणा रावणेन शरसहायतः तेषां शरीरेभ्यः स्रावितशोणि-

जनकवचने निशम्य विश्वामित्रोऽब्रवीत्—'भवान् रामाय तच्छरासनं दर्शयतु।

ततः जनकनृपतिः सर्वान्यज्ञभूमिं नीमवान्। अति विस्तृता चासीद्यज्ञशाला शतशः पुरवासिनः अनेकेनृपतयः वीर्यशुल्कायाः सीतायाः पाणिग्रहणार्थं तत्रोपस्थिताः। बन्दिनः भाटगणाश्च ऊर्ध्वहस्ताः पुनः पुनः विदेहराजपणघोषणां चक्रुः। राजगणाः विफलमनोरथाः सन्तः नतशिरस यज्ञभूमित्यागपूर्वकं प्रतिनिववृतिरे। यज्ञभूमेर्निवृत्तो-जनकः विश्वामित्रमगादीत्—'अस्यो लौहमञ्जूषायां हरधनु रक्षिते विद्यते। अद्ययावत्कोऽपि नृपतिः एतद्धनुरुत्तोलनं, तस्मिन्पत्यञ्चारो-

---

तेन एकः कलशः पूरितः आसीत्। अनन्तरं स तं कलशं रक्षार्थं मन्दोदरी हस्ते समर्प्य त्रैलोक्यविजयाय निर्गतः। एतद्विजययात्रा-समये रावणः देवदानवगन्धर्वयक्षसुन्दरीभिः बलात् सम्भोगं कृतवान्। तन्निशम्य मन्दोदरीमानसमतिक्षुब्धमभूत्। मृत्युं कामयमाना सा तदृषिशोणितं पीतवती परं तत्फलं विपरीतमेव संवृत्तम्। तेन तस्यां गर्भसञ्चारोऽभूत्। रावणः दिग्विजयार्थं संवत्सरपर्यन्तं बहिरेवासीत्। तस्यानुपस्थितौ एतादृशगर्भसञ्चरतो मन्दोदरी विशेषतो भीता विषमा च बभूव। तद्गोपनार्थं सा गर्भपातसङ्कल्पं विधाय तीर्थभ्रमणच्छलेन कुरुक्षेत्रमागता गुप्तरूपेण निपातितं गर्भं च भूमौ पूरितवती। परतः सरस्वत्याः पुण्यतीर्थे [illegible] रावणेन अज्ञातैव निजगृहं न्यवर्तत।

पणं शरायोजनं च विधातुं नालमासीत्। भवान्रघुकुलतिलकं रामचन्द्रं तद्धनुर्दर्शयतु।' विश्वामित्रादेशेन रामचन्द्रः गुरुचरणमभिवन्द्य गजश्रेष्ठ इव सवीरदर्पः अभिमञ्चं चलितुमुपचक्रमे।

बालसूर्यमिव वीर्यवन्तं रामचन्द्रमवलोक्य यज्ञमण्डपे गुञ्जनध्वनिरिवोत्थितः। राजानं परस्परं दर्पोक्तिं कर्तुमारेभिरे। रामः मञ्जूषापिधानमुद्घाट्य धनुरवलोक्य च जलदगम्भीरस्वरेण सर्वानपि श्रावयन्नुक्तवान्—'अहमेतद्दिव्यं श्रेष्ठं च धनुः एकेनैव करेणोत्थाप्य तस्योपरि प्रत्यञ्चारोपणं टंकारं च कर्तुं प्रयतिष्ये। चतुर्भ्योऽपि दिग्भ्यः

---

(जैनरामायणानुसारं रावणस्य निवासस्थानं वर्तमानमहाराष्ट्रस्यैकांशे नागपुरसमीपे आसीत्। तत्पितामहः सहस्रग्रीवाख्यः पिता च शतग्रीवाभिधः स्वयं च नाम्ना दशग्रीवो रावणः। 'ग्रीव' इति कश्चिदुपाधिविशेषः। रावणः दिग्विजयानन्तरं प्रत्यागत्य लंकायां सुरक्षितस्थाने राजधानीं स्थापयामास।)

अस्मिन्नेव समये राजर्षिजनकः कुरुक्षेत्रमभ्येत्य लाङ्गलयज्ञानुष्ठानार्थं प्रवृत्तोऽभूत्। सुवर्णलाङ्गलेन भूमिकर्षणसमये तल्लाङ्गलसीतासकाशात्काचित्कन्योत्थिता। अपरस्मिन्नेव क्षणे जनकेनाकाशवाणी अश्रूयत—'राजन्! इमां ज्वलनार्कसदृशीं दिव्यद्युतिसम्पन्नां बालिकां स्वगृहं नीत्वा आत्मीयकन्यामिव प्रतिपालय। अनयैव कन्यया जगतः

9

'साधुवादध्वनिः समुत्थितः। ततः महायशस्वी रघुनन्दनः सहस्रशः प्रेक्षकाणामानन्दं वर्धयन् लीलयैव धनुमध्यभागे हस्तेन गृहीत्वा तुमुलहर्षध्वनिना सार्धं तदुत्तोलितवान्, तदुपरि गुणारोपणं च विधाय तस्य टङ्कारं दत्तवान्। तेनैव सह आकस्मिकवज्रनिनादतुल्येन शब्देन तद्धनुर्द्विधा भग्नम्। प्रशान्ते च कोलाहले राजा जनकः विश्वामित्रमुवाच—'भगवन्! एतद्धनुर्गुणारोपणं नाम अचिन्तनीयं परमाद्भुतं च कार्यम्। अनेके राजानः विफलमनोरथाः सन्तः निवृत्ताः। कोऽपि प्रत्यञ्चारोपणे समर्थः स्यादिति मया न भावितम्। परं दशरथनन्दनस्य शौर्यवीर्याभ्यामतीव प्रीतोऽहम्। अतः अस्मन्नन्दिनी सीता

---

प्रकृतमङ्गलं महत्कार्यसाधनं जायेत। यज्ञाधानमिदानीं विधीयताम्। एषा तव यज्ञे कोऽप्यन्तरायः सिद्ध्येदिति न भावय।'

इमामाकाशवाणीं निशम्य जनकः प्रीतमानसः कृतयज्ञसम्पादनः कन्यां गृहीत्वा निजराज्यं प्रत्यागतः—कन्यायाः 'सीता' इत्यभिधानं विहितम्।

महर्षिवाल्मीकिविरचितग्रन्थद्वये सीतोत्पत्तिविषये द्विप्रकारं वर्णनं लभ्यते। अतः 'वाल्मीकिरामायण' रचयिता कविः वाल्मीकिः 'अद्भुतरामायणरचयिता च वाल्मीकि एक एव व्यक्तिरपरो वा अयं प्रश्नः स्वयमेव मनसि उपस्थितो भवति।...पुनश्च वाल्मीकिरचित 'अद्भुतरामायण' मतेन रावणवधः सीतया [illegible] न रामेण। रामरा-

चेदिमं पतिरूपेण स्वीकरिष्यति तर्हि जनककुलस्य यशः कीर्तिश्च वृद्धिमेष्यतः नास्त्यत्र कोऽपि संदेहः। हे कौशिकब्राह्मण! प्राणेभ्योऽपि प्रियतरकन्यासम्प्रदानं विधास्यामि, स्वस्ति भवते।

अपरतः रामकृतहरधनुर्भङ्गसंवादेन विजयवाद्यानि ध्वनितुमारब्धानि। अन्तःपुरमहिलागणोऽपि विशेषत आनन्दितोऽभूत्। सर्वाभरणभूषिता, सुवर्णवर्णा, स्मितवदना पुरनारीभिः सखीगणैश्च परिवृता सीता करधृतकनकमाला विवाहमण्डपे समुपस्थिता। तदानीं सा मुक्ताहारकर्णपत्रप्रभृति विविधाभरणशोभिता परिहितोत्तमवसना चासीत्। तच्चरणयुगुले नूपुरमाला मधुरनिक्वणा शुशुभे। सुमनोभूषितां जयमाला श्रीरामचन्द्रकण्ठेऽर्पयित्वा सानन्दिताजनि। मङ्गल-

---

वणयुद्धस्यान्तिमे दिने रावणबाणेन मूर्छितः रामः रथे पतितः इति प्रवृत्तिमुपलभ्य सीता निजमूर्तिं परित्यज्य भयंकरतनुमाश्रित्य च रणक्षेत्रे खड्गखर्परधारिणी रणचामुण्डेव सहसा रावण माक्रम्य तं लीलयैवावधीत्। रावणबलध्वंसं च कर्तुमारेभे। देवगणस्पर्शेन रामः सचेतनो जातः इत्यादि।

वाल्मीकिरामायणे दृश्यते—दशरथः विश्वामित्रमब्रवीत्—'पञ्चदशवर्षदेशीयौ बालकपुत्रौ राक्षसवधार्थं कथं प्रदास्यामि?' कौसल्या चोक्तवती—'रामस्य पञ्चदशवर्षे उपनयनं सप्तविंशतितमवर्षे वनगमनं च'। एतादृशविविधवर्णनैर्ज्ञातुं शक्यते—वीर्यशुल्का,

वाद्यध्वनिरुत्थितः । जनकनगरी एतैर्माङ्गलिकवाद्यैर्वेदध्वनिभिश्च मुखरिता बभूव । इत्थं रामचन्द्रे वृते पुरवासिनः ललनागणश्च तं भुवनमनोहरं रामचन्द्रमवलोक्य परमानन्दलाभान्विता अभूवन् । उत्सवसमारोहमग्ना आसन्मिथिलापुरवासिगणाः ।

यज्ञशालातः आवासभवनं प्रत्यावर्त्य विश्वामित्रः रामचन्द्रमुक्तवान्—'जनकस्य राज्ञः पणानुसारं त्वया सीताविजयो विहितः । इदानीं त्वं जनकदुहितरं शुभलग्ने समुद्वाह्य अयोध्यां प्रति निवर्तस्व ।'

---

सीता केवलमष्टवर्षदेशीया (केषांचिन्मतेन षड्वर्षदेशीया) आसीत् । ईदृशीमष्टवर्षीयां बालिकां लब्धुं समग्रभारत वर्षीयाणां भारतेतरदेशीयराजानां च मध्ये एतादृशी स्पर्धा समुत्पन्ना अयं विषयः गवेषणयोग्यः । अवश्यमेव युगेऽस्मिन् 'वीर्यशुल्कत्वं नासीत्क्वापि नूतना प्रथा । मन्यामहे अयोनिजायाः सीतयाः दिव्यजन्मैव तादृशाकर्षणकारणम् ।

गोस्वामितुलसीदासस्य 'कृत्तिवास'स्य मतेन च लंकापती रावणः बाणासुरप्रभृतयश्च सीतापाणिग्रहणाभिलाषुकाः हरधनुरुत्तोलनार्थं समागता आसन् । रावणस्यागमनं च जनकचिन्ताकारणं जातम् । रावणः दशानन रूपेणोपस्थितः इति नास्ति कुत्राप्युल्लेखः । पुनश्च अनेके भूपा मिलित्वापि एतद्धनुरुद्धृतिप्रयत्न कृतवन्तः परं नालमासन् तद्विधातुम् ।

गाधिनन्दनवचनं निशम्य रामः विनीतभावेनोक्तवान्—'गुरुदेव! अस्ति किञ्चिन्मम निवेदनम्। वयं कतिपयदिवसपूर्वं अयोध्यायाः अत्रागताः स्मः। तातः मददर्शनेन अस्थिरमानसः कालयापनं कुर्वन्नास्ते। भवानिदानीं मां पितृसमीपं प्रापयतु। अपरं च वयं चत्वारोऽपि भ्रातरः एकस्मिन्नेव दिने अजनिष्महि। समेव मातृपितृस्नेहेन वर्धिताः। अतः इतरभ्रातृवर्जं अहमेकाकी कथं विवाहाभिलाषुकः स्याम्? चतुर्भ्योऽपि भ्रातृभ्यः यः कोऽपि चतसृणां कन्यानां दानप्रवृत्तो भवेत् तस्यैव गृहे वयं विवाहार्थं प्रस्तुता भवेम।'

रामचन्द्रस्य विवेकगर्भं स्नेहपूर्णं च वचो निशम्य विश्वामित्रः किं कर्तव्यविमूढः सन् वाङ्निश्चय विनैव सपदि जनकनृपतेः समीपमायातः। महर्षिविश्वामित्रमवलोक्य धर्मात्मा जनकः आनन्दपूरितकण्ठं तं सम्मान्य गद्गदवचोभिरभाषत—'ब्रह्मर्षे! स्वस्ति तुभ्यम्। इदानीं रामसीतयोः विवाहशुभदिवसनिश्चयं करोतु भवात्।'

कौशिकेन रामचन्द्रमनोभावे विशेषरूपेण ज्ञापिते राजर्षिर्जनकः विषणान्तः अवनतमस्तकस्तूष्णीं तस्थौ। तदानीं राजपुरोहितः शतानन्दः जनकं सम्बोध्य सर्वेषामपि प्रीतिकरं वचनमब्रवीत्—'मतिमन्! भवानस्मिन्विषये किमर्थं सचिन्तोऽस्ति? भवन्निवास एव चतस्रः कन्याः विद्यन्ते कनिष्ठ भ्रातुः कुशध्वजस्य परमरुचिरे रूपयौवन सम्पन्ने च द्वे कन्ये स्तः। भवतोऽपि सुलक्षणे द्वे कन्ये विद्येते।

अतः भवान् एतदेव कन्याचतुष्टयं रामप्रभृति भ्रातृचतुष्टयाय सम्प्रदातव्यम् येन रामाभिलाषः पूरितो भवेत् ।'

शतानन्दस्य समयोचितां सयुक्तिकां च वाचं निशम्य सर्वेऽपि साधुवादपरा बभूवुः । जनकविश्वामित्रावपि प्रमुदितौ । अथ विश्वामित्रः सपदि रामचन्द्रमभ्येत्य शुभवृत्तान्तमिमं श्रावयामास । रामचन्द्रस्तमब्रवीत्—'भगवन् ! भवान् त्रिकालज्ञः । न किञ्चिदप्यविदितं भवताम । किन्तु चत्वारोऽपि भ्रातरोऽत्रमानुपस्थिताः, कथं तर्हि चतुर्णामपि भ्रातृणां विवाहसम्भवः ? तातानुमतिं विना विवाहोऽप्यनुचित एव ।

कौशिकोऽविलम्बं जनकनृपतिसमीपमेत्य तं रामचन्द्रविचारैः परिचितमकरोत् । अथ सर्वशास्त्रविशारदो जनकः महर्षिविश्वामित्रमगादीत्—' हे मुनिश्रेष्ठ! कौशिक! रामचन्द्रेण सयुक्तिकमेव व्याहृतम् । नूनं तस्याभिलाषापूर्तिर्भवेदिति शीघ्रातिशीघ्रं दशरथनृपतिमानेतुं त्वरितगामिनो दूताः अयोध्यां प्रेषितव्याः । ये तत्र गताः सन्तः रामचन्द्रमनोऽभिलषितं सर्ववृत्तान्तं तस्यालौकिककर्माणि च ज्ञापयित्वा प्रीतिसमन्वितं दशरथनृपतिं पुत्रगणसहितं अत्रानेष्यन्ति ।

धर्मात्मा विश्वामित्रः जनकं प्रति 'तथास्तु' इत्युक्तवान् । जनकश्च मन्त्रिगणानाहूय तान्— दशरथः कथं सन्देष्टव्यः इति निर्दिश्य द्रुतं तेषामयोध्याप्रस्थानायोजनं व्यधात् ।

## कुशध्वजस्यागमनम्

परस्मिन्दिवसे प्रभाते पूर्वाह्निककृत्यसमाप्त्यनन्तरं वाक्यविशारदो जनकः पुरोहितं शतानन्दमाहूयोक्तवान् — 'मम महातेजस्वी वीर्यवान् धार्मिको भ्राता कुशध्वजः इक्षुमतीनदीतीरे मनोहरसांकाश्य-नगर्यां निवसति। इयं नगरी प्राचीरपरिखासुरक्षिता। तत्र गत्वा अस्मदिच्छाज्ञापनपूर्वकं तस्येहागमनव्यवस्था कर्तव्या भवेत्। इक्ष्वाकुवंशेन सह अस्माकं वैवाहिकसम्बन्धस्थापनपूर्वकं रामचन्द्रेण सह सीतायाः तस्य कन्याद्वयेन अस्मदन्यकन्यया च सह दशरथनृपतेः इतरात्मजविवाहविषये च सविस्तरं विज्ञाप्य भवता वक्तव्यम् यत् सस्त्रीकस्य तस्य कन्यासहितपत्नोमास्थितिमहं कामये' इति।

जनकनृपतेरिच्छया पुरोहितः शतानन्दः उपाध्यायेन सह कतिपयविचक्षणदूतान् विशेषनिर्देशपुरःसरं शीघ्रगामिरथेन कुशध्वज-नगरीं प्रेषयामास।

दूतगणाः सांकाश्यनगरीमुपस्थिताः सादरं कुशध्वजनृपति-मभिवाद्य तस्मै जनकनृपतेरभिप्रायं ज्ञापयामासुः। कुशध्वजोऽपि जनकाभिलाषेण विशेषतः आनन्दितः। ज्येष्ठभ्रातुरभिप्रायं ज्ञात्वा नरपतिः कुशध्वजः अचिरादेव स्त्रीकन्याब्राह्मणगणैः सह मिथिला-मुपस्थितः। महात्मानं धर्मवत्सलं जनकनृपतिमभिवाद्य स राजार्हसिंहासनासीनोऽभूत्। वीर्यसम्पन्नौ अमितप्रभाशालिनौ

 


उभावपि भ्रातरौ एकस्थानस्थितावबलोक्य मिथिलावासिगण: प्रमुदित: सन् विवाहोत्सवायोजने निमग्नो जातः। अतिविशालो विवाहमण्डप: निरमीयत। अत्यल्पसमयेनैव जनकपुरी उत्सवमुखरिताऽजनि।

## दशरथस्य मिथिलायात्रा

विदेहजनकस्य द्रुतगामिदूतगण: पथि त्रिरात्रमतिवाह्य क्लान्त इवायोध्यामुपस्थितः। स्वपरिचयं जनकस्य प्रार्थनां रामस्य कुशलं हरधनुर्भङ्गघटनां च दशरथनृपाय निवेद्य तं सपुत्रद्वयं सोपाध्यायं सपुरोहितं च शीघ्रं मिथिलायात्रार्थं प्रार्थयामास। श्रीरामचन्द्रस्य सकलालौकिककार्यप्रवृत्तिमधिगत्य दशरथनृपतिः प्रमोदाप्लुतो जातः। वसिष्ठादिऋषिभिः मन्त्रिगणैश्च हृष्टचित्तैः तच्छुभविवाहकार्यसम्मति-प्रदाने विहिते राजा दशरथः जनकमन्त्रिगणस्य कृतयथोचितसत्कारः 'मिथिलायात्रार्थं मन्त्रिगणः सत्वरं प्रस्तुतो भवतु' इत्यादिदेश।

परस्मिन्नहनि प्रातरेव दशरथनृपतिः उपाध्यायेन बन्धुवर्गेण च सह सानन्दं सुमन्त्रमब्रवीत्—'धनाध्यक्षकोशाध्यक्षगणः संगृहीत-प्रचुरधनरत्नादिः सबलं सज्जीभूय यात्रार्थं प्रस्तुतो भवतु। चतुरङ्गिणी सेना च शीघ्रं प्रतिष्ठताम्। वसिष्ठवामदेवजाबालिकश्यपाः दीर्घायु-र्मार्कण्डेयः कात्यायनप्रमुखाश्च ब्राह्मणगणाः सर्वोत्तमरथैरग्रतः प्रयान्तु त्वं चास्मद्रथवरं प्रस्तुतं कुरु।

मातृगणः सानन्दचित्तः भरतशत्रुघ्नौ शिरोऽवघ्राणपूर्वकं आशीर्वचसा संयुयुजे। राजाज्ञानुसारं यात्रायोजने सम्पूर्णे सति दशरथः भरतशत्रुघ्नाभ्यां सह मिथिलायात्रार्थं प्रस्थितः, दिनचतुष्टयानन्तरं सर्वेऽपि ते विदेहदेशमुपस्थिताः।

रामलक्ष्मणौ तातस्यागमनं निशम्य सानन्दं तच्चरणाभिवादनं चक्रतुः। चत्वारोऽपि भ्रातरः प्रेम्णा परस्परमालिलिङ्गुः। पुत्रानेकत्राव-लोक्य दशरथोऽपि हर्षपुलकितगात्रो जातः। स रामं शिरसि आघ्राय आक्रदालिङ्ग्य परिचुम्ब्य चोक्तवान्—'राम! महासौभाग्यवशतः अद्याहं त्वत्प्रफुल्लकमलतुल्यमुखावलोकनसमर्थो जातः। महर्षि विश्वामित्रानुग्रहतः मम सर्वेऽपि मनोरथाः समीचीनतया सम्पन्नाः।'

राजा दशरथः उपस्थित इति निशम्य धर्मात्मा जनकनृपतिः पुरोहितशतानन्देन उपाध्यायगणेन च सह तं प्रत्युद्गम्य दशरथस्य वसिष्ठादिमुनिगणस्य च स्तुतिसत्कारौ विधाय सन्तुष्टमनसा प्रोक्तवान् —'अहो सौभाग्यमस्माकम्। यदिक्ष्वाकुकुलवंशीयः महाबलो राजा दशरथः भगवद्वसिष्ठप्रभृतिविप्रगणश्चेह समुपस्थितः। भाग्यक्रमेणैव मम कन्यादानमार्गेऽखिलान्तरायाः अपसारिताः। महाराज! अयं जनः ज्यायान्, कुशध्वजश्च मम कनीयान्भ्राता। मम कुशध्वजस्य चास्ते कन्याद्वयम्। यदि भवतागमनानुकम्पा कृता, चतुर्भ्योऽपि भवत्पुत्रेभ्यो-ऽस्मत्कन्या चतुष्टयं प्रदातुमीहे।'

 


जनकस्य प्रीतिसम्भृतं वचो निशम्य प्रीतो दशरथस्तमब्रवीत् —'भवदभिलाषः पूर्णतामेष्यति इत्यत्र कः सन्देहः !

दशरथवचसा सर्वतो हर्षध्वनिरुत्थितः। सभासदः मित्रगणाश्च इक्ष्वाकुवैदेहकुलद्वयस्य परस्परप्रशंसावादमारब्धवन्तः। अनन्तरं जनकनृपतिः दशरथस्य वसिष्ठादिमुनिगणस्य च कृते सर्वोपभोगसम्पन्ने सुशोभितगृहे सुखपूर्वकं क्षणदायां निवासव्यवस्थां विहितवान्, यत्र सर्वेऽपि सुखेन रजनीमतिवाहयामासुः। दशरथोऽपि सपुत्रगणः उत्सवमुखरितायोध्यायां निद्रासुखमन्वभवत्।

अपरस्मिन्दिवसे प्रातरेव विवाहस्य सर्वविधायोजनं पूर्णतां नीत्वा जनकनृपतिः भ्रात्रा कुशध्वजेन सह सुखासनोपविष्टः सन् पुत्रैः मन्त्रिगणैश्च सार्कं दशरथनृपतिमानेतुं 'सुदाममन्त्रिणमादिदेश। जनकामन्त्रणतः सदले दशरथनृपतौ समुपस्थिते धर्मात्मानौ जनककुशध्वजौ आसनादुत्थाय कृताञ्जलिपुटौ दशरथं स्वागतपूर्वं सम्मानितौ विधाय तं सर्वोत्कृष्टासने समुपवेश्याब्रवीत्—'विजयतां दशरथनृपतिः! भाग्यवशात एव सर्वविघ्नान्यपसृतानि। परश्वः उत्तराफाल्गुनी नक्षत्रम्, विवाहपक्षे एतद्दिनं विशेषरूपेण प्रशस्तम्।'

जनकनृपतेः मधुरवाक्यश्रवणतः धीमान् दशरथः जनकं सम्बोध्योक्तवान्—'महाराज! भगवान् वसिष्ठः इक्ष्वाकुगणस्य कुल-

दैवतम् । सर्वेष्वपि मम कार्येषु अयमेव वक्ता कर्ता च । विश्वामित्रस्वान्यान्यमुनिगणस्य चानुमतिक्रमेणायमस्मद्वंशपरिचयं दद्यात् ।

## दशरथस्य वंशपरिचयः

दशरथे तूष्णीं स्थिते वाङ्निपुणः वसिष्ठः जनकं सम्बोध्य वक्तुमुपचक्रमे—'संक्षेपतोऽहमिक्ष्वाकुवंशपरिचयं दास्यामि । मायान्वितात्परब्रह्मणः स्वयंभूर्ब्रह्मा समुत्पन्नः । ब्रह्मणश्च सकाशात् परवर्तिनः मरीचिकश्यपौ विवस्वान् मनुश्चेति चत्वारः पुरुषा जज्ञिरे । एते चत्वारः पूर्वप्रजापतयः आसन् येषां पुत्र इक्ष्वाकुरासीत् । यन्नामानुसारमेवाय'मिक्ष्वाकुवंश' इत्युच्यते । एतदनन्तरं यथा क्रमं कुक्षिविकुक्षिबाणारण्याद्याश्चत्वारः पुरुषा अजनिषत । ततः पृथुत्रिशंकुधन्धुमाराः युवनाश्वमान्धातृसुगन्धयश्चेति षट् पुरुषाः । तत्पश्चात् ध्रुवसन्धिः, भरतासितौ, सगरासमञ्जसौ, अंशुमान् दिलीपभगीरथौ च इत्यष्टपुरुषाः । ततः क्रमशः ककुत्स्थरघू, कल्मषपादः, शङ्खनः, सुदर्शनाग्निवर्णौ, शीघ्रगः मरुश्चेति अष्ट पुरुषाः । मरोः परतः प्रशुश्रुकः, अम्बरीषनहुषौ ययातिनाभागौ अजश्च । तस्मादजादेव दशरथस्य जन्म । दशरथस्य रामलक्ष्मणभरतशत्रुघ्नाख्यानां चतुर्णां पुत्राणां कृते त्वद्देशजाः चतस्रः कन्याः प्रार्थये । हे नरश्रेष्ठ ! त्वमास्मिन्योग्यकुलेस्वीयजतसृणां कन्यानां सम्प्रदानं कुरुष्व ।

## जनकस्य वंशपरिचयः

वाग्मिनः वसिष्ठस्य वचसि समाप्ते जनकनृपतिः कृताञ्जलिर्निवेदयामास—' मुनिश्रेष्ठ! शुभमस्तु भवते! मयापि निजवंशवर्णनं श्राव्यते। महामते! कन्यादानविषये सद्वंशोद्भवव्यक्तेः कुलं साद्यन्तं वर्णयितुमुचितम्। अतः मयापि तद्विधीयते। स्वकर्मभिः त्रिलोकविख्यातः महात्मनामग्रणीः निमिर्नाम परमधार्मिको राजाऽभूत्। तस्य मिथिर्नामात्मजः। मिथेः पुत्रो जनकः। स एव प्रथमो जनकनृपतिः। तस्यैव नामानुसारं अस्याः नगर्या 'मिथिला' इति नाम जातम्। एतद्राजवंशजाश्च सकला अपि जनकनाम्ना प्रसिद्धाः। जनकस्यानन्तरं यथाक्रमं उदावसुः, नन्दिवर्धनः, सुकेतुः देवरातश्चेति चत्वारः पुरुषाः। तदनन्तरं क्रमशः बृहद्रथमहावीरौ, सुधृति धृष्टकेतु चेति चत्वारः पुरुषाः। ततः क्रमात् हर्यश्वः, मरुः, प्रतीन्धकः कीर्तिरथः, देवमीढः, विबुधः महीध्रकश्चेति सप्तपुरुषाः। महीध्रस्य पुत्रः राजर्षिः कीर्तिरथः। स किल महाबलसम्पन्नो राजासीत्। तस्य महारोमाभिधः पुत्रोऽभूत्। तस्यात्मजो राजर्षिर्धर्मात्मा स्वर्णरोमा। स्वर्णरोमपुत्रस्य नाम ह्रस्वरोमा। धर्मज्ञस्य महात्मनः ह्रस्वरोमनृपतेः पुत्रद्वयम् - अहं ज्यायान्, अयं वीरवरः कुशध्वजश्च मम कनीयान् भ्राता। ममाभिधानं 'सीरध्वज' इति। 'जनक' इत्यस्मद्वंशस्योपाधिः*। अतोऽहमपि 'जनक'-

---

*दशरथजनकयोः सम्पूर्णा वंशतालिका मूलसंस्कृत वाल्मीकिरामायणात् संक्षेपेण गृहीता।

नाम्नाख्यातः। महामुने! शुभमस्तु भवते! परमप्रीत्याहं दशरथाय चतस्रः कन्याः प्रदास्यामि। त्रिवारं सत्यवचनपूर्वकं प्रतिजानामि यत् परमप्रीत्या कन्याचतुष्टयं दशरथाय समाददे। देवकन्यातुल्यां, रूपगुणशालिनीं मम पुत्रीं वीर्यशुल्कां सीतां रामाय, उर्मिलानाम्नीं द्वितीयकन्यां च लक्ष्मणाय प्रददामि। अस्मद्भ्रातुः कुशध्वजस्य परमसुन्दरतनये माण्डवीं श्रुतकीर्तिं च क्रमेण भरतशत्रुघ्नयोरर्धाङ्गिन्यौ भूत्वा तयोः सेवातत्परे भवताम्। महामुने! एतस्मिन्नेवदिने दशरथनृपतेश्चत्वारः पुत्राः एतासां चतसृणां राजकुमारीणां पाणिग्रहणं कुर्वन्तु।

इत्युक्तवन्तं विदेहनृपतिं रघुनन्दनो राजा दशरथः सहर्षमुवाच- 'मिथिलापते! भवन्तावुभावपि भ्रातरौ असीमगुणशालिनौ। ऋषयो राजगणाश्च उभाभ्यामपि सम्यक् पूजिताः। कल्याणमस्तु। भवद्भ्यां सार्धं वैवाहिकसम्बन्धस्थापनं परमसौभाग्यलक्षणमिति मन्यामहे। भद्रमस्तु वाम्।

दशरथवचनैश्चतुर्दिक्षु विपुलो हर्षध्वनिरुच्चचार। ततो दशरथः सर्वेषामपि प्रीतिवर्धनपुरःसरं जनकानुमत्या मुनिद्वयं पुरस्कृत्य निजावासगृहं प्रत्यावर्तत। पितृपुरुषदेवाद्याभ्युदायिकक्रियाश्च समपादयत्।

परेद्युः प्रभाते पुत्रचतुष्टयस्य कल्याणार्थं ब्राह्मणचतुष्टयाय सुवर्णमण्डितशृङ्गाणि धेनूनां चत्वारिलक्षाणि, कांस्यदोहनपात्रैः साकं

अनेकाः पयस्विनीर्गाः पुत्रमङ्गलार्थकृतगोदानोपलक्षे चानेकब्राह्मणेभ्यो धनादिदानं विधाय तृप्तो जातः ।

विवाहदिने शुभलग्नसमये दशरथः वसीष्ठादिमुनीन् पुरस्कृत्य अभिविवाहमण्डपं प्रस्थितः । रामादयश्चत्वारो भ्रातरोऽपि सर्वाभरण-भूषिताः सन्तः दशरथमनुययुः । विवाहमण्डपः रत्नस्तम्भसमूहभूषितः, विस्तृतरुचिरचन्द्रातपः, उत्तमतोरणैः मुक्तापुष्पफलादिभिश्चालङ्कृतः, वेदविद्ब्राह्मणसमाकीर्णश्चासीत् । सुवर्णकण्ठहारान्विताभिः सुवेशपरि-ष्कृतरमणीभिश्च मण्डपशोभामतितरामवर्धत । सर्वतः भेरीदुन्दुभिपट-हादिवाद्यध्वनिः इतस्ततः प्रचलितं नृत्यगीतादिकं च सर्वेषामपि प्रमोदकारणमजनि ।

## शुभविवाहः

रामादिभिः सह दशरथः यज्ञमण्डपं प्रविश्य निर्दिष्टासने समुपविष्टः । अनन्तरं वसिष्ठविश्वामित्रौ शतानन्दप्रभृतयो ब्राह्मणाश्च यथाविधि वेदीं विरच्य तस्याश्चतुर्दिक्परिधिं गन्धपुष्पैः सौवर्णकोणैश्चा-लङ्कृत्य तच्चतुःसीमासु यवाङ्कुरसमन्वितान् अनेकचित्रकुम्भान धूपाधारान् अनेकशङ्खाधारांश्च, स्रुवस्रुक् अर्घ्यादिसमन्वितानि अनेक-पात्राणि, लाजपूर्णपात्रं, संस्कृताक्षताः, प्रचुरपरिमाणाः कुशाश्च स्थापिता आसन् । ततः महातेजस्वी वसिष्ठः कल्पसूत्रोक्तनियमानुसारं वेदमन्त्रपाठं कुर्वन् अग्निस्थापनादिकं विधिवत् होमं विदधौ ।

होमसमाप्त्यनन्तरं जनकः सर्वाभरणभूषितां सीतामानीय कौसल्यानन्दवर्धनस्य रघुनन्दनस्य सम्मुखाभिमुखीमुपवेश्य च राघवमब्रवीत्—'स्वस्ति तेऽस्तु! अस्मत्कन्या सीता तव सहधर्मचारिणी भवतु। स्वकरेण त्वमस्याः पाणिग्रहणं कुरु। महाभागा सीता अत्यन्तपतिव्रता सती छायेव नित्यं तवानुगामिनी भवेम्।'

एवं व्याहृत्य शुभपुनर्वसुकर्कराशौ कन्यालग्ने रामहस्ते मन्त्रपूतं जल समर्प्य, रामाज निजकन्यायाः सम्प्रदानानन्तरं आनन्दपूरितान्तरः लक्ष्मणमब्रवीत्—'लक्ष्मण! आगम्यताम्! स्वस्ति तुभ्यम्। अहं निजात्मजामुर्मिलां तुभ्यं सम्प्रददे। त्वयास्याः पाणिग्रहणं क्रियताम्।' ततः मिथिलापतिः भरतं निजगाद—'रघुनन्दव! माण्डवीपाणिग्रहणं क्रियताम्।' शत्रुघ्नं चा ब्रवीत् — 'महाबाहो! त्वं श्रुतकीर्तिपाणिग्रहणं विधेहि।' इत्थं क्रमशः चतसृणां पुत्रीणां रघुनन्दनानां करेषु सम्प्रदानं विधाय जनकः सर्वान्व्याह—'यूयं सर्वेऽपि शुभदर्शनाः सम्यग्ब्रह्मचर्यादिव्रताचरणतत्पराश्चास्त; इदानीं स्त्रीभिर्मिलता भवत।' जनकवचनं निशम्य वसिष्ठमतमनुसृत्य सर्वेऽपि राजकुमारा धृतराजकुमारीकरपल्लवाः अग्निवेदी, जनकनृपतिं ऋषिगणं च प्रदक्षिणीकृत्य शास्त्रोक्तनियमानुसारं यथाविधि वैवाहिककार्यसम्पादनकार्षुः। शुभलक्षणान्वितं भ्रातृचतुष्टयमित्थं लोकपालगणसदृशं स्वदेहप्रभाभिः व्यराजत्।

## सीताजन्मवृत्तान्तः

सम्पन्ने च शुभविवाह मङ्गलेमिथिलापतिः नारदोक्तिमनुसृत्य सीतायाः जन्मरहस्यं वसिष्टविश्वामित्रदशरथान्प्रति वर्णयामास— 'यज्ञभूमिशोधनार्थं एकस्मिन्नहनि लाङ्गलेन भूमिकर्षणपरे मयि 'लाङ्गलसीता प्रतः एकं वर्तुलाकारं समुत्थितम्। यस्याभ्यन्तरं शुभलक्षणा सद्योजाता शरच्चन्द्रमुखमण्डला एका कन्या अवलोकिता। तामेव कन्यां पुत्रिकारूपेण स्वीकृत्य लालनपालनार्थं प्रीतेन मनसा महिषीं प्रति समर्पितवानहम्। अनन्तरं कस्मिंश्चिदहनि निर्जनस्थे मयि देवर्षिनारदः वीणावादनं हरिगुणगानं च कुर्वन् तत्रोपस्थितः। यथाविधि सम्पूजितः सुखोपविष्टश्च देवर्षिः सहर्षमब्रवीत्— 'तव मङ्गलार्थं एको परमगुह्यकथा श्रावयामि, श्रूयताम्। परत्मात्मा हृषीकेशः भक्तानुग्रहार्थं, देवकार्यसाधनाय रावणवधहेतोश्च मायामाश्रित्य 'रामा' भिधानेन दशरथगृहेऽवतीर्णः। चतुर्भिरंशैश्च दशरथस्य पुत्रचतुष्टयरूपेणावस्थितः योगमाया च सीतारूपेण त्वद्गृहे जन्म गृहीतवती। अत एव त्वं परमप्रयत्नपूर्वकं रामहस्ते एव तां समर्पय यतः सा परमामरामस्य पूर्वपत्नी। इमां वार्तां श्रावयित्वा देवर्षिः नारदः आकाशमार्गेण प्रस्थितः। ततः प्रभृति 'सीतां' नारायणस्य लक्ष्मीं मत्वा तल्लालनपालन तत्परोऽहम्। तां च शुभलक्षणां जानकीं कथं श्रीरामहस्ते समर्पयेयम्' इति चिन्ताव्याकुलोऽभवम्। ततश्च गभीरचिन्तन-

फलस्वरूपो भावित: कश्चिदुपाय:। भगवान् शंकर: त्रिपुरदहनानन्तरं एकं धनु: अस्मत्पूर्वपुरुषनिकटं न्यासरूपेण रक्षितवान्। एतद्धनुरेव मया सीतापाणिग्रहणस्य पणस्वरूपं निश्चितम्। हे मुनिश्रेष्ठ! कौशिक! इदं धनु: सर्वेषामपि मानखण्डनमकार्षीत्। भवाननुग्रहपूर्वकं धनुर्दर्शनार्थं कमललोचनरामचन्द्रमिहानीतवान्। अस्मदभिलाषोऽपि तेन पूर्णतां गत:।' ततश्च जनक: रामचन्द्रं बहुविधं सम्मान्य तस्मै अनेककोटि-दीनारान्, संख्यातीतरथान्, गजाश्वप्रभृतीन्, दासीनां शतत्रयम्, सीताप्रीत्यर्थं च मुक्तारत्नमयान्विविधानलङ्कारान् आभूषणानि च प्रति-पादितवान्। अथ क्रमश: वसिष्ठविश्वामित्रदशरथप्रभृतीन् सम्पूज्य भरतलक्ष्मणशत्रुघ्नेभ्य: विविधानि धनरत्नानि, हस्त्यश्वपदातीन्, दासी:, तिसृभ्यश्च कन्याभ्य: विविधालंकारान्, क्षौमवस्त्राणि, पयस्विनी:, सखीकन्याश्च दत्तवान्। ततश्च रघुनन्दनेषु स्त्रीभि: सार्धं वासस्थलं प्रयातेषु राजा दशरथ: ऋषिभि: ब्रह्मणगणैश्च सहताननुजगाम।

## अयोध्यायात्रा परशुरामदर्पभङ्गश्च

अपरेद्यु: प्रात: महामुनि: विश्वामित्र: दशरथजनकयोरनुज्ञां गृहीत्वा हिमालयाभिमुखं प्रतस्थे। राजा दशरथोऽपि निजात्मजै: वधू-भिश्च सह अयोध्यापुरीयात्रार्थं प्रस्तुत:। जनकनृपति: सर्वानपि यथाविधि पूजयित्वा सम्मानितवान्। अथ साश्रुलोचना जननी रोरुद्य-मानां सीतां समालिङ्ग्य साशीर्वादवचनैरगादीत्—'वत्से। पाति-

त्रत्यधर्मावलम्बनपूर्वकं निरन्तरं रामेऽनुरक्ता श्वश्रूगणशुश्रूषापरायणा च भूत्वा सुखेन कालयापनं कार्यम्। अपरजनन्यश्च पुत्रीः अनुरूपाशीर्वचनैः संयुयुजुः। दशरथस्य अयोध्यायात्रासमये भेरीपटहमृदङ्गदुन्दुभयो ध्वनितुमारब्धाः। तुमुलकोलाहले दशरथः पुत्रान् वधूंश्च गृहीत्वा अयोध्याभिमुखं प्रस्थितः।

मिथिलातः योजनत्रयमितं पन्थानमतिक्रम्य तैः अकस्मात् विविधान्यशुभदृश्यान्यवालोकयन्त। पक्षिणां कलकलः, मृगगणानां भयतिचीत्कारः, सकलमहीरुहोत्पाटनकारी प्रबलझञ्झावातश्च सर्वान्व्याकुलीचकार। कम्पायमानां धरित्रीं धूलिवृष्ट्या प्रच्छन्नामवलोक्य सर्वेऽपि भयचकिता जाताः। तदानीं दशरथेनावलोकितं यत्कार्तवीर्यान्तकः, दृष्टः, क्षत्रियमानमर्दनः साक्षात्कालसदृशोभगवान् जामदग्न्यपरशुरामः भीमनादेन मार्गावरोधं कुर्वन् अवस्थितः। नीलनीरदकान्तेः, जरामण्डलभूषितशिरसः, तस्य करे विद्युद्वर्णं भीषणं धनुः, पृष्ठदेशेऽक्षयतूणीरः, स्कन्धे च क्षत्रियांतकः परशुरासीत्। *

* गोस्वामि तुलसीदासकृतरामायणमतेन रामसीतयोर्विवाहात्-पूर्वमेव हरधनुर्भङ्गसंवादमुपलभ्य परशुरामः मिथिलामुपस्थितः। दम्भास्फालनपूर्वकं च रामचन्द्रमपमानितवान्। अनेन अविचलितो रामः नम्रतया परन्तु दृढवचनैः भार्गवं निरास्यत्। रामवीर्यपरीक्षार्थं परशुरामः स्वकीयं 'रमापति' नामकं धनुः सदर्पं रामचन्द्रस्य पुरतः

द्वितीयकालान्तकसदृशमीदृशं परशुराममग्रतः उपस्थितम-वलोक्य दशरथनृपतिरतिभयविह्वलः सन् अर्घ्यादिभिः पूजां विस्मृत्य दण्डवत् प्रणम्य भार्गवस्य पुरतोऽसकृत्प्रार्थयामास 'प्रसीदतु भवान्' अस्मांस्त्रायस्व। मम पुत्रेभ्यः प्राणदानं च क्रियताम्।' जामदग्न्यः दशरथवचनमशृण्वन् क्रोधेन दिशो विदिशश्च विस्मृत्य अधरोष्ठदंशपूर्वकं रामं सम्बोध्योक्तवान् 'रे अहङ्कारिन्! क्षत्रिय! त्वं ममाभिधानेनैव प्रसिद्धः सन्भूतले संचरसि। 'अहमेव बलवान्' इति तवाभिमान-श्चेत् शीघ्रं स्वकीयं पौरुषं दर्शय। एकं पुरातनं कीटजीर्णं शरासनं द्विधाविधाय वृथैव त्वं गर्वितोऽसि। त्वं तु केवलं बालकः; मम शौर्यं वीर्यं च किमपि न जनासि। मया पितृवधप्रतिशोधार्थ-मनेकशः क्षत्रियाः इयदवधिपर्यन्तं उत्सन्नाः यत्सद्योजाताः गर्भगता अपि क्षत्रियशिशवः विनाशिताः। इत्थं सम्पूर्णां पृथिवीं विजित्य यज्ञ-

---

संस्थाप्य तस्मिन्धनुषि प्रत्यञ्चारोपणं च कर्तुमादिदेश। लीलयैव धनुषि ज्यासमारोपणपरं राममवलोक्य भार्गवमानसं विस्मयान्वितमजनि। तस्य ज्ञानचक्षुरुन्मीलितमिव। स (भार्गवश्च) रामस्य शौर्यवीर्यवीरत्वशक्ति-विषये निश्चितो भूत्वा रघुकुलकेतोः विजयमुद्घोष्य तपस्यायै प्रस्थितः।

कृत्तिवासरामायणे दृश्यते—जनकपुरीतः यात्रायाः प्राक्काले परशुरामः भीषणगर्जनं कृत्वा रामस्य मार्गावरोधपूर्वकं पुरतः स्थितः इत्यादि। इत्थं रामेण परशुरामगर्वशातनं विहितम्।

सम्पादनानन्तरं कश्यपमहात्मने सकलां महीं दक्षिणारूपेण प्रदाय च इदानीं महेन्द्रपर्वतमधिवसामि। सम्प्रति त्वया हरधनुर्भङ्गो विहितः इति निशम्य त्वरितमिहागतोऽस्मि। राम। इदं सुमहद्वैष्णवं धनुः पैतृकमिति कृत्वा मयाधिगतम्। क्षात्रधर्मानुसारं त्वमेतदुत्कृष्टं धनुर्गृहीत्वा अस्मिन्परपुरविनाशसमर्थं बाणं संयोजय। हे काकुत्स्थ! यदि एतत्कर्तुं समर्थस्त्वं तर्हि त्वया सह द्वन्द्वयुद्धार्थं प्रस्तुतो भविष्यामि, नो चेत् सकलानपि हनिष्यामि। क्षत्रियान्तको रामः खल्वहम्!'

इत्थमुक्तवति परशुरामे सहसा मही कम्पितेव! निबिडान्धकारेण सर्वेषामपि दृक्पथोऽवरुद्धः। दशरथादयः भयात्कम्पितुमारभन्त। जामदग्न्यपरशुरामस्य पौरुषवचनं निशम्य दाशरथिरामः गौरववशतः संयतवाक् भूत्वा तमब्रवीत्—

"श्रुतवानस्मि यत्कर्म कृतवानसि भार्गव!
अनुरुध्यामहे ब्रह्मन्! पितुरानृण्यमास्थितः॥
वीर्यहीनमिवाशक्तं क्षत्रधर्मेण भार्गव!
अवजानासि मे तेजः पश्य मेऽद्य पराक्रमम्॥"

(७६ सर्ग २-३ वा. रा.)

इत्यभिधाय वीर्यवतारामेण सक्रोधं परशुरामहस्तात् अनायासतः तदेव श्रेष्ठं धनुर्गृहीतम्; तदुपरि प्रत्यञ्चारोपणं च विधाय तूणीरत-बाणं चोद्धृत्य [illegible] पूर्वकं सपौरुषभरं रामः भार्गवमुक्तवान्—

'अमोघं खलु मम शरसन्धानम् । उपदिश्यतामेतस्य लक्ष्यम् । भवांस्तु जात्या ब्रह्मणः अपरं च विश्वामित्र भगिन्याः पुत्रः अतः मम पूजनीयोऽसि भवान् । तस्माद्भवत्प्राणविनाशार्थं एतच्छरत्यागेऽप्रभुरहम् । ममैष अमोघः शरः तवगतिशक्तिं स्वकर्मार्जितोत्तमलोकविनाशं वा करिष्यति । यतः स्ववीर्यतः परबलदर्पविनाशकारी परपुरविजयी चैष दिव्यवैष्णवशरः कदापि निष्फलो न स्यात् ।'

दाशरथिरामस्य वचनं निशम्य परशुरामः निर्वीर्य इव किंकर्तव्यताविमूढः भूत्वा जडवत् स्तब्धभावेन निर्निमेषनयनः रामचन्द्रमवलोकयन् स्थितः । ततश्च धीरस्वरेण रामं संबोध्य असहाय इव व्याजहार— 'काकुत्स्थ । यदाहं कश्यपाय वसुन्धरां समर्पितवान्, तदा गुरुः (कश्यपः) मामब्रवीत्—'त्वयाऽस्मद्राज्ये निवासः न कर्तव्यः ।' ततः प्रभृति महेन्द्रपर्वतमधिवसामि । अस्यां पृथिव्यां रात्रिवासं परित्यज्य स्वेच्छानुसारं द्रुतगत्या महेन्द्रपर्वतं प्रति गन्तव्यं भवेत् । अतः मम गतिशक्तिं मा विनाशय । मत्तपोबलार्जितलोकसमूहो विनाश्यतां भवता । धनुर्गृहीत्वा आकृष्टमात्रे तस्मिन् मया ज्ञातम्—यद्भवान्सुरेश्वरो विष्णुः । स्वस्त्यस्तु तुभ्यम् ! काकुत्स्थ ! भवान्त्रिलोकनाथः युद्धे चाप्रतिहतकर्मा । अवलोक्यताम् ! सुरगणास्त्वद्दर्शनार्थं समवेताः ।' अतः त्वत्तः पराभवं प्राप्य न लज्जितोऽहमपि तु गौरवान्वितः ।' अथ परशुरामवचनात् रामेण स दिव्यशरः मुक्तः ।

 


दाशरथिरामेण च पूजितः सन् परशुरामः तं प्रदक्षिणीकृत्य स्वस्थानं प्रतिनिवृत्तः। तस्मिन्समये दशरथनृपतिः रामं मृत्युकवलादिव पुनरधिगतममन्यत। नासीत्तदानन्दस्य सीमा! स मुहुर्मुहुः राममालिङ्गितवान्, स्वस्थीभूय च अयोध्यायात्रार्थं निर्गतः।

## अयोध्याप्रत्यावर्तनम्

क्रमशः सर्वेऽपि अयोध्यानगरसमीपवर्तिनो बभूवुः। अस्मिन्समये सा रमणीया नगरी प्रकाशसमूहपरिशोभिता, मङ्गलद्रव्यधारिणी, सुसज्जिता, पुरवासिगणैरलङ्कृता, जलसिक्तराजपथा, विविधकुसुमराशिसमाकीर्णा, तूर्यभेरीवाद्यध्वनिमुखरिता चाजायत। पुरजनपदवासि ब्राह्मणाः पौरजनाश्च अतिदूरं गत्वा नृपतेः प्रत्युद्गमनं कृतवन्तः। श्रीमान् महायशस्वी दशरथः अनुगामिपुत्रगणैः कल्याणीभिर्वधूभिश्च सह अयोध्यानगरीं प्रविवेश। तदानीं कौसल्या, सुमित्रा कैकेयी अन्यराजमहिष्यश्च क्षौमवासपरिधाना होमलक्षणभूषिताः सत्यः महाभागाः यशस्विनीः सीतोर्मिलामाण्डवीश्रुतकीर्तीः ससम्भाषणं सालिङ्गनं च अभिनन्दुः। राजकुमारीगणश्च वन्दनीयजनाभिवादनपूर्वकं विविधदेवालयेषु गृहदेवताः पूजयामास। ततश्च परमानन्देन पतिभिः सह निभृतं वासमकार्षुः। राजकुमाराश्च मनोरमभार्यालाभेन सुखिनः संवृत्ताः।



इति दिव्यरामायणे बालकाण्डं समाप्तम्।

# ॥ अयोध्याकाण्डम् ॥

## भरतस्य मातुलालयगमनम्

रामः वेदादिमर्यादानुवर्ती भूत्वा पित्राज्ञानुसारं पौरादीनां प्रियं हितजनकं च यावत्कार्यं कुर्वाणः यथासमयं पितृमातृसेवां गुरुशुश्रूषां च विहितवान् । अयोध्यावासिगणः रामं प्रति विशेषतोऽनुरक्त आसीत् । मनस्वी रामः जानकीगतप्राणः सन् प्रायः द्वादशवत्सरपर्यन्तं * सानन्दं सीतासहवासं व्यधात् । सीता 'पितृकृतपत्नी' इति कृत्वा रामस्यातिप्रिया तु आसीदेव तथापि तस्या अलोकसामान्यसौन्दर्येण सद्गुणैश्च सीतां प्रति रामस्यानुरागमुत्तरोत्तरमवर्धत । मूर्तिमती लक्ष्मीस्वरूपा अलौकिकरूपलावण्यवती जनकात्मजा सीतापि स्वमनःप्राणान् देवतुल्यसर्वगुणभूषिताय रामायार्पितवती । प्राणसमूह-

---

*रामचन्द्रस्य विवाहवनगमनयोर्मध्यवर्तिद्वादशवर्षात्मक समयविषये कापि घटना कस्मिन्नपि रामायणे वर्णिता न दृश्यते । अतीवाश्चर्यं खलु ! रामायणरचयितारः सर्वेऽपि कवयः एतत्समयविषयिकां कामपि घटनां न ज्ञातवन्तः इत्येव प्रतिभाति । विशेषतः अस्मिन्समये अयोध्यायाः राजनैतिकराजपारिवारिकोभयपरिस्थितिविषये वाल्मीकिरपि तूष्णीमेवास्ते । परं एतादृश द्वादशवत्सरात्मकान्धकारमयराजनैतिकपरिस्थितिः रामचन्द्रस्य वनवासः भरतस्य राज्याभिषेकश्च इति

द्वयमेकीभूतमिव एकस्य प्राणवृन्दस्य कोमलं स्पदनमन्यप्राणवृन्दे झङ्कृतमजायत। इत्थं प्रायः अतीतेषु द्वादशवत्सरेषु एकस्मिन् दिने भरतस्य मातुलः वीर्यवान् युधाजित् भागिनेयं भरतं स्वराज्ये नेतुं हर्ष-प्रफुल्लमनसा अयोध्यामागतः। दशरथनृपतेश्च पुरतः स्वाभिलाषं प्रकटी-चकार। दशरथेन भरतं प्रति मातुलाभिलाषे विशदीकृते स (भरतः) हृष्टचित्तः शत्रुघ्नेन सह गन्तुं प्रस्तुतः। शुभदिने भरतः शत्रुघ्नेन सह

---

घटनाद्वयं प्रकाशमायाति। वयं योग्यस्थलेषु एतस्य संक्षेपतः विवेचनं करिष्यामः।

रामवनगमनार्थं केवलं कैकेय्या उत्तरदायित्वं कैकेयीं प्रति अविचार एव; अथ च तादृशकार्यं पक्षपातस्य परिचायकं च स्यात्। राजा दशरथः कैकेयीतः जातपुत्राय राज्यप्रदानार्थं प्रतिज्ञा-बद्ध आसीत्। परन्तु एतादृशप्रतिज्ञापालनकार्येऽन्तराय बाहुल्यमपि अविद्यत। प्रथमं ज्येष्ठपुत्रो रामः दशरथस्य प्रियतमः, दशरथोऽपि रामगतप्राण आसीत्। अपि च रामः शौर्यवीर्यपराक्रमेष्वपि सर्वश्रेष्ठो-ऽभूत्। स देहे मनसि च बहुगुणान्वितः जनाभिमतः ब्राह्मणानां प्रजा-नाममात्यवर्गाणां सर्वेषां लोकानां चैतावान्प्रिय आसीत् यत्तं परित्यज्य भरताय राज्यप्रदानं दशरथस्य कृतेऽसम्भवमिवादृश्यत। तथापि दशर-थश्चेदेवमकरिष्यत् तर्हि ध्रुवं तत्फलस्वरूपं जातिजनगृहविद्रोहादिकम-भविष्यत्। [illegible] नासीदविदितम्। अत एव तस्मै

मातुलालययात्रासमये जनकं दशरथमभिवादयितुं गतः तदानीं पुत्रद्वयमपि स्नेहेनालिङ्ग्य शिरस्याघ्राय च विविधोपदेशं कुर्वन्नुवाच—'मातामहे दैवतमिव श्रद्धत्स्व, मातुलं च पितरमिव पूजनीयं मन्यस्व; वेदज्ञब्राह्मणेषु सम्मानपरः स्याः मातुलालये वृथासमययापनवर्जं धर्मशास्त्रनीतिशास्त्रयोः आयुर्वेदधनुर्वेदयोः नृत्यवाद्यगीतशिल्पशास्त्रेषु च पारदर्शी भूत्वा रथगजाश्वपालनेष्वपि प्रवीणः स्याः। अल्पोऽपि समयः व्यर्थं न विनाश्यः सर्वगुणसम्पन्नश्च भूत्वा प्रत्यावर्तनीयम्।'

---

यौवराज्यपदप्रदानवार्तां निशम्य तेन प्रथममुक्तम्—"वयं तु चत्वारो भ्रातरः अतः पितृराज्यस्य चतुर्धा विभाग एव श्रेयः" इति किन्तुजनमतं एतदनुकूलं नासीत।

अस्मिन्समये रामः सम्पूर्ण भारतेऽभूत्सर्वश्रेष्ठोवीरः। पञ्चदशवर्षीयेण तेन परशुरामो हतवीर्यो विहितः; हरधनुर्भङ्गे चाखिलराजन्यवर्गे 'सर्वश्रेष्ठोवीर' इति सम्मान प्राप्तवान्। सप्तविंशतिवर्षेऽधिगतपूर्णयौवनोऽयमनेकदिव्यास्त्रलाभाधिकारी सन् 'अप्रतिद्वन्द्वी योद्धा' इति विख्यातो जातः। यस्य सम्यक् परिचयः तत्परवर्तिजीवने प्राप्यते। एतेन रामराज्याभिषेकार्थं जनमतं एतावत् दृढप्रतिज्ञमासीत् यत् दशरथप्रतिज्ञापालनपक्षे प्रथमान्तरायस्वरूपमुपस्थितम्।

वनगमनेन रामः निरुपायस्य पितुः सत्यपालनार्थं सहायकरः संवृत्तः। पितुः सत्यरक्षार्थं एतावान् स्वार्थत्यागः जगति दुर्लभः।

अनन्तरं भरतशत्रुघ्नौ मातृगणं रामलक्ष्मणौ च यथायोग्यमभिवाद्य केकयराज्यं गन्तुं प्रवृत्तौ। रामलक्ष्मणावपि ब्राह्मणपुरवासिभिः सह क्रोशद्वयं यावत् रथेन ताभ्यां सार्धं जग्मतुः। तदानीं भरतः रथादवरुह्य बद्धाञ्जलिः राममगादीत्—'अलमग्रतो गत्वा; इत एव निवर्ततां भवान्।' रामलक्ष्मणौ भरतशत्रुघ्नौ समालिङ्ग्य महत्या सेनया सार्धमुभावपि प्रयातुमन्वमन्येताम्।

परमरूपवान् वीर्यशाली च रामः सर्वगुणान्वितदशरथेन तुल्य आसीत्। पृथिव्यां स सर्वप्रकारेण अतुलनीयः निरन्तरं प्रशान्तचित्तः विनीतः, विशुद्धात्मा, स्वधर्मपरायणः, विचारशीलः, बुद्धिमान्, प्रियवादी, शिष्टाचारसम्पन्नः, वीर्यवान्, ऋजुस्वभावः, सत्यवादी, धर्मार्थदर्शी चाभूत्। केनापि कृत एकोऽप्युपकारस्तेन न विस्मृतः। अन्यकृता-

---

अत्रैव रामजीवनस्य सर्वश्रेष्ठं माधुर्यं महत्वं च निहितमस्ते। कैकेय्या सह विवाहसमये कृतायाः प्रतिज्ञायाः पूर्त्यर्थमेव रामः वनगमनं स्वीचकार यतः तस्मिन्समयेऽयोध्यायां रामस्योपस्थितौ दशरथस्य पक्षे भरतस्य राज्याभिषेकोऽसम्भवोऽभविष्यत्। रामेच्छाविरुद्धमपि जनविद्रोहः अवश्यंभावी स्यात् तथा अत्यधिकतररक्तपातस्याप्यासीच्छक्यता। अत एव रामः वनगमनार्थं एतावान् त्वरान्वितोऽभूत् यत् दशरथकौसल्ययोरनुरोधेऽपि दिनमप्ययोध्यायां स्थातुं नैच्छत्।

पराधशतमपि तेनोपेक्षितम् । स नीरोगः, विशालवक्षाः, तरुणः, वाग्मी, लोकचरित्रवित् देशकालपात्रज्ञः, अतिरथः, सेनापरिपालनदक्षः, शत्रुसंहारपटुः, धिषणायां बृहस्पतितुल्यः, वीर्ये चेन्द्रसमानोऽभूत् । तमवलोक्य पुरवासिनः प्रजागणाश्च आनन्दिता अजायन्त । पुरनार्यः ललनागणाश्च तद्दर्शनतः आत्मानं धन्यममन्यन्त । राममीदृशं सर्वगुणान्वितं, चरित्रवन्तं अपराजेयंलोकपालसमानमवलोक्य देवी पृथिव्यपि तं स्वकीयमीशितारं कर्तुमभिलाषिणी आसीत् ।

इतः आत्मजं विविधानुपमगुणभूषितमवलोक्य दशरथोऽपि तस्य यौवराज्याभिषेकं कर्तुमत्युत्सुक आसीत् ।

## रामनारदसंवादः

कदाचित् नीलोत्पलदलश्यामके, कौस्तुभभूषितकण्ठे विविधाभरणभूषितसर्वाङ्गे अभ्यन्तःपुरं रत्नमयसिंहासन सुखोपविष्टे सुवासित ताम्बूलचर्वणपरे सेवातत्परसीतया आमोदप्रमोदासक्ते च रामचन्द्रे, देवर्षिनारदः वीणावादनपरः आकाशमार्गेण तत्रैवोपस्थितः । सुविमलकान्ति अकस्मादागतमवलोक्य रामः सपदि सिंहासनादुत्थाय सीतया सार्धं प्रीत्या भक्त्या च सह साष्टांगपातं प्रणम्य सहर्षं नारदमब्रवीत्—

'मुनिश्रेष्ठ ! भवतो दर्शनं अस्मत्सदृशविषयासक्तजनानामतीव दुर्लभम् । पूर्वजन्मार्जितमहत्पुण्यफलस्वरूपं अद्य भवद्दर्शनतः आत्मानं धन्यं मन्ये ! मुनिवर ! संसारिणां कृते सत्सङ्गः काकतालीयवत् अवितर्कितसंभव

एव। अद्य भवन्तमवलोक्य कृतार्थोऽस्मि। कथ्यताम्, कः आदेशो भगवताम्। आज्ञापालनतत्परोऽयं जनः।

भक्तवत्सलश्रीरामचन्द्रस्य सविनयवचनं निशम्य देवर्षिर्नारदः प्रत्युवाच—'हे राम! लोकानुसारिवाक्छटाभिः किमिव मां विमुग्धं करोषि? प्रभो! भवता आत्मनः संसारीति कृत्वा यः परिचयो दत्तः तद्यथार्थमेव; यतः अस्मिञ्जगद्रूपमहागृहे भवानेवैको गृहस्थः। मूलप्रकृतिर्माया भवतो गृहिणी। तस्यामेव भवता ब्रह्मादयः पुत्रगणा उत्पादिताः। त्रिगुणात्मिका माया भवन्तमाश्रित्य निरन्तरं सत्त्वरजस्तमोमयीः प्रजाः प्रसूते। भवान् विष्णुः जानकी च लक्ष्मीः; भवान् शिवः जनकतनया च शिवा; भवान् ब्रह्मा सीता च सरस्वती; सूर्यो भवान् जानकी प्रभारूपा; भवानिन्द्रः सीता च शची।....भवान् लोकसंहारकः रुद्रः सीता च रुद्राणी। प्रभो। किमधिकं ब्रूयाम्? संसारे यत्किमपि स्त्रीवाचकमास्ते तदखिलं भगवती जानकी, यत्किमपि च पुरुषवाचकं दृश्यते तद्भवानेव। अतः हे देव! जगत्त्रयमपि भवद्युगलं विहाय नास्ति किञ्चिदपरम्। भवांश्चिन्मात्रज्योतिःस्वरूपः, भवानन्तर्यामी।....भवत्पादपद्मेभ्यो यैः स्वमनः प्राणाः समर्प्यन्ते त एव क्रमशः विशुद्धज्ञानलाभान्विता भवन्ति। हे प्रभो! त एव केवलं मुक्तिभाजनम्। अहं तु त्वद्भक्तानुभक्तानां तद्भक्तानां च किंकरः। अतः मयि अनुग्रहः कार्यः। निजमायया मामधिकं मुग्धं माकार्षीः।

मम पितात्मभूस्त्वन्नाभिकमलतः समुत्पन्नः । अतोऽहं भवत्पौत्रः । हे राघव! इमं नितान्तपौत्रभक्तं त्रायस्व' (अध्यात्मरामायणे नारदकृत रामस्तुतिसारः) ।

इत्थं स्तुवतो नारदस्य दृष्टिः आनन्दाश्रुभिः अपूर्यत । स रामचन्द्रमसकृत्प्रणम्य पुनरुक्तवान्—'हे रघुनाथ! पित्रा ब्रह्मणाहं भवत्सकाशं प्रेषितः । रावणवधार्थं जगति धर्मराज्यस्थापनार्थं च भवान् पृथिव्यामवतीर्णोऽसि । सम्प्रति राजा दशरथः राज्यरक्षार्थं भवन्तं यौवराज्यपदे अभिषेक्ष्यति । प्रभोः! भवति राज्यपालनव्रतासक्ते रावणवधः न भवेदयमेव सन्देहः । भूभारहरणप्रतिज्ञाबद्ध एव भवान् भूतलमवतीर्णः, भवांस्तु सत्यप्रतिज्ञः सत्यसंकल्पश्च । अतः तादृशसत्यपालनं कर्तव्यम्' ।

देवर्षिनारदवचनं निशम्य श्रीरामः ईषद्विहस्यावोचत्—"हे मुनिवर! अखिलमहं जाने । सर्वमपि मया स्मर्यते या प्रतिज्ञा मया कृता तामवश्यमेव पालयिष्यामि । केवलं समयं प्रतीक्षे । भोगद्वारा राक्षसानां प्रारब्धक्षये जाते एवाहं तादृशबुद्धिप्रद्विनाशद्वारा भूभारहरणं करिष्यामि । अत एवेदं समयसापेक्षम् । रावणविनाशार्थं सत्वरमेवाहं मुनिवेशमाश्रित्य वनमभ्येत्य च चतुर्दशवत्सरपर्यन्त तत्र निवत्स्यामि । दुष्टरावणद्वारा सीतापहरणानन्तरं तदुद्धारच्छलेन पापकर्माणं रावणं सवंशं नाशयिष्यामि" ।

श्रीरामचन्द्रमित्थं निजकार्यसम्पादने दृढप्रतिज्ञं ज्ञात्वा देवर्षि-नारदः आनन्दितेन मनसा तं त्रिवारं प्रदक्षिणीकृत्य साष्टांगं प्रणिपत्य च आकाशमार्गेण प्रस्थितः। नारदमुखात् श्रीरामचन्द्रस्य वाक्यं निशम्य ब्रह्मा परमप्रीतिमागतः।

## दशरथस्याभिलाषः

इतः धर्मात्मा राजादशरथः रामचन्द्रस्य यौवराज्यपदस्थापन-विषये कृतसंकल्पो भूत्वा कुलगुरुवसिष्ठस्य, अमात्यानां, सुहृद्गणस्य च पुरतः स्वाभिलाषं प्रकटयामास। श्रुतदशरथनृपतिप्रस्तावाः सर्वेऽपि 'साधु साधु' इति वदन्तः आनन्दप्रकाशं चक्रुः। पार्थिवेच्छानुसारं रामचन्द्रयौवराज्याभिषेकायोजनं प्रस्तुतम्। दशरथो भूपतिः निजराज्य-स्थितान् अनेकब्राह्मणान्, पुरजनपदवासिनः, पृथिव्यामन्यमान्यनृपतींश्च मन्त्रिगणैः आमन्त्र्य समुपस्थापयामास। किन्तु तेन केकयनृपतिः जनकश्च तदानीमपि नामंत्रितौ। *

---

*अपि दशरथस्य मनसि आसीत्किमपि प्रच्छन्नं भयम्? यद्यासीत्तर्हि किं तस्य कारणम्? भरतस्यानुपस्थितौ तेन रामयौव-राज्यायोजनं कृतमासीत्। भरतस्य मातुलः केकयनृपतिः नाप्यामन्त्रितः नाप्यस्य संवादोऽपि दत्तः। केषुचिद्रामायणेषु (कृत्तिवासप्रभृतिषु) लभ्यते यत् दशरथः यौवराज्यप्रस्तावमुत्थाप्य राममब्रवीत—"त्वयि अभिषिक्ते मम जीवनं सफलमिति मन्ये। भरतस्याभिलाषः मया सम्यङ्

 

राजसभायां सकलेषूपस्थितेषु राजा दशरथः विनीतकमनीय-मधुरेण दुन्दुभिगम्भीरेण च स्वरेण सर्वेषां प्रीतिदायकं वचनमब्रवीत्—"मयापि पूर्वपुरुषाचरितपथमनुसरता नित्यं यथाशक्तिप्रजापालनकार्यं कुर्वता स्वशरीरं जीर्णतां नीतम्। इदानीमेतेषां समागतब्राह्मण-श्रेष्ठानां पुरजनपदवासिनां चानुमत्या रामचन्द्रं प्रजाहितसाधने नियुज्यैतस्मै जराजीर्णशरीराय विश्रामं दातुमिच्छामि। इन्द्रतुल्यवीर्य-सम्पन्नः परपुरविजयी पुत्रो राम ममाखिलगुणैरलङ्कृतः अनेकविषयेषु मदपेक्षयापि निपुणतरः। इममेव धर्मात्मानं पुरुषश्रेष्ठं रामं यौवराज्य-पदेऽभिषेक्तुमीहे। ममायं प्रस्तावः साधुर्हितकरश्चेति भवतां मतं चेत्तर्हि अनुमन्यध्वमस्मास्मिन्विषये। यदि च एतस्मादन्यः कोऽपिप्रस्तावः श्रेयान्सर्वमङ्गलकारकश्चेद्भवद्भिश्चिन्तितः तमपि सूचयन्तु भवन्तः। यतः निरपेक्षतटस्थानां मतमेवोत्कृष्टम्।

---

न ज्ञायते स तु कनिष्ठः, ज्येष्ठे विद्यमाने कनिष्ठाय राज्यप्रदानं नोप-युक्तमिति मन्ये। उचितमपि नास्त्येतत्। त्वयाभिषेकविधौ न काप्या-पत्तिरुत्थापनीया। विविधस्थानेषु तव कति शत्रवः सन्ति के शत्रवः कानि च मित्राणि इति ज्ञातुमपि दुष्करम्। अतः मयि जीवत्येव त्वया राजदण्डः राजछत्रं च स्वीकरणीये। अस्मिन्कार्ये न कापि आपत्ति-र्विधेया' इत्यादि।

भरतस्यानुपस्थितावेव रामस्य यौवराज्याभिषेकार्थं दशरथः इत्थं त्वरान्वितो जातः यत् एतादृशानुष्ठानविषये भरतस्यापि प्रवृत्तिर्न दत्ता

श्रुतदशरथविवेकगर्भवचनाः सर्वेऽपि सन्तुष्टा जाताः। राजसभायां गुञ्जनध्वनिरिवोत्थितः। ये च सभाया बहिरासन् तेषामपि हर्षकोलाहलेन पृथ्वी अकम्पतेव !

नृपतिगणाः ब्राह्मणाः सेनाध्यक्षाः पौरजानपदाश्च सर्वेऽपि रहसि मन्त्रयित्वा एकविचाराः सन्तः जगदुः—'महाराज ! भवांस्तु वृद्धः; अत एव रामः यौवराज्येऽभिषेक्तव्यः। महाबलो रघुवीरः महागजमारुह्य राजच्छत्रभूषितः गच्छतु—एतदवलोकनार्थं वयमतीव बुभुक्षिताः। यतः रामः स्वकीयामानुषगुणैः महेन्द्रतुल्यः, सत्यपरायणः, धर्मार्थनिदानस्वरूपः, धर्मज्ञः, सत्यसन्धः, सच्चरित्रः, क्षमाशीलः, जितेन्द्रियः, कृतज्ञः प्रियवादी च। स तु कस्मैचनापि न द्रुह्यति; स पुनः बहुश्रुतः वृद्धब्राह्मणानामुपासनापरस्तिष्ठति इति कृत्वा तस्य तेजःकीर्तियशांसि क्रमशः पृथिव्यां वर्धमानानि दृश्यन्ते। स देवासुरमानवानां सर्वेष्वपि अस्त्रेषु पारदृश्वा, अधीतवेदवेदाङ्गः। सोऽति-

---

नापि स मातुलालयादानीतः इत्यादिघटनाः दशरथस्यान्तरिकं भयमेव सूचयन्ति। पुनश्चानेकरामायणेषु इदमपि लभ्यते यत् रामस्यापि एकच्छत्रसम्राट् भवितुं नासीदभिलाषा। तेनोक्तमासीत्—'पितृराज्ये चतुर्णामपि भ्रातॄणां समानोऽधिकारः' इत्यादि।

केषामपि रामायणानां पुराणानां च मतानुसारं अयोध्यायां दशरथनृपे रामचन्द्रयौवराज्याभिषेकार्थं प्रस्तुते भरतः अयोध्यातः एककोशान्तरस्थिते नन्दिग्रामे आसीत् (न तु केकयराजमातुलगृहे)।

धर्मात्मा, वृद्धसेवी, महाधनुर्धरः विशेषतश्चेन्द्रियविषयभोगेषु अनुन्मत्तः। हे रघुकुलपते! अस्मद्भाग्यक्रमादेवाय तनयः तव प्रजापालनात्मक-कल्याणमार्गस्य पथिकः संवृतः। किमपरम्? देवदानवगन्धर्वोरग-मनुष्याणां सर्वेऽपि 'अयं सर्वजनविदितः श्रीरामः चिरं जीवतु' इति कामयन्ते। सर्वेऽपि पुरराष्ट्रजनपदवासिनः अन्तरङ्गबहिरङ्गा वृद्धास्त-रुणीगणाश्च समाहितचित्ताः सन्तः तस्य यौवराज्याभिषेककामनया प्रति-दिनं प्रातः सायं च देवादीन् पूजयन्ति। अतः हे देव! देवतुल्यस्य सर्व-लोकहितनिरतस्य उदारगुणान्वितस्येन्दीवरश्यामलस्य निखिलशत्रुनाश-कस्य निजात्मजरामस्य सत्वरमेव यौवराज्याभिषेकायोजनं क्रियताम्।' इत्थं बद्धाञ्जलिपुटान् प्रार्थनापरान् जनगणान् नृपवरो दशरथोऽपि अञ्जलिवन्दनाभिः सत्कृत्य सर्वेषामपि पुरतः वसिष्ठवामदेवप्रभृति-ब्राह्मणान् जगाद—'अयमेव चैत्रमासः अतिकमनीयः। प्रायः अस्मिन्समये सर्वेऽपि पुष्पवृक्षाः कुसुमिता भवन्ति। विशेषतयाऽयं मासः पुण्यकर्मानुष्ठानार्थमतिप्रशस्तः; अतः अस्मिन्नेव समये रामस्य यौवराज्याभिषेकः उचितः। सर्वमपि योग्यमायोजनं कुर्वन्तु भवन्तः।'

---

रामचन्द्रस्य यौवराज्यघटनां केन्द्रीकृत्य अयोध्यायां यस्याः जटिल-राजनैतिकपरिस्थिते रुत्पत्तिरभूत् तस्याः सम्यक् परिचयः एतादृश-सुदूरातीत विच्छिन्नघटना समूहेषु प्राप्तुं न शक्यः। तत्कालीनघूमाय-मानराजनैतिकावस्थयैव रामचन्द्रस्य बनवासः, दशरथस्याकालमृत्युः

दशरथवचनं निशम्य राजसभा आनन्दकोलाहलपूर्णा जाता। किञ्चित्प्रशान्तेऽस्मिन्कोलाहले दशरथः पुरोहितौ पुनरवादीत्—'महाभागद्वय! अभिषेकार्थं सकलोपकरणसंग्रहाय अद्यैवादेशो देयः।'

नृपतिवचनश्रवणानन्तरं वसिष्ठः सचिवानादिदेश—'श्वः प्रभात एव भवन्तः नृपतेरग्निहोत्रगृहे स्वर्णप्रभृतिधातवः, विविधरत्नानि, आवश्यकपूजोपकरणानि, सर्वौषधयः, बहूनि श्वेतमाल्यानि, घृतमधुलाजा आच्छिन्नवस्त्राणि, रथाः समग्राणि आयुधानि, चतुरङ्गसैन्यम्, शुभलक्षणः चतुर्दन्तः एकः गजः, चामरद्वयम्, ध्वजः पाण्डुरवर्णं छत्रम्, शतं अग्नितुल्यप्रभाशालिनः सुवर्णकुम्भाः, सुवर्णशृङ्गभूषितः एको वृषः, अखण्डव्याघ्रचर्मेत्यादि सर्वाण्यपि आवश्यक द्रव्याणि यथास्थानं स्थाप-

---

भरतस्य नन्दीग्रामे राजधानीस्थापनं इत्यादिघटनामाध्यमेन निर्धूमतथ्यवह्निप्रकाशो नभसि जायते।

वाल्मीकिरामायणवर्णिताः दशरथनृपतेः तत्कालीनमानसिकावस्था तस्योक्तयश्च विचारणीयाः सन्ति। दशरथः रामं पुनराहूयोक्तवान्—'मनुष्यमानसमस्थिरं खलु। अतः अस्मन्मनोविचारपरिवर्तनात् पूर्वमेव तव यौवराज्याभिषेको भवतु। —श्वः एव पुष्यनक्षत्रयोगे त्वां यौवराज्येऽभिषेक्ष्यामि। ....तव बन्धुवर्गः अप्रमत्तचित्तः सन् सर्वतोभावेन त्वद्रक्षणपरो भवतु। एतादृशकार्येषु अनेकेऽन्तरायाः समुद्भवन्ति।....यद्यपि भरतस्तव कनिष्ठो भ्राता तथापि तस्यानुपस्थि-

न्तु। अन्तःपुरं सकलनगरद्वाराणि च चन्दनचर्चितानि, पत्रपुष्प-माल्य सुशोभितानि सुगन्धिधूपसुवासितानि क्रियन्ताम्। सम्यक् संस्कृतं प्रचुरमन्न क्षीरदधि-आमिक्षा प्रभृतीनि प्रस्तुतानि भवन्तु। यतः श्वः प्रभाते लक्षसंख्याका ब्राह्मणाः प्रचुरदक्षिणाभिः पर्याप्ताहारैश्च परितृप्ताः कर्तव्याः। श्वः सूर्योदय एव स्वस्तिवाचनं करिष्यते। अतः अद्यैव ब्राह्मणाः निमन्त्रितव्याः। तदर्थं आसनादिकं च प्रस्तुत स्यात्। राजपथा जलसिक्ता भवन्तु। पताकाश्च उत्थाप्यन्ताम्। अद्यैव गायका-नर्तकीगणाश्च वस्त्रालंकारादिभिः सुशोभिताः सन्तः पुरस्य द्वितीयकक्षे-ऽवतिष्ठन्तु। सुसज्जिताः योद्धारः धृतदीर्घासिचर्माणः अन्तःपुरांगणे प्रविशन्तु। अयोध्यायां सकलदेवमन्दिरेषु चैत्यादिकेषु च दक्षिणाभिः सार्धं विविधपूजानुष्ठानभोगादीनां व्यवस्था जायताम्।'

अनन्तरं दशरथादेशेन सुमन्त्रः रामचन्द्रं राजसभायामानीतवान्। सभायाः प्राक्प्रत्यगुदग्वाक्षु दिक्षु देशीया आर्यनृपा म्लेच्छजातीयराज-

---

तावेव तवाभिषेकः उचितः इति मन्ये।....आगामिन्येव दिने भवतु तवाभिषेकः — माऽत्र विमतो भूः इत्यादि —

कैकेय्या सह विवाहात्पूर्वमपुत्रको राजा दशरथः केकयनृपतेः पुरतः प्रतिज्ञाबद्ध आसीत् यत्कैकेयीपुत्रस्यैव यौवराज्याभिषेको भविते-ति। दशरथस्येयं प्रतिज्ञा कैकेयीभरतरामचन्द्रैः सर्वैरपि ज्ञाताभूत्। तथापि अनेकालंघनीयहेतुभिः दशरथः स्वप्रतिज्ञापालनेऽसमर्थ आसीत्।

गणाश्च उपस्थिता आसन्। रामः रथादवरुह्य बद्धाञ्जलिः पितुः समीपं ययौ स्वनामोच्चारणपूर्वकं च साष्टांगपादं तच्चरणयोः प्रणतोऽभूत्। दशरथः सपुलकं तमालिङ्ग्य पार्श्वस्थे मणिकाञ्चनभूषिते सिंहासने उपवेश्य च सावेगं सगद्गदस्वरं चागादीत्—'त्वं ममज्येष्ठमहिष्याः ज्येष्ठपुत्रः सर्वपुत्रेभ्यश्चाधिकगुणसम्पन्नः। मम चातीव प्रियतमः। प्रजागणा अपि त्वद्गुणमुग्धा अनुरक्ताश्च। त्वया पुष्यनक्षत्रयोगे यौवराज्याभिषेकः स्वीक्रियताम्। पुत्र! त्वं तु स्वभावत एव सर्वगुणमण्डितः तथापि अहं स्नेहवशतः किमपि तव हितकरमुपदिशामि। त्वया अधिकविनीतेन जितेन्द्रियेण च भवितव्यम्। कामक्रोधजनितव्यसनानि परित्याज्यानि। दूतैः वर्तमानप्रवृत्त्यनुसन्धानपूर्वकं अमात्यानां प्रजावर्गस्य चानुरञ्जनं कर्तव्यम् संयतचित्तेन धनागाररत्नागारशस्त्रागाराणि पूर्णानि विधाय सर्वेषामधिकतरसुखविधानेन सानन्दं पृथिवीपालनं कर्तव्यम्।'

नृपतेः वचनं निशम्य रामचन्द्रस्य मङ्गलाकांक्षी बन्धुगणः सपदि इमं सुखसंवादं कौसल्यायै निवेदितवान्। सापि तेभ्यः सुवर्णरत्नानि पयस्विनीर्दातुं प्रतिशुश्राव। इतश्च श्रीरामः दशरथं प्रणम्य जनगणैश्च पूजितः सन् रथमारुह्य निजनिवासस्थानं प्रतिनिवृत्तः। पौरजना अपि रामयौवराज्यसंवादेन आनन्दितमानसा गृहं प्रति निवृत्ताः, एतच्छुभकार्यसिद्ध्यर्थं चेष्टदेवताचिन्तनरता बभूवुः।

## यौवराज्ययोजनम्

वाल्मीकिरामायणे एतदपि उपलभ्यते—पौरवर्गे प्रतिनिवृत्ते दशरथः पुनरपि मन्त्रिभिः सह परामर्शपरो भूत्वा स्थिरीचकार यत् आगामिदिवसे पुष्यनक्षत्रयोगे रामस्य यौवराज्याभिषेकः समुचितः। इत्थं तादृशायोजनमुपदिश्य अन्तःपुरं च गत्वा पुनः राममानेतुं सुमन्त्रमादिदेश। त्वरितमागत्य पितरं प्रति प्रणतं बद्धाञ्जलिपुटं पुरतः स्थितं च राममालिङ्ग्य दशरथोऽब्रवीत्— 'राम! अहं नानाविद्यार्जनं विषयभोगं च विधाय संप्रति वृद्धः संवृत्तः। दीर्घायुः प्राप्य अनेकभूरिदक्षिणयज्ञानुष्ठानं च कृतवान्। त्वत्सदृशं अतुलनीयमनुपमं च पुत्रमधिगत्य देवर्षिब्राह्मणपितृवर्गस्य ऋणान्मुक्तोजातः। तव यौवराज्याभिषेकवर्जं न किमपि ममान्यत्कार्यम्। संप्रति त्वमेव राजा स्याः। इत्येव प्रजावर्गस्याभिलाषः।'

## दशरथस्य मानसिकी अवस्था

'अद्य मया अनेकानि अशुभस्वप्नानि दृष्टानि यथा— आकाशात् स महाशब्दः उल्कापातो जातः। दैवज्ञैश्च स्पष्टीकृतमेतत्तु राष्ट्रदुर्लक्षणं नृपस्य महाविपदं मृत्युं च सूचयतीति। विशेषतः मनुष्यमानसमस्थिरम्। अथः अस्मन्मनोविचारपरिवर्तनात्पूर्वमेव त्वं यौवराज्याभिषिक्तो भव। आगामिन्येव दिवसे पुष्यनक्षत्रयोगे त्वां यौवराज्याभिषिक्तं विधास्यामि। अस्मन्मानसमस्मिन्विषये मां त्वरयति। त्वयाऽद्य रजन्यां

सीतया सह सोपवासं संयतचित्तेन कुशशय्यायां स्वपितव्यम्। तव बन्धुवर्गः अप्रमत्तचित्तः सर्वतो भावेन त्वद्रक्षाप्रसक्तो भवतु। यतः एतादृशकार्येषु अनेकान्तरायाः समुद्भवन्ति। यद्यपि भरतः तव कनिष्ठो भ्राता, जितेन्द्रियः, ज्येष्ठानुवर्ती दयावांश्च तथापि तस्यानुपस्थितावेव तव यौवराज्याभिषेक उचित इति मन्ये। यतः मानवमानसमत्यन्तमस्थिरमिति मम दृढो विश्वासः—धर्मात्मनामभ्यान्तरं क्रोधद्वेषपूर्णं भवितुं शक्यते। अत एव त्वं श्वः एव यौवराज्याभिषिक्तो भव।

## कौसल्यादेव्या आनन्दः

अवनतशिरसा पितरं प्रणम्य मौनसम्मतिं च ज्ञापयित्वा रामः मातृदर्शनार्थं गतः। क्षौमवसनपरिधाना कौसल्या तदा पुत्रकल्याणकामनया देवालये आराधनपरा आसीत्। रामः मातरमभिवाद्य पित्रादेशज्ञापनपूर्वकं अभिषेकपूर्वदिने यत्किञ्चिच्छुभकार्यमावश्यकमासीत तस्य व्यवस्था कर्तव्येत्युपदिदेश। कौसल्या पुत्रं शिरसि समाघ्राय सानन्दगद्गदस्वरमगादीत्—'वत्स! राम! चिरंजीवी भव। शत्रवश्च ते निहता भवन्तु। राज्यलक्ष्मीसम्पन्नस्त्वं मम सुमित्रादेव्याश्च बान्धवगणं प्रमुदितं विधेहि।' देवी कौसल्या इत्थं रामायानेकाशीर्वचनप्रदानपूर्वकं पुत्रकल्याणार्थं देवतार्चनप्रसिताऽभूत्।

रघुवीरो रामः मातुराशीर्वचनस्वीकारपूर्वकं सानन्दं निजावासमाससाद—अस्मिन्नेव समये मार्गे लक्ष्मणमवलोक्य तं गाढमालिङ्ग्य

चोक्तवान्—'जानासि किम् ? श्वोऽहं यौवराज्याभिषिक्तो भवेयम्। राज्यश्रीस्त्वामप्याश्रिता भवेत्। अस्मिन् राजपरिचालनकार्ये त्वमपि मम सहायको भवेः।' इत्थं लक्ष्मणमुक्त्वा रामः स्वावासं निवर्त्य इमं शुभवृत्तान्तं सीतादेवीमपि ज्ञापयामास।

इतश्च राजपुरोहितः श्रीमान् वसिष्ठमुनिः राज्याभिषेकस्य सर्व-मप्यायोजनं विधाय दशरथनृपतेराज्ञया रामाभिषेकपूर्वकृत्यादिकोप-देशार्थं रथमारुह्य रामनिवासमुपस्थितः। गुरोरागमनं निशम्य रामः त्वरितं कृताञ्जलिपुटः तं प्रत्युद्गम्य परमभक्त्या मुनिवरं प्रणनाम। जानक्यपि करकलितसुवर्णजलपात्रा तत्रोपस्थिता। ततश्च सीतारामौ वसिष्ठमुनिं रत्नासने समुपवेश्य तत्पादप्रक्षालनं चाकुरुताम्। पादोदकं शिरसि गृहीत्वाऽब्रूताम्—'भवच्चरणोदकं शिरसिधारयित्वा धन्यौ स्वः'।

## वसिष्ठरामसंवादः

रामस्येदृश सविनयवचन निशम्य वसिष्ठः सस्मित उक्तवान्—'तव श्रीचरणसम्भूततीर्थेन ममपिता ब्रह्मापि विनष्टाखिलाशुभराशिः जायते ! सम्प्रति यत्किमपि त्वयोच्यते तत्केवलं लोकशिक्षार्थंगुरुं प्रति कीदृशं व्यवहर्तव्यमिति जगद्वासिनां पुरतः प्रदर्शयितुमेव। त्वं देवकार्यसिद्ध्यर्थं भक्तगणरक्षार्थं च पापकर्मणां विनाशाय पृथिव्या-मवतीर्णोऽसि। सकलमपि रहस्यं नोद्घारयिष्यामि। हे रघुनन्दन !

मायाबलेन त्वमित्थं व्यवहारपर: अतोऽहमपि 'त्वं शिष्य: अहं च गुरु:' इति दृष्ट्या व्यवहरामि। वस्तुत: हे देव! त्वमेव सर्वेषामपि गुरु:। त्रिजगतां त्वमेव पितामह:। त्वमेवान्तर्यामी लोकयात्रा-निर्वाहकश्च। पौरोहित्यकार्यं निन्दनीयं जीविकानिर्वाहार्थमसदु-पायस्वरूपं च। 'साक्षात् परमात्मा विष्णु: इक्ष्वाकुकुले रामरूपेणाव-तरिष्यति' इति ब्रह्मणापि उक्तपूर्वम्। राम! त्वद्गुरुप्रापितसौभाग्या-शयैव गर्हितमपि पौरोहित्यकार्यं मयाङ्गीकृतम। हे राम! इदानीं स मम मनोरथ: पूर्णतां गत:। या माया एकाकिनी सकलप्राणिन: मोहयति सैव त्वदधीना! अत: हेरघुनन्दन! येन सा माया अस्मानपि न मोहयेत् तदेव त्वया कर्तव्यम्। यदि गुरुं प्रति किमपि कर्तव्यमास्ते तर्हि अस्मत्कल्याणार्थं तदेव क्रियताम्। प्रसङ्गत: मयोक्तमिदं नेदं रहस्यमन्यत्र प्रकाशनीयम्।

हे राम! इदानीं दशरथेच्छामनुसृत्यैवाहं त्वत्समीपमुपस्थित:। आगामिनि दिवसे राजा तव यौवराज्याभिषेकं विधास्यति। अद्य त्वं यथाविधि सीतया सहोपोष्य जितेन्द्रिय: स्थण्डिलशायी च भवे:। राजपुरोहित: इत्थमभिधाय प्रयात:।

## कुब्जामन्थरासंवाद:।

सन्ध्यासमये अयोध्यानगरी उत्सवमया समलङ्कृता चाजनि। धूपवासित: सुरभिकुसुमालङ्कृतश्च प्रशस्तराजपथ: नटनर्तकानां च

नृत्यगीतादिभिः मुखरितः। चतुष्पथाः अट्टालिकाः विपणिसभागृह-पुरवासिगणभवनानि चैत्यवृक्षोद्यानानि च विविधवर्णध्वजपताकाभिश्च शोभितानि। सुसज्जिताः सैनिकाः चत्वरेषु सभासु चोपस्थिताः। ब्राह्मणाश्च मोदकमालहस्ताः आनन्दकोलाहलतत्पराः। विभिन्नदेवालयाः मधुरमाङ्गलिकवाद्यमुखरिताः। सामवेदिब्राह्मणानां सामगानध्वनिः हस्त्यश्वधेनु वृषाणां शब्दैः पक्षिणां कलरवैश्च मिलितः नगरवासिगणानामान्तरं हर्षपूरितमकरोत्।

एतादृशमानन्दकोलाहलं निशम्य कैकेयीमहिषीदासी कुब्जा मन्थरा चन्द्रतुल्यकमनीयप्रासादमारूढा उत्सवप्रमोदमिममवलोक्य अवाक् सविस्मया च सती रामचन्द्रधात्रीं पृष्टवती—'कः खलु हेतुः प्रजानामीदृगानन्दस्य? किमर्थं च नगरमिदमित्थ सुसज्जितम? धात्री तामवोचत् 'श्वः रामचन्द्रस्य राज्याभिषेको भविता यदर्थमिदमायोजनम्।'

मन्थरा—'रामस्य राज्याभिषेकः? कीदृशः खल्वेषः!'

धात्री—'राजा वृद्धावस्थां प्राप्तः। अतः रामचंद्राय राज्यभारं समर्प्य स वनं यास्यति।'

मन्थरा किञ्चिदप्यन्यदनुक्त्वा प्रासादशिखरात्त्वरयावरुह्य सद्यः कैकेयीमहिषीशयनप्रासादमगात्। विशाललोचना कैकेयी तदानीं सुवर्णपर्यङ्के प्रसुप्तासीत्। कुब्जामन्थरा तच्छरीरे दत्तहस्ता मुखभङ्ग-योक्तवती—'मत्प्रभामिनि मुग्धे! त्वं तु निश्चिन्तमनसा इह स्वपिषि!

तवोपरि महाविपदुपस्थिता — इति न जानसि किम् ? न खलु त्वं नृपतेः प्रिया। तस्य प्रियतमा महिषी कौसल्या। नृपानुग्रहेण श्वः किल रामस्य राज्याभिषेको भविता। शृणोषि न वा ?'

प्रियभाषिणी कैकेयी तत्क्षणमेव शयनादुत्थाय अभिषेकसंवादेन विशेषतः प्रमुदिता सति स्वकीयं सुवर्णरत्नखचितदिव्यनूपुरं मन्थरायै समर्प्य सगद्गदकण्ठमगादीत्—'त्वया तु अतीव सुखदसंवादः श्राबितः। किमन्यत्तवोपहारी कुर्याम् ? रामः अस्माकं भरतादपि प्रियतरः। सर्वदापि सोऽस्मात्प्रियवादी—कदापि नाप्रियवचनपरः। कौसल्यापि मां समभावेनैव पश्यति। रामः सर्वदा नानाभावैरस्मत्सेवातत्परः। रामः सर्वगुणान्वितः इति कृत्वा तस्याभिषेकेणाहं विशेषतः प्रमुदितास्मि।'

एतन्निशम्य कुब्जा मन्थरा तमलङ्कारं दूरं विक्षिप्य चक्षुर्भ्यामश्रूणि पातयन्ती जगाद—'विपद्ग्रस्तापि त्वमानन्दिता भवसि। स्वामिनि ! श्रूयताम् मद्वचनम्। यथार्थमेव तवोपरि महती विपदापतितास्ते। राजा धर्मव्याजेन केवलमधुरवचनैस्त्वां तोषयन् राजजननीकौसल्याप्रियमेव कर्तुमभिलषति। अत एव तेन प्रथमत एव शत्रुघ्नेन सार्धं भरतः अन्यत्र प्रेषितः। अस्मिन्सुयोगे च रामाय राज्यप्रदानं कृत्वा कौसल्याप्रियं कर्तुमीहते। एतेन सुमित्रापि लाभान्विता स्यात्। लक्ष्मणस्तु रामानुगामी, सोऽपि राज्यमुपभोक्ष्यति; भरतश्च रामस्य सेवकः नगरान्निर्वासितः निहतो वा स्यात्। कौसल्या राजमाता त्वं च तस्याः दासी !'

मन्थरावचनैः किञ्चिद्विचलिता कैकेयी प्रत्युवाच—'कुतः ? रामेण तु कदापि अस्मदप्रियं नाचरितम्। सः पुनः पराक्रमी, धर्मज्ञः गुणवान्, सत्यवादी, कृतज्ञः, शान्तः शुद्धस्वभावश्च। ज्येष्ठपुत्रस्यैव यौवराज्याधिकारो विद्यते। रामो राजा भूत्वा सर्वा अप्यस्मान् मातृभावेन पालयिष्यति। राज्येऽधिकृतः स कदापि भरतानिष्टं न विधास्यति। स तु भरतं प्राणेभ्योऽपि प्रियतरं मन्यते। "रामे वा भरते वाहं विशेषं नोपलक्षये। तस्मात्तुष्टास्मि यद्राजा रामं राज्येऽभिषेक्ष्यति" (७-३५ वा. रा.)

मन्थरा क्रोधेन दुःखेन च स्वकेशानाकर्षन्ती स्वशिरस्ताडयन्ती रुदन्ती च जगाद—'त्वं बालिशतया स्वकीयामवस्थां न जानासि। भरतः किमर्थं त्वद्गर्भप्रसूतः ? तदर्थमेवाहं दूये! पूर्वं तु त्वमतीव गर्विताऽभूः। इदानीं सपत्नी तत्प्रतिशोधं निर्वाहयेत्। देवि! तवमङ्गलकारणादेवाहं ब्रवीमि श्रूयताम्। अद्यैव रामराज्याभिषेकमवरुन्धि। भरतमानाय्य तं शासितारं विधेहि; ततः रामं च वनं प्रेषय। राज्ञि! अयमेव केवलमेको योगः येन भरतप्राणरक्षासम्भवः त्वं च सुखिनी ऐश्वर्यशालिनी च स्याः।'

कुब्जावचनेन क्रुद्धा कैकेयी दीर्घंनिःश्वासपरोक्तवती—'अद्यैवाहं रामं वनं प्रेषयिष्यामि भरतं च राजानं विधास्यामि। परमुच्यतां कथमेतदखिलं शक्यं स्यात् ?'

मन्थरयोक्तम् — 'शुभानने ! एकदा त्वयोक्तमासीत्। पुरा देवासुरयुद्धे राजा दशरथः इन्द्रसहायार्थमगात्। त्वमपि तेन सार्धं गतवती। धनुर्धरं राजानं मायाविराक्षसैः सह युद्धे आहतं मूर्छितं च रणस्थलादावासमानीय शल्योद्धारपूर्वकं सेवासुश्रूषाभिस्त्वया तत्प्राणरक्षा कृता। तेन च प्रसन्नेन राज्ञा तुभ्यं वरद्वयं दत्तम्। तदानीमेव तद्वरद्वयं त्वया न गृहीत्वा अभिहितम्—'भविष्यति यथाप्रयोजनं तदादास्यामि। अद्य त्वया तौ वरौ नृपति समीपं प्रार्थनीयौ। एकेन वरेण रामस्य चतुर्दशवर्षपर्यन्तं वनवासः अपरेण च भरताभिषेक इति। शीघ्रं त्वया क्रोधागारं प्राप्य परित्यक्तसर्वाभरणया साभिमानया भूतले विलुण्ठन्त्या च स्थातव्यम्। यावत् श्रुतत्वदभ्यर्थनो राजा प्रतिज्ञाबद्धो न भवेत् तावत् त्वया मौनमङ्गीकर्तव्यम्। तन्मुखोपरि दृष्टिरपि न देया। स कदाचित् मणिमुक्तादिकं धनसम्पदं वा दातुमुद्यतो भवेत् किन्तु त्वया न किमप्युररीकर्तव्यम्। तस्य पूर्वोक्तां प्रतिश्रुतिं श्रावयित्वा तं प्रतिज्ञाबद्धं विधेहि। अनन्तरं वरद्वयप्रार्थनैकमात्र उपायः। बुद्धिदोषात्त्वयाचेदयं सुयोगो हापितः तर्हि जीवनपर्यन्तं सपत्नीदासीभूय दुःखानुभवं करिष्यसि !

मन्थरामन्त्रणया प्रमुदिता कैकेयी प्रोक्तवती—'कुब्जे ! त्रिलोक्यां त्वत्सदृशी धीमती अस्मद्धिताकांक्षिणी च न कापि अपरा विद्यते। भरते राज्ञि जाते त्वां विशेषेण स्वर्णालङ्कारपुरस्कृतां विधाय शतं ग्रामानुपहारी करिष्यामि।'

अनन्तरं कैकेयी कुब्जोपदेशानुसारं क्रोधागारं प्रविश्य शरीराभरणादि अवतार्य चतुर्दिक्षु विकीर्णवती। मलिनवसना क्रन्दन्ती च भूल्लुण्ठनपरा तस्थौ।

## दशरथस्य मनोविचारपरिवर्तनम्

इतः राजा दशरथः राममङ्गलकार्यार्थं मन्त्रिगणाय ब्राह्मणवर्गेभ्यश्च दत्तोचितनिर्देशः प्रियतमपत्न्यै एतत्संवादज्ञापनार्थं कैकेयीवासगृहं गतः। शयनागारे कैकेयीमनवलोक्य विषण्णमना कामपि परिचारिकामपृच्छत्।'

सा भीतभीतेवाब्रवीत्—'अतिकुपिता क्रोधागारं प्रविष्टा।'

सन्त्रस्तो नरपतिः क्रोधागारं गत्वा कैकेयीं भूलुण्ठनपरां रुदन्तीमवलोकितवान्। दशरथः कैकेयीगात्रं शनैः शनैः हस्तेन परामृशन् तामुत्थाप्य चागादीत्—'देवी। किमर्थं भूलुण्ठनपरासि? मां नालपसीत्यतीव दुःखितोऽहम्। उच्यतां केन तवानिष्टमाचरितम्। स पुरुषो वास्तु नारी वा एतत्क्षणमेव तं दण्डयिष्यामि। त्वमस्मद्धृदयं जानासि। अहं तु त्वच्चरणयोर्दासः। इत्थं परिहितमलिनवसना भूतललुण्ठिता च किमर्थं मां पीडयसि? कथय प्रिये! कस्मै निर्धनाय धनं देयम्? को वा धनवान् निर्धनो विधेयः; को वा वध्यः वधार्हो वा मोक्तव्यः? त्वं मम प्रियतमा; मम प्राणास्तव हस्ते समर्पिताः। कमललोचनः रामः मम प्राणेभ्योऽपि प्रियतरः तस्यैव शपथं कृत्वा प्रतिश्रृणोमि यदेवोच्यते त्वया तदेव विधास्यामि। यदेवेहते तदेव दास्यामि।

## दशरथप्रतिज्ञा

दशरथशपथं निशम्य कैकेयी देवगणानुद्दिश्योक्तवती—'हे देवगणाः! शृण्वन्तु भवन्तः! अयं सत्यसन्धः, सत्यवादी, धर्मज्ञः, पवित्रस्वभावः, महातेजस्वी, महीपतिः दशरथः अस्मदभिलषितवरदानोद्यतोजातः।' ततः शनैः-शनैः चक्षुषी संमृज्य क्रन्दनस्वरेण राजानमुक्तवती— 'या प्रतिज्ञा क्रियते त्वया तस्याः पालनमुचितम्। युवावस्थायां देवासुरसंग्रामे मयाऽनेककष्टैस्तव प्राणरक्षा कृता। त्वयापि संतुष्टेन वरद्वयं दातुं प्रतिश्रुतम्। किन्तु तदानीं मया तद्वरद्वयं न गृहीतम्। अद्योभावपि प्रार्थयामि। श्रूयताम्, प्रथमोवरस्तावत् एतैरेव सकलाभिषेकोपकरणैः मम प्रियपुत्रः भरतः यौवराज्येऽभिषिक्तो भवतु। द्वितीयवरेण रामः अविलम्बेन वनं प्रयातु जटावल्कलधारी च भूत्वा चतुर्दशवर्षपर्यन्तं वनवासं करोतु। रामः श्वः प्रभाव एव वनं गच्छतु। अत्र यदि बिन्दुमात्रमपि अन्यथा भवेत्तर्हि त्वत्पुरत एवाहं प्राणांस्त्यक्ष्यामि। इदमेव वरद्वयं मया प्रार्थितम्। इदानीं त्वं निजप्रतिज्ञापालनं विधेहि।'

कैकेय्याः दारुणवचनश्रवणेन दशरथः वज्राहत इव पतितः मूर्च्छितश्च। किञ्चिदाश्वास्य तेन चिन्तितम्। अपि मया दिवा स्वप्नो दृश्यते? दृष्टिं संमृज्य दीर्घनिःश्वासपरः पुरतः व्याघ्रीमिव कैकेयीमवलोक्योक्तवान्—'दुष्टे! त्वं मम प्राणघातकमीदृशं वाक्यं किमिवोच्चार-

यसि? रामेण किं तवापराद्धम्? त्वयैव रामस्य कीदृशी प्रशंसा कृतासीत्। उक्तम्—'रामः मां (कैकेयी) कौसल्यां च समानदृष्ट्यैवावलोकयति'। इदानीं विपरीतं किमिव भाषसे? स तु कुमारः बालकः दारुणारण्येऽएकाकी कथमिव निवसेत्? सर्वेऽपि रामगुणलुब्धाः; ततः केनापराधेनेमं प्रियपुत्रमरण्ये त्यक्ष्यामि? कैकेयि! अहं वृद्धो जातः; अस्मिन्नेव शेषे वयसि मां मा मारय। मयि दयालुर्भव। इदं वरद्वयं त्यक्त्वा यत्किमपीहसे—इमां ससागरां महीमपी तुभ्यं प्रदास्यामि। मामेतादृशघोराधर्मलिप्तं मा कार्षीः। अस्मत्प्राणरक्षापरा भव।' इति व्याहृत्य राजा दशरथः रुदन् कैकेयीचरणयोः पपात।

तदानीं कैकेयी आरक्तनयना कठोरवचनमुक्तवती—'राजेन्द्र! तव कोऽयं मतिभ्रमः? या प्रतिज्ञा क्रियते तद्विपरीतं किमर्थं भाषसे? यदि स्वप्रतिज्ञाविपरीतमाचरसि तर्हि तवानन्तनरकवासो भवेत्। रामचन्द्रः यदि श्वः प्रभाते चीराजिनधरः वनं न यास्यति तर्हि अहं गले रज्जुबन्धनेन वा विषभक्षणेन वा त्वत्पुरत एव प्राणांस्त्यक्ष्यामि। त्वमात्मानं सत्यप्रतिज्ञं मत्वा गौरवान्वितं मन्यसे किन्तु रामस्य नाम्ना शपथं कृत्वापि तदिदानीं न पालयसि अतस्तवानन्तनरकभोगो भवेत्। त्वया सत्यपालनं विधातव्यम्। रामं वनं प्रेषय। न कामप्यन्यां वार्तां श्रोष्यामि।'

कैकेय्या निष्ठुरवचनं निशम्य दशरथः 'हा राम!' इत्युक्त्वा पुनः मूर्छितोऽभूत्। बहुविधसेवाशुश्रूषया लब्धचेतनोऽब्रवीत्—'त्वया

मत्सन्निधौ यदुक्तं तेन न लज्जितासि किम् ? रामं वने प्रेषयित्वा रामजनन्यै कथं स्वमुखं दर्शयिष्यामि ? या किल दासीं सखीं स्त्री भगिनीव च मां सेवते तामेव कौसल्यां किमिव वक्ष्यामि ? अहमपुत्रकोऽभूवम् । देवताप्रसादादेव रामं लब्धवानस्मि । इदानीमहं तमेव पुत्रं विनापराधं कथं वनं प्रेषयेयम् ?' इति वदन् दशरथः बद्धाञ्जलिः कैकेयीमुक्तवान्—'अहं राजा स्वकीयं राजमुकुटं त्वच्चरणयोः समर्प्य त्वामभ्यर्थयामि — प्रसीद ! मयि दयालुः स्याः । त्वमेव रामाय राज्यं प्रदाय राजमातृत्वपदसौभाग्यलाभं कुरुष्व ।'

इत्थं दशरथः बहुविधं निन्दावचनपरोऽभूत् परं कैकेय्या मुखे सैवेकावार्ता—'रामं वनं प्रेषये'ति । क्रमशः रात्रिः समाप्ता । प्रभातसमये बन्दिनः गायकाश्च गातुमारब्धाः । कैकेयी तान्निवार्य राजानमब्रवीत्—'त्वं प्रतिश्रुत्यापि तत्पूरयितुमिदानीं पापीव किमर्थं विषण्णोऽसि ? धर्मशास्त्रमुद्घोषयति—'सत्यमेव परमधर्मः ।' तादृश - सत्यपालनार्थमेव त्वामुपदिशामि ; यदि त्वया तन्न क्रियते तर्हि मलिनं भवेत्त्वद्यशः । सत्यपालनेन यशोऽऽर्जय ।'

कैकेय्यास्तीक्ष्णवाग्बाणेन विद्ध इव दशरथः उत्तेजितस्वरेणोवाच—'पापीयसि ! शठे ! स्वार्थपरे ! त्वमस्मान् धर्मवाणीं श्रावयसि । धिक् स्त्रीजातिम् ! दुष्टे मयाग्निसाक्षिकं त्वत्पाणिग्रहणं कृतम् । इदानीं त्वां भरतं च त्यक्तवानहम् ।' एतदपि निष्फलमेव संवृत्तम् ।

कैकेयी ततोऽपि कठोरवचनं भाषितुमारेभे। इतः प्रातःकाले ब्राह्मण-क्षत्रियवैश्या ऋषिगणाः श्वेतच्छत्रदिव्यचामरप्रभृत्युपकरणसंभारहस्तौ कुमारीगणश्च राजपुर्यां समवेता भवितुमारभन्त। आबालवृद्धवनितं सर्वेऽपि सकलां रात्रिं विनिद्रावस्थायां व्यतीत्य कुलगुरुवसिष्ठाज्ञानुसारं संपूर्णमप्यायोजनं पूर्णतां निन्युः।

उषःकाले पुण्यमुहूर्ते सशिष्यः वसिष्ठः राजपुरीप्रविष्टः सुमन्त्र-मवलोक्योक्तवान्—'आगतोऽहमितिसंवादं सत्वरं नृपतये ज्ञापय। समस्तमप्यायोजनं पूर्णतां गतम्। पुरवासिनः ब्राह्मणाः नागरिकवणिजः नृपतिवृन्दानि च सर्वेऽपि अभिषेकार्थं समवेताः।'

सुमन्त्रः सत्वरमेवान्तःपुरं प्रविश्य अभ्युदयसूचकं 'जयतु महाराज' इति भाषमाणः राजानं साष्टांगपातं प्राणंसीत्; तमत्यन्तं भयग्रस्तं चावलोक्य कैकेयीं उक्तवान्। देवि! कैकेयि! जयतु भवती! किमर्थं नृपतिरस्वस्थ इव लक्ष्यते?' कैकेयी व्याजहार—'नृपतिः संपूर्णां रात्रिं 'राम' 'राम' इति वदन् केवलं रामचिन्तनपरः आसीत्—निद्रां नाधिगतवान्। रात्रौ जागरणफलस्वरूपं तमस्वास्थ्यमेवेक्षसे। शीघ्रं राममानीयताम्। नृपतिस्तं द्रष्टुमिच्छति।' सुमन्त्रोऽब्रवीत्—'हे भामिनि! नृपानुमतिं विना कथं यास्यामि?'

सुमन्त्रवचनं निशम्य दशरथः—'सुमन्त्र! राम द्रष्टुमिच्छाम्यहम्; तं शीघ्रमानय।' इत्यादिशत्।

## दशरथसमीपं रामगमनम्

सुमन्त्रः द्रुतगामि रथारूढः सत्वरं रामभवनमागत्य राममभिवाद्य चाब्रवीत्—'हे कमललोचन राम ! स्वस्ति तुभ्यम् ! नृपतिस्त्वां दिदृक्षुः शीघ्रमागम्यताम् ।

निशम्येदं रामः सीतामुवाच—'देवि ! भूपतिः ध्रुवं स्वप्रियमहिष्या सार्धं अभिषेकविषये परामर्शपरः आस्ते । तत्समीपमहं गच्छामि, प्रतीक्षस्व तावन्माम् ।' इति वदन् बहिरागत्य लक्ष्मणमवलोक्यैव अतित्वरं तेन सह सारथिसमानीतरथेन सपदि पितुः समीपमायातः । मार्गे वसिष्ठादीन्प्रति झटिति केवलं दृष्टिभङ्गिविशेषैरेव शिष्टाचारप्रदर्शनमभिनीतवान् । रामः पितृसमीपमुपसृत्य तस्य जननीकैकेय्याश्च चरणयोः प्रणतवान् । राजा सत्वरमुत्थाय राममालिङ्गितुमुद्यतहस्त एव 'हा राम !' इति भाषमाणः मूर्छितोऽभूत् । रामोऽपि हाहेति व्याहरन् पितरं शीघ्रमालिङ्ग्य स्वोत्सङ्गे समुपावेशयत् । राजानं मूर्छितमवलोक्य रमणीगणः क्रन्दनपरो बभूव । अनेन क्रन्दनध्वनिना वसिष्ठोऽपि तत्रोपस्थितः । मूर्छितजनकं व्याकुलतया दीर्घनिःश्वासपरमवलोक्य रामः व्यथितस्वरेण कैकेयीमपृच्छत्—'मातः ! पिता मां किमर्थं नालपति ? अज्ञानान्मया किमपराद्धम् ? अथवा तस्य किमपि असुखमुत्पन्नम् ? आहोस्वित् साभिमानया त्वयायमपमानितः ? तस्यैतावत् दुःखस्य किं कारणमिति

शीघ्रमुच्यताम्। अतीव व्याकुला मम प्राणाः।' कैकेयी अब्रूत—राम! न किमप्यसुखं नृपतेः, नापि तस्य कापि विपदुपस्थिता। त्वमेव नृपतिदुःखस्यैकमात्रं कारणम्। नृपतेः एतद्दुःखशान्त्यर्थं तस्य हितकार्यं त्वयाऽऽचरितुमुचितम्। सत्यप्रतिज्ञोऽसि त्वम्। नृपस्यापि प्रतिज्ञापालने त्वं सहायको भवेः। सन्तुष्टचित्तेन राज्ञा मह्यं वरद्वयं प्रदत्तम्। परन्तु तादृशवरद्वयस्य सफलता त्वदधीनैव वर्तते। त्वं तु नृपतेः अत्यन्तं प्रियः। अत एव स लज्जावशतः त्वामप्रियवचनं वक्तुमसमर्थः। वस्तुतः सत्यपाशदृढबद्धजनकं रक्षितुं त्वत्सदृशगुणवत्पुत्रस्यैव कर्तव्यम्। पितरं नरकात् त्रायते' इत्येव पुत्रशब्दस्य वाच्यार्थः। राम! सत्यमेव धर्ममूलम्। अत एव त्वया नृपतेः सत्यपालने प्रतिज्ञाबद्धेन भाव्यम्। तदैव तत्कष्टस्य कारणं स्पष्टीकरिष्यामि।'

कैकेयीवचनेन शूलाहत इव व्यथितः सन् रामोऽभाषत—

"अहो धिङ्नार्हसे देवि! वक्तुं मामीदृशं वचः।
अहं हि वचनाद्राज्ञः पतेयमपि पावके॥
भक्षयेयं विषं तीक्ष्णं पतेयमपि चार्णवे।
नियुक्तो गुरुणा पित्रा नृपेण च हितेन च॥
तद्ब्रूहि वचनं देवि! राज्ञो यदभिकांक्षितम्।
करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते॥

(१८। २८-३० वा. रा.)

रामस्य दृढप्रतिज्ञां निशम्य कैकेयी वक्तुमारभत । —'राम! मया नृपतेः सकाशात् वरद्वयं प्राप्तम् — भरतस्य राज्याभिषेकः, तव चापैव चतुर्दशवर्षपर्यन्तं वनगमनम् । तेन मह्यमिदं वरद्वयं दत्तम्, तदर्थमेवायं शोकार्तः । लज्जाया दुःखेन च त्वां द्रष्टुमपि न शक्नोति। यदि पितुः स्वस्य च सत्यपालनमभिलषसि तर्हि अद्यैव त्वया वनं गन्तव्यम् ।'

श्रीरामः कम्पितकण्ठेनोक्तवान् —'भरतस्यैव राज्यं भवतु; अहं दण्डकारण्यं गच्छेयम्; किन्तु तातः मामेतस्मिन्विषये किमर्थं किमपि न भाषते ?'

राजा दशरथः इदं निशम्य राममवलोक्य रुदन्नब्रवीत् — 'राम! अहं स्त्रीवशः भ्रान्तबुद्धिः कुपथगामी च मां बन्दिनं विधाय बलात् राज्येऽधिकारं विधेहि । एतेन न किमपि तव पापं भवेत्; इत्थं अहमपि सत्यभ्रष्टो न भविष्यामि ।' एतावन्मात्रमभिधाय नृपतिरतिनादं कर्तुमारब्धः —'हा राम! त्वं तु त्रैलोक्यपालने समर्थः मम प्राणेभ्योऽपि प्रियतरश्च । हा ! हा ! मां विहाय त्वं घोरवनाश्रयपरो भवितासि !' राममालिङ्ग्य नृपतिः इत्थं करुणविलापपरोबभूव। रामः पितुरश्रुसम्मार्जनं कुर्वन्नब्रवीत् —'पितः ! एतदर्थं त्वं कुतो दुःखितोऽसि ? भरतः राज्यशासनं करोतु । अहं त्वत्प्रतिज्ञापालनानन्तरं पुनरप्यागम्य त्वच्चरणवन्दनपरो भविष्यामि । पितः ! मा दुःखि-

तो भूः। वनवासपरोऽहं अयोध्यातोऽपि कोटिगुणमधिकं सुखी स्याम्; त्वत्प्रतिश्रुतिमर्यादारक्षामपि विधास्यामि तव कैकेयीमातुश्च मनोव्यथा दूरीभवतु। ममाभिषेकार्थमानीतद्रव्यादिसामग्री अपसार्यताम्। कौसल्यामातरं सीतां च सान्त्वयित्वा पुनरपि भवच्चरणवन्दनपूर्वकं अनुज्ञां ग्रहीष्यामि।

इत्यभिधाय रामः नृपं प्रदक्षिणीकृत्य लक्ष्मणेन सार्धं कौसल्या-दर्शनार्थं प्रस्थितः।

## रामस्य पितृसत्यपालनम्

तदानीं देवी कौसल्या राममङ्गलार्थं विष्णुपूजां होमादिकं च विधाय ब्राह्मणगणान् प्रभूतदक्षिणादानेन सन्तर्प्य तूष्णीमेकाग्रचित्तेन विष्णुध्यानपरा बभूव। पुरतः उपस्थितं रामं सा न दृष्टवती। सुमित्रा देवी कौसल्यामब्रवीत् — 'देवि! दृश्यताम् राम उपस्थितः।' कौसल्या श्रुतरामनामा चक्षुषी संमृज्य विशाललोचनं राममवलोक्य च तमालिङ्गितवती; निजाङ्के चोपवेश्य मस्तकाघ्राणपूर्वकं तस्य गात्रं हस्तेन परामृशन्ती सादरमुवाच — 'पुत्र! गतेऽह्नि त्वमुपोषितोऽभूः; नूनं क्षुधार्तोऽसि; उपविश्यताम्, किञ्चिन्मिष्टान्नमुपभुङ्क्ष्व' इत्युक्त्वा तया रामस्य कृते आसनं प्रसृतम्। रामः आसनं संस्पृश्य नतमस्तकः मातरं प्रणम्य जगाद — 'मातः इदानीं भक्षणार्थं तु समय एव नास्ति। ध्रुवं त्वं न जानासि यतः तव जानक्या: लक्ष्मणस्य चापि महती विपदु-

परिस्थिता ! मया तु अद्यैव सत्वरं वनं गन्तव्यम् । सत्यप्रतिज्ञ अस्मत्पिता कैकेय्यै यद्वरद्वयं दत्तवान् तेन भरतो राजा भविष्यति अहं च चतुर्दशवर्षपर्यन्तं वने स्थास्यामि । अहमद्यैव जटावल्कलधरो वनं यास्यामि ।'

## कौसल्यायाः शोकः

श्रुतमात्रे एव रामवचसि कौसल्या मूर्छिता सती भूविलुण्ठनपरा बभूव । रामोऽपि जननीमुत्सङ्गमारोप्य सुश्रूषापरो जातः । लब्धसंज्ञा कौसल्या रुदती उक्तवती—'वत्स ! राम ! त्वां विनाहं क्षणार्धमपि प्राणधारणासमर्थास्मि । सत्यमेव चेत्त्वं वनं यास्यसि तर्हि मामपि तत्र नय । केवलं दुःखानुभवार्थमेवाहं पुत्रवती जाता ! एतदपेक्षया वन्ध्यात्वमेव वरम् । राजा यदि भरते प्रसन्नः सन् तं राजानं चिकीर्षति तर्हि करोतु । किन्तु त्वां किमर्थं वने प्रेषयति ? वत्स ! 'नास्ति स्वामिनः राजत्वे मम कल्याणं सुखलाभोवा अपितु पुत्रपौरुषेण सुखलाभं करिष्यामि' एतेनैवाहं प्राणधारणसमर्था आसम । चिरादहं स्वामिनः अप्रिया । स तु अतीव मन्त्रिग्रहपरः । मां कैकेयीदासीमिव तस्याः अपि निकृष्टतरां वा मन्यते ।

'तव दशमवर्षे उपनयनं जातम् । तदारभ्य निजदुःखावसानमाकाङ्क्षन्ती सप्तदशवर्षाणि यापितवती । वत्स ! पिता यथा तव गुरुः मातापि तदपेक्षया गुरुः । पिता त्वां वनं गन्तुमादिशति परं

अहं तव जननी त्वां कदापि वनं प्रयातुं नानुमन्ये मातुराज्ञोल्लंघनेन चेत्त्वं वने यास्यसि तर्हि तत्क्षणमेव प्राणत्यागं करिष्यामि ।

### लक्ष्मणस्य क्रोधः

श्रुतकौसल्यावचनः सौमित्रिः क्रोधेन त्रिभुवनं दहन्निव सपौरुष-मुक्तवान्,—'आर्य ! राघव ! भवान् राज्यत्यागपूर्वकं वनं यास्यति इत्यहं कथमपि सोढुं नाक्षम् । अहं तु स्त्रैणमुन्मत्तं भ्रान्तं विमूढचित्तं च राजानं सबलं स्थानान्तरीकृत्य भवन्तं यौवराज्यपदे प्रतिष्ठास्यामि । कोऽपि अन्तरायपरो भवति चेत् अहं कृतान्त इव धनुर्बाणहस्तः बद्ध-गोधाङ्गुलित्राणः तीक्ष्णशरैः सर्वानपि यमसदनं प्रेषयिष्यामि ! हे अरि-मर्दन ! त्वमभिषेकार्थं प्रस्तुतो भव ।

"हनिष्ये पितरं वृद्धं कैकेय्यासक्तमानसम् । कृपणं च स्थितं बाल्ये बन्धुभावेनगर्हितम्" (वा. स.)

श्रुतलक्ष्मणव्याहारः रामः तं समालिङ्गनपाशबद्धं विधाय अब्रवीत—'लक्ष्मण त्वं तु महापराक्रमशाली अस्मत्परमहितैषी च । यत्किमपि भाषसे तत्सर्वमपि कर्तुं समर्थोऽसि ; परंतु न तदाचरण-योग्यम् । एतद्राज्यदेहादिकं यत्किमपि दृश्यते तद्यदि यथार्थं स्यात्तर्हि त्वत्प्रायासस्य किमपि मूलमपि भवेत् । किन्तु संसारोऽयं स्वप्नवत् गंधर्व-नगरसदृशोऽयथार्थः । मूढाः केवलमेतदासक्ता भवन्ति । इह केवलं धर्म एव परमपुरुषार्थः । धर्म एव सत्ये प्रतिष्ठितः । अनुत्तममेतत्पितृ-

वचनं च धर्मसमन्वितं अतः अनुष्ठातव्यम् । अहं धर्माश्रयः, पितृसत्य-पालनार्थं अहं अवश्यमेव वनं यास्यामि । त्वया इयं अनार्यजनोचिता अधर्मबुद्धिः परित्याज्या ।'

## कौसल्यासान्त्वनाप्रदानम्

कौसल्या क्रन्दन्ती राममुक्तवती—'श्रुतस्त्वया लक्ष्मणाभिप्रायः ? तत्र राजभाव एव उचित इति मन्ये । पुत्र ! तव पितेव अहमपि पूजनीया एव । न प्रदास्यामि तुभ्यं वनगमनानुमतिम् । त्वयि वनं प्रयाते वत्समनुसरन्ती पयस्विनीव अहमपि तवानुगमनपरा भवेयम् । त्वां विहाय अहं अत्र राजपुरे स्थातुं नालम् ।'

मातृवचनेन क्षणं तूष्णीं स्थित्वा रामोऽब्रवीत्—'मातः ! पितुरादेशः मया पालनीय एव भवेत् । पितरमहमनृणं विधास्यामि । पितुराज्ञापालनं परमो धर्मः । अस्मत्पिता तवापि पूजनीय एव — तस्यादेशपालने मम सहायता क्रियताम् । धर्मप्राणः ऋषिः कण्डुः पितुरादेशेन गोहत्यारूपं गर्हितकृत्यमपि कर्तुं निश्चयमकरोत् । अस्मत्पूर्वपुरुष-सगरनृपाज्ञया तस्य पुत्राः पृथिवीखननरूपदुष्करकार्यप्रसिताः सर्वेऽपि विनष्टाः । जामदग्न्यः परशुरामः पितुरादेशेन स्वकीयजननीं रेणुकां तीक्ष्णपरशुना कृत्तकण्ठां व्यधात् । अन्येऽप्यनेकाः देवतुल्यधार्मिकव्यक्तयः निःसंदिग्धं पित्राज्ञापालनतत्परा अभूवन् । जननि ! पितुरादेशपालनेन कोऽपि धर्मच्युतो न भवेत् । अहमपि पितृवाक्यातिक्रमं

न विश्वस्यामि। अपि च दैवमेवास्माकं लब्धराज्यनिवृत्तेः वनगमनस्य च कारणम्। नो चेत् कथं कैकेयी देवी एतादृशी गुणवती राजनन्दिनी च भूत्वा साधारणवनितेव मदर्थं वनगमनप्रार्थनापरा भवेत्? अखिलमिदं दैवचेष्टितमेव। पुरुषकारेण दैवातिक्रमो न शक्यः।'

लक्ष्मणाश्रुप्रमार्जनपरो रामः तं बहुधा असान्त्वयत्, मातरं कौसल्यां नतमस्तकः कृताञ्जलिश्च पुनरब्रवीत्—'देवि! मां वनगमनार्थमनुमन्यस्व। वनवासात् प्रत्यावृत्य पुनरपि त्वच्चरणवन्दनं करिष्यामि। त्वया पिता सेवितव्यः। इदानीं कैकेयीपीडितः पिता विशेषतो मनःकष्टानुभवपरः अस्ति। अस्मिन्समये त्वया तस्य सेवाशुश्रूषा कर्तव्या। पितरं सान्त्वय। स्वामिसेवैव स्त्रीणां सनातनो धर्मः। मातः! यन्मयाभिहितं तत्स्मरन्ती मम वनात्प्रत्यावर्तनं प्रतीक्षस्व। न त्वया चिरं दुःखानुभवः कर्तव्यो भवेत्। नदीप्रवाहस्थितोडुपसमूहस्येव कर्मपथानुसारिणामेकत्र निवासः सर्वथाऽसम्भवः। चतुर्दशवत्सरात्मकसमयः क्षणार्धमिव शीघ्रमेवावसानमेष्यति। मातः। मा दुःखिता भूः। मह्यं सानन्दं वनगमनानुमतिर्दीयताम्। भवतीं दुःखितामवलोक्य वनं गतस्यापि मे मानसं व्याकुलं स्थास्यति। इत्थमभिधाय रामः गृहीतमातृचरणः चिरं तथैव तस्थौ; तदा कौसल्या तं सप्रयत्नमुत्थाप्य स्वाङ्के चोपवेश्य साशीर्वचनं जगाद—'यद्यहं त्रयस्त्रिंशत्कोटिसंख्याकदेवपूजातत्परा, पतिसेवापरायणा गुरूणां ब्राह्मणानां च पूजां कृतवती। अतिथि-

  

सेवातत्परा दरिद्रेभ्यः धनदानप्रसिता च अभूवम् तर्हि तेन ब्रह्मविष्णु-महेश्वरप्रभृतयो देवगणा गमनशयनस्वपनेषु सर्वदा त्वां रक्षेयुः त्वं कर्तव्य पालनं विधाय अयोध्यां प्रत्यावर्त्य च राज्यलाभं करिष्यसि । इत्थं भाषमाणा कौसल्या असकृद्राममालिङ्ग्य तन्मस्तकावघ्राणं च कुर्वती तं गन्तुमनुमेने ।

## सीतासमीपे रामः

मातृभवनादागत्य रामः लक्ष्मणं गृहीत्वा सीतां सान्त्वयितु निजावासगृहमयासीत् । सीतापि देवपूजादिकार्यं समाप्य सानन्दं स्वामिनं प्रतीक्षमाणा तस्थौ । रामं विषण्णवदनमुद्विग्नं चावलोक्य स्मित-पूर्वाभिभाषिणी सीता सवेदनकण्ठं राममालिङ्ग्याब्रवीत्— 'देव त्वा-मद्योद्विग्नमिव कुतो विलोकये ? कुत्रास्ते तव श्वेतच्छत्रम् ? बन्दिस्तुति-पाठका वेदपाठरता ब्राह्मणगणाश्च त्वया सहकुतो न दृश्यन्ते ? चतु-रङ्गिणी सेना माण्डलिकनृपाश्च तवानुगामिनः कथं नावलोक्यन्ते ? त्व-त्पुरतः काञ्चनमयं सिंहासनं शिरसि च किरीटादि नृपोचितभूषणा-न्यपि कस्मान्न सन्ति ?

सीतायाः व्याकुलवचनं निशम्य रामः सस्मितमवोचत्— 'शुभानने ! पित्रा भरताय यौवराज्यपदं प्रतिश्रुतम् । अस्माकं च कृते तेन दण्डकारण्य राज्यं निर्दिष्टम् । अद्यैव मया वनं गन्तव्यम् । गमनात् पूर्वं त्वत्तः अनुमतिं प्राप्तुमागतोऽस्मि ।' अनन्तरं वनवासकारणस्य

सविस्तरं मीमांसां विधाय रघुनन्दनः प्रोवाच—'भामिनि ! त्वं हृष्ट-मानसा सती मां वनवासार्थं प्रस्तुतं विधेहि। त्वया व्रतोपवासदेवार्चनादिपरया भूत्वा अस्मत्पितुः जनन्याश्च सेवासक्तया स्थातव्यम्। अस्मद्भ्रातरः पुत्रभ्रातृसदृशा द्रष्टव्याः भरतस्य समीपं कदाप्यस्मत्प्रशंसा-परा माभूः। अहं चतुर्दशवर्षवनवासानन्तरं शीघ्रमेव पुनस्त्वया सम्मिलितो भवेयम्।'

श्रुतपतिवचना प्रियवादिनी विदेहनन्दिनी सीता प्रणयकोप-स्वरेणागादीत्—'नरवरोत्तम ! त्वं मामबला इति मत्वा किमर्थमेता-दृशमखिलं भाषसे ? मातापितरौ भ्राता पुत्रः बन्धुश्चैते सर्वे निज-भाग्यानुसारं सुखदुःखानुभवपरा भवन्ति; भार्यैव केवलं स्वामिनः भाग्या-नुसारं सुखदुःखानुभवं कुर्वन्ती आस्ते। धर्मपत्नी तु स्वामिनः अर्धाङ्गिनी; अतः अहमपि वनवासायादिष्टा। नार्यास्तु वर्तमाने भविष्यति वा पतिरेवैकमात्रागतिः स्वामी स्वस्थो दुःखस्थो वा भवतु तस्य पदच्छायाश्रय एव नार्याः इहामुत्र सुखहेतुवस्तुसमुदायः अथ च अणिमाद्यष्टसिद्धितोऽपि अधिकसुखजनकः। स्वामिनं प्रति मम यादृशं कर्तव्यं तत्तु मातापितृभ्यां यथाशास्त्रमुपदिष्टपूर्वम्। अस्मिन्विषये नाधिकं मदर्थं शिक्षितव्यमास्ते। अहं तु अवश्यमेव त्वामनुसरन्ती निर्मानुषं मृगसमाकुलं व्याघ्रादिसम्भृतं दुर्गमवनं गमिष्यामि। संयता ब्रह्मचारिणी च सती [illegible] मधुगन्धपुष्पाद्याहरन्ती

मालाग्रथनपूर्वकं त्वां भूषयिष्यामि, त्वद्भुक्तावशेषमुपभुज्य तव चरणतले स्वपिष्यामि। त्वां विना स्वर्गवासमपि न कामये। बाल्यकाले ज्योतिषी ब्राह्मणः मामवलोक्य उक्तवानासीत्—'स्वामिना सह तव वनवासो भवितेति।' यथार्थं भवतु ब्राह्मणवचनम्। त्वया सार्धं वनं यास्यामि।'

रामः वनवासस्य दुःखकष्टानि विचार्य सीतां निवर्तयितुमुक्तवान्—'सीते! त्वं श्रेष्ठवंशे प्रसूता सर्वदा धर्मानुष्ठानतत्परा अतो मया तव हितकरं यत्किञ्चिदुपदिश्यते तदेव त्वया कर्तुमुचितम्। अत्र स्थितयैव त्वया धर्माचरणं विधेयम्। तेनैवाहं सुखी स्याम्। लताकण्टकाकीर्णं वृश्चिकपतङ्गदंशकीटसङ्कुलं व्याघ्रसिंहसर्पराक्षसयक्षरक्षोनिशाचरपरिव्याप्तविजनं वनं त्वया प्रवेष्टुं नोचितम्।'

रामवचनेनाश्रुपूर्णनयना सीतोक्तवती—'त्वया वनवासस्य या विपत्परम्परा उपवर्णिता त्वत्सहचारिणीं मां न स्प्रक्ष्यति हे राघव! अहं पतिव्रता साध्वी चास्मि; त्वद्विरहं सोढुमसमर्था विषपानेन वा अग्निप्रवेशेन वा प्राणांस्त्यक्ष्यामि।'

सीता रामेण नानाप्रकारैः बोधितापि, बहुशोऽनुनीतापि संकल्पच्युता नाभूत्, परं तद्वक्षोविनिहितमस्तका क्रन्दन्ती जगाद—'ध्रुवं यथा सावित्री सत्यवतः तथैवाहं तव। नाहं दुष्टरमणीव; मया मनसापि अन्यपुरुषचिन्ता न क्रियते; बालिकावस्थायामेव त्वया मम पाणिग्रहणं विहितम्। सर्वदैव दीर्घकालं त्वयैव सार्धं वासमकार्षम्; इदानीं

तामेव पतिव्रतां पत्नीं परहस्ते कुतः समर्पयितुमीहसे ?' अनन्तरं अभिमानस्वरेणोक्तवती—'यदि मम पिता—रामः केवलमाकृतौ पुरुषः परन्तु कार्ये नारीव—इत्यज्ञास्यत् तर्हि स मनसि किं भावयेत् ? त्वं मां भरतहस्ते पुत्तलिकामिव स्थापयितुमीहसे ? त्वमेव भरतवशवर्ती सन् कुतोवस्तुमभिलषसि ? हे आर्यपुत्र ! वनगमने दृढसंकल्पाहम् ; किन्तु त्वं मामात्मना सार्धं नेतुं न वाञ्छसि चेदहमरिवशीभूता दिनमपि अत्र न स्थास्यामि—अद्यैव विषपानेन प्राणत्यागं विधास्यामि। मुहूर्तमपि त्वया विरहं सोढुमसमर्थाहम् ; कथं तर्हि चतुर्दशवत्सराणि तं सहिष्ये ?' शोकसन्तप्ता सीता स्वामिनं गाढमालिङ्ग्य उच्चस्वरेण-क्रन्दन्ती मूर्च्छिताभूत्।

रामः सीतां निजोत्सङ्गे गृहीत्वा शुश्रूषापरायणोऽभूत्। किञ्चिल्लब्धचेतनां च स सीतामब्रवीत्—'शुभानने ! सीते ! त्वन्मानसं दुःखितं विधाय स्वर्गमपि न कामयेऽहम्। तव सकलाभिप्रायज्ञानं विनैवाहं त्वां वनवासिनीं विधातुं न समीहे। इदानीं ज्ञातवानहम्—'त्वां मम सहधर्मिणोरूपेणैव वनवासिनी भवितुमेव सृष्टवान्विधाता। अत एव त्वां परित्युक्तुं न शक्नोमि। मया सार्धं व्रतचारिणी सती गन्तुं प्रस्तुताभवेः। त्वरितं त्वया ब्राह्मणेभ्यो भिक्षुकेभ्यश्च इच्छानुरूपं धनवस्त्रभोजनादिकं प्रदीयताम्। आवयोश्च यानि भूषणानि, उत्तमवस्त्राणि रमणीयक्रीडनकानि शय्यायानवाहनादीनि च सन्ति

सर्वाण्यपि तानि त्वया भृत्यादिषु संविभक्तव्यानि ।' स्वामिनः अनुमतिं प्राप्य सीता सानन्दं मुक्तहस्ताभ्यां धनादिकं सर्वेभ्यो दातुमुद्यताभूत् ।

## लक्ष्मणस्य वनगमनसङ्कल्पः

सुमित्रानन्दनः लक्ष्मणस्तत्रोपस्थित आसीत् । रामसीतयोः वनगमनवार्तां निशम्य साश्रुनयनः सन् स रामचरणद्वयं दृढं गृहीत्वोक्तवान्—'भवन्तौ चेद्वनगमनार्थं कृतनिश्चयावेव तर्हि अहमपि धनुर्बाणहस्तः भवतोरग्रतो यास्यामि । भवन्तौ परित्यज्य स्वर्गलोकं, अमरत्वं अभ्युदयं लौकैश्वर्यं च न कामये ।' रामः निशम्यैतल्लक्ष्मणं निवर्तयितुमवोचत्—'भ्रातः लक्ष्मण ! त्वं वीर्यसम्पन्नः स्निग्धस्वभावः, नियतः, धर्मपथस्थितः धर्मनिरतः ममप्राणतुल्यप्रियो वशीभूतो भ्राता सखा च । भ्रातः त्वयि वनं प्रयाते मातरं कौसल्यां सुमित्रां च कः प्रति पालयेत् ? लक्ष्मण ! कैकेयी सपत्नीनामधिकं दुःखं दास्यति । भरतोऽपि अधिगतराज्यः विमातृविषये उदासीनो भवेत् । सौमित्रे आवयोर्विरहे मातॄणां येन किमपि कष्टं न स्यात् तस्यैव व्यवस्था त्वयात्र स्थितेन विधेया ।'

श्रुतरामचन्द्रवचनः लक्ष्मणः श्लक्ष्णवाक्यैः उत्तरयांचकार—आर्य ! भवत्पराक्रमप्रभावतो भरतः प्रयतः सन् कौसल्या सुमित्रादेव्यौ पूजयिष्यति । राज्यलाभगर्वितो मत्तश्च भूत्वा यदि स तादृशप्रयत्नं न कुर्यात् तर्हि अहं तम् तत्पक्षीयान्सर्वानपि निःसन्देहं हनिष्यामि ।

किन्तु देव ! मातुः कौसल्यादेव्या भरणपोषणादिकं केनापि करणीयं भवेदिति नावश्यकम् । यतः तयाऽऽश्रितवर्गप्रतिपालनार्थं सहस्रं ग्रामाः प्राप्ताः सन्ति । अतः सा मम मातरं अस्मत्सदृशान् सहस्रशो लोकांश्च अनायासतः प्रतिपालयितुं समर्था भवेत् । त्वयाऽस्मन्विषये न कापि चिन्ताकार्या । मां सहचरं विधाय तव न कापि धर्महानिर्भविष्यति । अहं च कृतार्थः स्याम् । अहं सगुणं धनुः खनित्रं च गृहीत्वा पेटिकावहनपरः मार्गं परीक्षमाणः अग्रतो यास्यामि । नित्यं फलमूलादिकं होमोपकरणादिकं च संग्रहीष्यामि । भवता वैदेह्या सह पर्वतसानुप्रदेशेषु सुखेन वस्तव्यम् । अहं च प्राहरिकभृत्य इव भवतः सर्वमपि कार्यजातं सम्पादयिष्यामि ।'

लक्ष्मणस्य सप्रेमसम्भाषणतः प्रीतो रामोऽगादीत् हे लक्ष्मण ! मया सह त्वमपि जिगमिषुरिति कृत्वा विशेषत आनन्दितोऽस्मि । अधिगत सुहृद्वर्गसम्मतिः सत्वरं प्रस्तुतोभव । वरुणदेवः महायज्ञे प्रसन्नः सन् महासेनजनकाय एते दिव्यधनुषी दिव्यकवचे, अक्षयतूण्यौ, आदित्यप्रभं हेमविचित्रं खड्गं च दत्तवान् । एतत्सर्वं जनकः अस्मद्विवाहसमये यौतकरूपेण प्रददौ । मया तान्यखिलानि अस्त्राणि पूजयित्वा गुरुगृहे स्थापितानि । त्वया तानि सर्वाणि सत्वरं आनीयन्ताम् ।'

## धनराशिवितरणम्

लक्ष्मणः तानि सर्वाणि माल्यभूषितानि चन्दनचर्चितानि दिव्यास्त्राणि रामसमीपमानीतवान् । तान्यवलोक्य रामोऽब्रवीत्—

'साधु ! योग्यसमये समागतोऽसि । शत्रुनाशन ! इदानीमहं त्वया सार्धं ब्राह्मणतपस्विषु स्वकीयमखिलधनं विभक्तुमिच्छामि । एते श्रेष्ठ-ब्राह्मणाः दृढभक्ता अस्मद्गुरुजनानां सेवातत्परा आसन् तान्प्रीणयितु-मिच्छामि । त्वं शीघ्रमेव गुरुपुत्रं सुयज्ञमानय ।'

सुयज्ञे समागते याज्ञिकाः होमसमये पूजितस्याग्नेः पुरतः यथा-भ्यर्थनपराभवन्ति तथैव रामः सीतया सह सुयज्ञस्य पुरतः बद्धाञ्जलि-पुटः स्थित्वा तं वरेण्य — स्वर्णमयश्रेष्ठाङ्गदौ, मनोहरकुण्डले, हेमसूत्र-ग्रथितमणिमाल्यं, केयूरम्, वलयम्, बहुविधरत्नानि इत्यादिभिः पूजयित्वा सीतानिर्देशानुसारं अब्रवीत् — 'हे शुभदर्शन ! भवतां सुहृद् सीतादेवी वनगमनार्थमुद्यता भवतः स्त्रीकृते हारः, हेमसूत्रम्, काञ्चीदाम, चित्राङ्गदे, मनोहरकेयूरे, नानारत्नविभूषितं उत्तमास्तरण-युतं पर्यङ्कं च समर्पयति । सर्वमेतद्वस्तुजातं भृत्यैः निजावासं प्रेष्यताम् । द्विजवर ! अस्मन्मातुलः धनञ्जयाभिधं गजं मह्यं प्रददौ तं सहस्रनिष्क-सहितं तुभ्यं प्रददामि ।' सुयज्ञः स्वीकृतदानः हृष्टमानसः सर्वानपि आशिषा संयुयोज ।

अनन्तरं रामः लक्ष्मणमब्रवीत् । महाबाहो ! अहं अगस्त्य-कौशिकप्रभृतीन्ब्राह्मश्रेष्ठान्पूजयितुमभिलषामि । त्वं तेभ्यः सहस्रं गावः, सुवर्णरजते, बहुतराणि रत्नानि महामूल्यमणयः इत्यादिभिस्तर्पय । वेदज्ञ तैत्तिरीयशाखाध्ययनकारिणे आचार्याय तदिच्छानुसारं यानदासी-

कौशेयवस्त्रादिकं दापय। चित्ररथेन दीर्घकालपर्यन्तं अस्मन्मंत्रित्वं सारथ्यं चाचरितं तस्मै अपि धनं महामूल्यरत्नानि बहुमूल्यवस्त्राणि सहस्रं गाः छागमहिषप्रभृत्यनेकपशूंश्च वितीर्य सन्तोषय। कठशाखा-वेदाध्ययनकारिभ्योऽपि त्वया रत्नपूर्णा अशीतिसंख्याका उष्ट्राः, शालि-पूर्णा सहस्रवृषाः, समुचितप्रमाणाश्वणकमुद्राः, दधिदुग्धादिकृते सहस्रं पयस्विनीः प्रदातव्याः। ये दरिद्रदुःखिता रुग्णा विकलाङ्गाश्च तेभ्योऽपि प्रचुरधनं खाद्यसम्भारांश्च दातुं धनाध्यक्षमुपदिश।' रामाज्ञया इत्थं धनागारशस्यागाराभ्यां प्रचुरधनरत्नशस्यानि प्रदत्तानि। सीतापि परिचारिकाभ्यः अमितधनादिकं दत्तवती।

अतः परं रामः शोकाकुलभृत्यपरिचारिकादिभ्यो चतुर्दशवत्सर-पर्यन्तं जीविकानिर्वाहार्थं उपयुक्तपरिमाणात्मकं धनद्रव्यादिकं वितीर्य स्नेहस्तम्भितकण्ठेनोक्तवान्—'वनवासतः अस्माकं पुनरागमनपर्यन्तं युष्माभिः मम लक्ष्मणस्य चावासगृहे निवासः कर्तव्यः।

एतद्राशीकृतं धनवस्त्राभरणखाद्यसम्भारादिकं ब्राह्मणेभ्यो दीन-दरिद्रेभ्यो बालवृद्धेभ्यः अन्धखञ्जबधिरेभ्यश्च वितीर्णम्। तेऽपि सर्वे रामसीतालक्ष्मणार्थं जयध्वनिं कुर्वाणाः प्रययुः। अस्मिन्नेव समये पिङ्गलवर्णः त्रिजटाभिधः बलिष्ठो दीर्घकायश्च कश्चिद्वृद्धब्राह्मणः कर-गृहीतस्त्रीपुत्रपुत्रीकः प्रार्थिरूपेण रामस्य समीपमागतः। श्रुततदभ्यर्थनो रामः उक्तवान्—'एतावद्विलम्बेन किमर्थमागतोऽसि? अस्माभिस्तु

सर्वमपि धनं वितीर्णम्। तथापि मम अनेकधेनवः सन्ति भवान्स्वहस्तस्थदण्डं यावद्दूरपर्यन्तं निक्षेप्तुं शक्नोषि तावद्दूरपर्यन्तं स्थिताः सर्वा अपि धेनवः तव भवन्तु।' त्रिजटः रामवचनं उपहासात्मकं विचार्य विषण्णवदनेन चिरं राममुखार्पितदृष्टिः तस्थौ। रामः प्रोक्तवान्—'नाहं कदापि मिथ्यावचनः। गोष्ठमभिगम्य हस्तस्थितो दण्डो निक्षिप्यताम्।'

एतन्निशम्य त्रिजटः गोष्ठमागत्य जीर्णवस्त्रेण बद्धपरिकरः हस्तस्थितं दण्डं दशवारं भ्रामयित्वा यावद्बलं निचिक्षेप। दण्डश्च सरयूतीरे गोष्ठापरदिशिपतितः। गोष्ठगाः सर्वा अपि धेनूः प्राप्यायं गर्गगोत्रीयस्त्रिजटः प्रमुदितः सन् रामाय दत्ताशीर्वचनः धेनूः ताडनपूर्वकं नेतुमुपचक्रमे।

## वनगमनस्योद्योगः

धनुर्धरो लक्ष्मणः सुमित्रामातुरनुमतिं प्राप्य रामसमीपमुपस्थितः। धनवितरणसमाप्त्यनन्तरं रामसीतालक्ष्मणाः सर्वेऽपि दशरथचरणवन्दनार्थं प्रचलिताः। सहस्रकन्दर्पकमनीयकान्तेः श्यामलाङ्गरामचन्द्रस्य दर्शनार्थं राजपथे पौरजनगणानां सम्मर्दोऽभूत्। पुरनारीगणाः प्रासादहर्म्यगृहाणामुपरितलान्यारुह्य विलपन्तो रामलक्ष्मणसीता अवलोकयामासुः। नगरवासिनः उच्चस्वरैरूचुः—'धिक् कामवशं राजानम्! तेन सत्यप्रतिज्ञः प्रियपुत्रः स्त्रीमनस्तुष्ट्यै वनं प्रेषितः! हे जनगणाः! नोचितोऽस्मिन्नगरे वासः। श्रीरामः पत्न्यानुजेन न सार्धं

पद्भ्यामाश्रयेत्, तस्मिन्नेव वनेऽस्माकमप्युचितो वासः। सर्वेऽपि पश्यन्तु! यां वैदेहीं पुरुषाः कुत्राप्यवलोकयितुमसमर्था आसन् सैव जानकी पादचारिणी प्रयाति! ध्रुवं स्त्रीवशवर्तिनः दशरथनृपतेः बुद्धिभ्रंशोजातः स भूताविष्टोवा स्यात्। न वयमस्मिन् राज्ये स्थास्यामः।'

'रामः राजप्रासादमागत इति सुमन्त्रदत्तं संवादमधिगम्य दशरथः बाष्पस्तम्भितकण्ठं सुमन्त्रमब्रवीत्—'सर्वमपि पत्नीगणमिहानय। भार्यापरिवृतः सन्नहं रामं दिदृक्षुरस्मि।'

नृपाभिप्रायानुसारं पत्नीनां पञ्चाशदुत्तरत्रिशतं कौसल्यां पुरस्कृत्य रामविरहेणारक्तनयनं सत् तत्रोपस्थितम्। ततः दशरथः सुमन्त्रं जगाद—'मम पुत्रोऽपि आनीयताम्।'

## दशरथस्य सान्त्वनाप्रदानम्

रामं सीतालक्ष्मणाभ्यां सह कृताञ्जलिपुटं आगच्छन्तमवलोक्य आसनादुत्थितः रामं प्रतिगच्छन्नेव मूर्च्छितः पतितः। रामलक्ष्मणौ सीता च त्वरितं दशरथसमीपमुपगम्य रुदन्तं तमुत्थाप्य पर्यङ्के स्थापयामासुः। राजप्रासादस्थशतशो नारीणां क्रन्दनध्वनिना अलङ्कारनिनादेन च सह 'हा राम'! इति शब्द उत्थितः। राज्ञि लब्धसंज्ञे रामः बद्धाञ्जलिपुटः दीनस्वरेणोक्तवान्—'पितः! अहं दण्डकारण्यं गन्तुं प्रस्तुतः मामाशिषा संयोजय। सीता लक्ष्मणश्च मया विविधप्रकारं

वारितावपि न श्रुतवन्तौ। तावपि मयैव सहप्रयातुमुद्यतौ—एवं प्रयातुमस्माननुमन्यस्व।'

दशरथनृपतिः राममुवाच—'राम! कैकेयीवरदानेन विमूढोऽस्मि संवृत्तः। अतः मां निगृह्णन् त्वमेव स्वयमयोध्यायाः शासको भवेः।' कृताञ्जली रामोऽब्रवीत्—'पितः! नाहं भवन्तं मिथ्यावादिनं प्रमाणीकरिष्यामि। अतः वनगमनमेव स्थिरीकृतं मया। भवान् दीर्घायुर्भूत्वा पृथिवीं सुखं शाधि। चतुर्दशवर्षवनवासप्रतिज्ञामुत्तीर्य पुनः प्रतिनिवृत्य भवच्चरणवन्दनं विधास्यामि।' तदानीं दशरथः रुदन् राममुवाच—

"नहि सत्यात्मनस्तात! धर्माभिमनसस्तव।
सन्निवर्तयितुं बुद्धिः शक्यते रघुनन्दन॥
अद्यत्विदानीं रजनीं पुत्र मा गच्छ सर्वथा।
एकाहं दर्शनेनापि साधुतावच्चराम्यहम्॥

रामोऽब्रवीत्—'अद्य यत् राज्यसुखमुपभोक्ष्यामः तदस्माकं श्वः पुनः को दास्यति? अतः पितृसत्यपालनपरोऽहं भवन्तं यशस्विनं विधातुं अद्यैव गमनं स्थिरीकृतवानस्मि।'

रामवचनं निशम्य दशरथः सन्तापदुःखपीडितः सन् राममालिङ्ग्य सहसा मूर्छितः पूर्णतया संज्ञाशून्यश्च संवृत्तः। तदानीं कैकेयी-

 

वर्गं सर्वोऽपि नारीगणः क्रन्दितुमारब्धः। सर्वत्र हाहाकारध्वनिरुत्थितः। सुमन्त्रोऽपि रुदन्मूर्छितः।

## सुमन्त्रस्य खेदोक्तिः

अनन्तरमधिगतचेतनः सुमन्त्रः क्रोधरक्तनयनः दीर्घनिःश्वासपरः हस्तनिष्पेषणपूर्वकं कम्पितकण्ठेन कैकेयीं लक्ष्यीकृत्य वक्तुमारेभे—देवि! भवती पतिघातिनी! आश्चर्यं खलु, भवत्या एतादृशाचरणेन पृथिवी अस्मिन्नेव क्षणे कथं न विदीर्णा! भरताय राजसूत्रं समर्प्यताम्। किन्तु अहमपि तत्रैव यास्यामि यत्र रामः स्यात् यतः यद्दुष्कार्यं कर्तुमुद्यतासि तेन कोऽपि ब्राह्मणोऽत्र निवस्तु समर्थो न भवेत्। देवि! रामे वनं प्रयाते जगति भवत्या महती अपकीर्तिः स्यात्। स्वकल्याणार्थं एतन्निन्दितदुष्कर्मणः परावृत्ता भवेः।' सुमन्त्रस्य तीव्रवचनैरपि कैकेयी किञ्चिदपि क्षुब्धा विचलिता वा नाभूत्। तदानीं दशरथः कम्पितस्वरेण सुमन्त्रमब्रवीत्—'त्वया रामानुगामीभवितुंचतु रङ्गिणीसेना सज्जीकर्तव्या। अतिधनसम्पन्नो वणिग्गणः मधुरभाषिण्यो गणिकाः मल्लगणाः वनस्थलाभिज्ञा व्याधगणाश्च रामेण सार्धं प्रयान्तु। अस्मद्धनकोषः शस्यभाण्डागारं च रामेण सार्धं गमिष्यति येन रामः वनेऽपि भूरिदक्षिणयज्ञानुष्ठानतत्परः सन् पुण्यार्जनं करोतु। दरिद्राणां [illegible] प्रतिपालं कर्तुं च समर्थः स्यात्।'

दशरथनिर्देशं निशम्य निर्लज्जा कैकेयी शुष्कमुखेनोक्तवती—'महाराज! भरतः पीतसारमदिरामिव अनुपभोग्यमिदं धनशून्यं निःसारं राज्यं नाभिलषति।' दशरथोऽपि आरक्तनयनोऽब्रवीत्—'अनार्ये! त्वया कथमिदं नोक्तपूर्वम्? पापरूपिणि! अहं राज्यं धनं सुखानि परित्यज्य राममनुगमिष्यामि। तव पुत्रो राजा भवतु। त्वमपि तेन सह सुखं राज्योपभोगपरा भवेः।'

## रामस्य चीरवसनधारणम्

अखिलमिदं निशम्य रामः विलीनभावेनोवाच—'राजन्! अहं सर्वानपि नागरिकभोगांस्त्यजामि। इदानीमहं विषयमात्रेऽनासक्तः। अतः अनुगामिन्या सेनया किं प्रयोजनम? कृतहस्तिदानस्य हस्तिबन्धनरज्जौ कीदृशी ममता? निखिलामपि सम्पदं भरताय दातु मनुमतोऽहम्। पितः! अस्मत्कृते उपयुक्तानि चीरखनित्रपिटकानि आनेतुं दासीगणा आदिश्यन्ताम्।'

लज्जाहीना कैकेयी स्वयमेव चीराणी आनीय रामाय समर्प्य च परिधातुमुपादिशत्। रामलक्ष्मणौ स्वीयवस्त्राणि परित्यज्य चीरे परिहितवन्तौ। कैकेयी हस्तात् गृहीतकुशचीरा सीता भीता सती साश्रुनयना राममपृच्छत्—'वनवासिमुनयः कथं चीराणि परिदधते इत्यहं न जाने।' रामः सत्वरं सीतासमीपं गत्वा स्वयं तस्याः कौशेयवस्त्रोपरि चीरं बबन्ध। अन्तः पुरवासिललनागणः क्रन्दमानोऽब्रवीत्—वत्स! सीता वन-

वासिनी भवितुं नार्हति ; त्वयास्मदभ्यर्थना पूरणीया । जनकनन्दिनी सीता अत्रैव तिष्ठतु ।'

सीतां चीरधारणपरामवलोक्य राजगुरुर्वसिष्ठः क्रुद्धः सन् कैकेयीमुवाच—'कुलकलङ्किनि ! त्वं दुर्बुद्धिवशतः निजमर्यादामतिक्रम्य एतादृशकार्यप्रसक्तासि ! सीता किमर्थं वनं यास्यति ? सा तु रामसिंहासने प्रतिष्ठिता भविष्यति । सा चेद्वनं प्रयास्यति वयमपि सर्वे तदनुगामिनः भवेम । भरतशत्रुघ्नावपि परिहितचीरौ वनं यास्यतः । भरतः यदि दशरथनृपतेः पुत्रः तर्हि कदापि छलवशतः प्राप्तमिदं राज्यं न स्वीकरिष्यति । त्वया सह पुत्रवद्व्यवहारपरोऽपि न स्यात् । अतः त्वं स्वपुत्रस्यानिष्टकरकार्यासक्ता । सीताचीरवसनमनार्यं तस्यै उत्तमवस्त्रं दातव्यम् । राजकन्यया सह उत्कृष्टयानवाहने परिचारिकाश्च गच्छन्तु ।'

कैकेयी न किञ्चिदप्यूचे । पुरवासिनः प्रजावर्गश्च दशरथं प्रति 'धिक् धिक्' इति वदन्तः क्रन्दनपरा बभूवुः ।

दशरथोऽपि वसिष्ठवचनानुसारं कैकेयीं बहुविधं तिरस्कृत्य नरकभयं च दर्शयित्वा सीताया वनगमनवारणं कर्तुमयतत । परन्तु सकलमप्यफलं संवृत्तम् । कैकेयी तूष्णीमासीत् । दशरथोऽपि असहाय इव 'हा राम !' इति वदन् भूमौ पतितः ।

किञ्चित्स्वस्थं दशरथं रामः सविनयमुवाच—'मम यशस्विनी वृद्धा माता देवी कौसल्या न खलु नीचप्रकृतिः, सा कदापि भवदाक्रोशपरा नासीत्। अस्मद्विरहेण च सा गभीरशोकसागरे मग्ना। अतः भवता तस्या न किमपि दुःखं देयम्। मयि वनं प्रयाते भवता तथा यतितव्यं यथा मद्विरहेण सा स्वप्राणत्यागं न कुर्यात्।'

## रामस्य वनगमनम्

रामवचनं कर्णीकृत्य दशरथः केवलं 'राम' इत्येवोच्चार्य शोकेनाचेतनोऽभूत्। अथ किञ्चिदाश्वस्य सारथिमुक्तवान्—'सुमन्त्र! उत्तमाश्वसंयोजितं रथमुपनय। रामः दिनत्रयपर्यन्तमिमं रथमारुह्य जनपदाद्बहिर्गच्छेत्। लोकः पश्यतु यत् वीरं साधुचरितं च पुत्रं पिता निर्वासयतीति।'

सुमन्त्रः रथं सज्जीकृत्यानीतवान् इतिश्रुत्वा दशरथनृपतिः कोशाध्यक्षमादिदेश—'त्वया शीघ्रं विदेहनन्दिनीकृते चतुर्दशवर्षपर्यन्तमुपयुक्तानि महामूल्यवसनानि उत्कृष्टभूषणानि च आनेतव्यानि।'

समानीतैर्विविधवसनभूषणैः विभूषिता सीता बालादित्य इवालोकिताखिलाशा बभासे। कौसल्या तामालिङ्ग्य शिरस्याघ्राय चागादीत्—'पुत्रि! या नार्यः स्वामिना निरन्तरमादृताः सत्यः विपत्काले तं न सम्मानयन्ति ताः लोके न भजन्ते सती पदवीम्।....त्वया मम वनौकाः पुत्रो नापमाननीयः। सर्वास्वपि अवस्थासु अयं तव देवतुल्यः।'

कौसल्यायाः धर्मार्थसम्भृतं वचनं निशम्य सीता कृताञ्जलि-पुटा तामब्रवीत्—'यत्किञ्चिद्भवत्या आदिष्टं तदहमक्षरशः अनुसरेयम्। स्वामिनं प्रतिकर्तव्यविषये मातापितृभ्यां पर्याप्तोपदेशः कृतः। मया गुरुमुखात् पतिव्रतानां साधारणविशेषधर्मविषयेऽपि श्रुतमास्ते। 'नारीणां पतिरेवैकमात्रं दैवतम्' इति यदुच्यते तदपि जाने। यथा तन्त्रीहीना वीणा न वाद्यते यथा वा चक्रविहीनो रथः न चलति तथैव पतिभक्तिविहीना नारी शतपुत्रापि न सुखी भवितुमर्हति। माननीये! मातापितरौ भ्रातरः पुत्राश्च सर्वेऽपि परिमितमेव सुखं दातुं शक्नुवन्ति; केवलं स्वामी एवापरिमितसुखस्य दाता। अत एव का नारी पतिपूजामकृत्वा स्थातुमलं स्यात्? कदाप्यहं स्वामिनः अवमाननां न कुर्याम्।' सीतावचनं निशम्य कौसल्या शोकसान्त्वनाजन्यमश्रुजलं निःशब्दं चक्षुर्भ्यामपातयत्। मातरं प्रदक्षिणीकृत्य रामो जगाद—'मातः! भवत्या शोकावरोधपूर्वकं पितुः पर्यवेक्षणं कार्यम्। अस्मद्वनवाससमयः पश्यतामेव सर्वेषां शीघ्रमेव समाप्तिमेष्यति। तदैव भवती अस्मान् कुशलिनः बन्धुवर्गपरिवृतानिहसमागतान्द्रक्ष्यति।' इत्यभिधाय रामः जननीपादयोः पपात। अनन्तरं स सार्धत्रिशदुःखित*

* पूर्वं अस्माभिः दशरथ नृपतेः ३५० स्त्रीणां विषये पठितम् (वाल्मीकिरामणे अयोध्याकाण्डम्, चतुर्विंशः सर्गः त्रयोदश श्लोकः) पुनः महाकविरचितरामायणे अयोध्याकाण्डे दशरथस्य सप्तशतमहिषीणां

विमातृः लक्ष्यीकृत्य कृताञ्जलिः करुणस्वरेणाब्रवीत्—'हे जनन्यः! नियतं एकत्रवासकारणात् अज्ञानवशतः यदि भवतीरुद्दिश्य परुषवचनं प्रोक्तवानस्मि, अथवा केनापि प्रकारेण अनिष्टमाचरितवान् तदर्थं क्षन्तव्योऽस्मि।' रामस्य करुणवचनं निशम्य विमातृगणः क्रौंचीवत् आक्रोशं कर्तुमारब्धाः। दशरथस्य यद्वासगृहं पूर्वं मुरजपणव मेवनादप्रभृतिवाद्यानां मधुरध्वनिभिर्मुखरितमासीत् तदिदानीं महिलाक्रन्दनध्वनिप्रतिध्वनितमभूत्।

रामः सीतालक्ष्मणाभ्यां सह कैकेयीं मातरं वन्दितुं प्रयातः सा तेषां प्रणामस्वीकारं तूष्णीमेव कृतवती। ततस्ते सुमित्रामातरमपि प्राणंसिषुः। सुमित्रा सीतारामौ आशिषा संयोज्य लक्ष्मणमभाषत—'वत्स! त्वं रामेऽत्यन्तमनुरक्तः अत एव वनगमनमनुमन्ये। त्वमप्रमत्तः सन् रामसेवापरो भवेः।

---

विवरणं प्राप्यते। दशरथस्य पत्नीसंख्यासंबन्धे नास्त्यस्माकं किमपि कुतूहलम्। केवलमयमेव प्रश्नः मनसि उद्भवति। अपि तस्य सर्वा अपि पत्न्यः अपुत्रकाः आसन्? सर्वेष्वपि रामायणेषु केवलमिदमेव दृश्यते—दशरथनृपतेः सतीष्वपि कौसल्यादिषु तिसृषु राज्ञीषु वृद्धावस्थापर्यन्तं सोऽपुत्रक एवासीत् इति कृत्वा यज्ञं कृतवान् यत्फलस्वरूपं तिसृणां गर्भेभ्यः चत्वारः पुत्रानलभत।

'रामं दशरथं विद्धि मातरं जनकात्मजाम् ।
अयोध्यामटवीं विद्धि गच्छ तात ! यथा सुखम् ॥'

## रामस्य वनयात्रा

अथ सारथिः सुमन्त्रः विनीतभावेनोक्तवान्—'महायशस्विन् राजपुत्र ! स्वस्ति भवते ! प्रस्तुतोऽस्ति रथः यत्रैव गन्तुमादिशसि तत्रैव त्वां प्रापयामि । रथमारोहतु भवान् । अद्यप्रभृत्येव युष्मद्वनवासः प्रारभ्यते ।'

रामाज्ञया सीतादेवी वेशभूषोपलक्षिता सती रथमारूढा । सीतासकलवस्त्राभरणानि, विविधास्त्राणि वर्मचर्मपेटिका इत्यादिषु रथोपरि स्थापितेषु रामलक्ष्मणावपि रथमारुह्योपविष्टौ ।

सुमन्त्रेण रथः प्रचोदितः रामं वनवासार्थं प्रयान्तमवलोक्य साबालवृद्धं सर्वेऽपि नगरवासिनः रथस्यपश्चादन्वधावन् । अनेके रथपार्श्वपृष्ठदेशं चाश्रित्य साश्रुनयनाः अब्रुवन्—'सुमन्त्र ! शनैः रथं चालयतु भवान् । एकवारं रामं दिदृक्षवो वयम् ; कतिपयक्षणानन्तरमेव सोऽशक्यदर्शनो भवेत् । धर्मनिरता विदेहदुहिता सीतादेवी स्वामिनमपरित्यज्य समीचीनमेव कृतवती ! धन्योऽसि सुमित्रानन्दन ! तवेयं सुबुद्धिरिहपर्याप्तैश्वर्यस्य परत्र च स्वर्गप्राप्तेर्हेतुः भवेत् ।' पौरवासिनयनाश्रुजलेनाध्वधूलिः सिक्तेवाजायत । तेषां हाहाकारशब्देन च गगनमण्डलं विदीर्णमिव ।

शोकविह्वलो दशरथनृपतिः दुःखार्तललनापरिवृतः सन् 'प्रिय-पुत्रं द्रक्ष्यामि' इति भाषमाणः प्रासादाद्बहिर्निर्गतः। रोरुद्यमानं दशरथं महिषीगणं च राजपथेऽवलोक्य व्याकुलीभूतो जनसमुदायः कोलाहलपरो बभूव। 'दशरथनृपतिः माता कौसल्या च प्रमत्ताविव पादचारिणावायातः' इति रामो दृष्टवान्। असहनीयं चासीदेतादृशं दृश्यं रामस्य कृते। साश्रुनेत्रः स 'सत्वरं रथं चालयेति सुमन्त्र-मभाषत।'

माता कौसल्या रामस्याभिमुखं हा राम! हा सीते! हा लक्ष्मण! इत्याक्रोशपरा दशरथश्च 'रथमवरुन्धि' इति वचनपरो-ऽभूत्।

आर्तनादं कुर्वन्तौ पितरौ अतिदीनभावेन पादचारिणावेव समा-यातावित्यवलोक्यातिव्याकुलो रामः तस्यामेव दिशि असकृत् दृष्टिपातं कुर्वन् गद्गदकण्ठेन सुमन्त्रमब्रवीत्—'पितरौ राजपथे धूलिधूसरितौ सार्तनादं पद्भ्यामेवागच्छतः' इति मम हृदयं विदीर्णमिव जायते अतः वेगेन रथं चालय; विलम्बो मदर्थमतीव कष्टकारकः।'

रामवचनात् साश्रुनयनः सुमन्त्रः रथं द्रुतगत्या चालयामास। अनुगच्छन्तो रुदन्तश्च नगरवासिनः सुमन्त्रानुरोधेन प्रतिनिवृत्ताः। मन्त्रिगणः दशरथमूचे—'यस्य प्रत्यावर्तनमिष्टतरं तस्यातिदूरपर्यन्त-मनुगमनं नोचितम्।'

## दशरथस्य पुत्रविरहः ।

मन्त्रिगणस्य सयुक्तिकवचनं निशम्य दशरथः महिलागणेन सह विषण्णवदनः घर्मक्लिन्नकलेवरः यावद्रथधूलिदर्शनं शक्यमासीत् तावत्तामेव दिशं विषण्णदृष्टिरवलोकयन् स्थितः । ततः 'हा राम !' इति वदन्नेव मूर्च्छितः सम्पतितः । शोकार्ता कौसल्या तस्य दक्षिण-करं गृहीत्वा तमुदस्थापयत् । कैकेयी च वामपार्श्वे स्थिता आसीत् । कैकेयीमवलोक्य राजा दशरथः दृप्तकण्ठं भ्रुकुटिमुन्नमय्योक्तवान्— 'पापिष्ठे ! मां मा स्प्राक्षीः नाहं तव मुखदर्शनमीहे । न त्वं मम पत्नी नाप्यात्मीया ! परित्यक्तासि त्वं मया । यदि त्वद्गर्भजातो भरतः अधि-गतराज्यः सन् सुखिनं मन्यो जायेत तथापि मामुद्दिश्य तत्प्रदत्तं पिण्डा-दिकं नास्मद्भोग्यं भवेत् ।'

दशरथनृपतिः गच्छन् विलापपरो वक्तुमारभत—'मम यः पुत्रः चन्दनचर्चितः उत्तमाङ्गनागणैश्च व्यजनैः सेवितः, उत्कृष्टोपधानविनि-हितशिराः शयनपरो बभूव, अद्य स वृक्षतले भूमिशय्यापरो भवेत्, काष्ठप्रस्तरोपरि विनिहितमस्तको वा निद्रां गच्छेत् । राजनन्दिनी सीता व्याघ्रादिश्वापदानां भयंकरगर्जनाभ्यो भीता विगतनिद्रैव रजनीं यापयिष्यति । कैकेयि ! इदानीं तव मनोभिलाषः पूर्णतां यातः । अधुना विधवा सती राज्योपभोगं कुरुष्व । रामविरहितोऽहं अधिकं जीवितुं नेच्छामि ।'

दशरथः इत्थं क्रन्दमानः पत्नीभिः स्नापितः दग्धशरीरव्यक्तिरिव दुःखितचित्तः रामसीतालक्ष्मणशून्यं राजभवनं प्रविष्टः द्वारपालांश्च दीनस्वरेणोक्तवान् —'यूयं मां राजजनन्याः कौसल्यादेव्या आवासं प्रापयत। अन्यत्र क्वापि अस्मद्हृदयज्वालाशान्तिरसम्भवा।'

कौसल्या-प्रासादं प्रविश्य दशरथः शिरसिनिहितहस्तो 'हे राम! परित्यक्तोऽस्मि त्वया' इत्युक्त्वा उच्चैः क्रन्दितुमारेभे। उक्तवांश्च—'अहा! धन्याः खलु ते ये रामप्रत्यागमनपर्यन्तं जीविता भवेयुः, तं च समालिङ्ग्य तद्दर्शन पराः स्युः।'

क्रमशः शोकनिमग्नस्तस्या एव कालरात्रेरर्धभागे व्यतीते दशरथोऽब्रवीत्—'कौसल्ये। ममदृष्टिशक्तिः रामेण सार्धं प्रयाता अद्यापि न प्रत्यागता; त्वां द्रष्टुमसमर्थोऽहम्। त्वं हस्तेनैव मां स्पृशेः।'

कौसल्या दशरथसमीपमुपविष्टा तस्य च गात्रं हस्तेन परामृशन्ती अधिकतरं च दुःखिता सती अतिघननिःश्वासपरा बहुविधं विलपितुमारेभे।

इति दिव्यरामायणेऽयोध्याकाण्डम्।

# ॥ अरण्यकाण्डम् ॥

## नर्मदानदीतीरे

रामं वनगमनतत्परमवलोक्य अनेकेऽयोध्यावासिनः परित्यक्त-स्त्रीपुत्रधनसम्पदस्तमनुययुः । रामस्तान्प्रतिनिवर्तयितुं अनुरुन्धन् सस्नेहमुक्तवान्—'अतिदूरमागता यूयम् । निवर्तध्वमिदानीमयोध्यां प्रति । युष्मद्दर्शनेन स्त्रीपुत्रगणा आर्तनादपराः सन्ति । मामुद्दिश्य युष्मदनुरागतः मुग्धोऽहम्; परं भरतं प्रति अस्मदपेक्षयापि अधिक-सम्मानपरा भवत । तेनाहं प्रीतःस्याम् ।'

रामचन्द्रस्येदमखिलं करुणसान्त्वनावचनं निशम्य वृद्धो ब्राह्मण-गणः जगाद—'त्वं ब्राह्मणानां हितकारीति कृत्वा यज्ञाग्निं वहन्तो वयं त्वामनुगमिष्यामः । त्वं राजछत्रं नाधिगच्छेर्नाम, किन्तु अस्मत्कृत-वाजपेययज्ञलब्धच्छत्रेण तव मस्तकमाच्छादयामः । अस्माकं वेद-मन्त्रानुसारिणी बुद्धिरिदानीं त्वदनुगामिनी संवृत्ता । अस्मत्पलितमस्तकं धूलिलुण्ठितं विधाय प्रार्थयामः । निवर्तस्व अयोध्याम् । वत्स ! ब्राह्मणैरनेके यज्ञाः समारब्धाः; त्वयि निवृत्ते एव तादृशयज्ञसमाप्तिर्जायते ।'

ब्राह्मणानां करुणावस्थामवलोक्य रामसीतालक्ष्मणा रथादवतीर्य पादचारिणः सन्तः वनाभिमुखं गन्तुं प्रवृत्तौ । कियद्दूरगमनानन्तरं

प्रबलप्रवाहा तमसा नदी तेषांगत्यवरोधं कृतवती। रामः एतन्नदीतीर एव रात्रियापनसंकल्पं कृतवान्। सुमन्त्रः रथवहनक्लान्तानश्वान् रथाद्वियोज्य तानार्द्रपृष्टांश्च कृत्वा सरित्तटे यवसभक्षणार्थं मुमोच।

अथ सन्ध्यासमये जाते तदुपासनानन्तरं रामः लक्ष्मणमब्रवीत्— 'भ्रातः! अद्यैवास्माकं वनवासस्य प्रथमा रजनी। यद्यपि वने प्रचुरफलमूलादिकं विद्यते तथाप्यत्र केवलं जलपानेनैव रात्रिं यापयामः। त्वमावाभ्यां सार्धमागत इति योग्यमेवजातम्। नोचेत्सीतापर्यवेक्षणार्थं महती चिन्ता स्यात्। पित्रोरवस्थां विचिन्त्यापि मम कष्टं जायते। अस्मत्कृते क्रन्दन्तौ तौ तु मृतप्रायौ भवेताम्। अदूरत एव अयोध्यावासिनोऽपि निद्रिताः सन्ति।'

अधिका रात्रिर्जाता इति कृत्वा लक्ष्मणः सुमन्त्रसहायतः वृक्षाधःस्तले रामसीतार्थं पर्णशय्यां विरचितवान्। तयोस्तत्र निद्रितयोः लक्ष्मणः धनुर्बाणहस्तो जाग्रदेव सुमन्त्रसमीपं रामस्य विविधगुणवर्णनपरोबभूव।

रात्रिशेषे निद्रोत्थितः रामो लक्ष्मणमुवाच—'पश्य अयोध्यावासीनः ब्राह्मणगणाश्च अस्मान्कदापि न परित्यक्ष्यन्ति। इदानीमपि ते सुप्ताः सन्ती। तन्निद्राभङ्गात्पूर्वमेव इतोऽस्माकमन्यत्र गमनमुचितम्।' रामस्येच्छां परिज्ञाय सुमन्त्रेण सत्वरं रथः सज्जीकृतः, अस्त्रशस्त्रादिकं च रथे स्थापयित्वा च [illegible] सह कियद्दूरपर्यन्तं अयोध्या-

 

भिमुखं प्रयातः । ततश्च ते तमसानदीमुत्तीर्यापरपारं गताः ; अयोध्यावासिनां च दिग्भ्रममुत्पादयितुं विभिन्नदिशया रथं संचाल्य पुनः वनं प्रति प्रस्थिताः । प्रभाते निद्राभङ्गे पुरवासिनः ब्राह्मणगणाश्च श्रीरामचन्द्रमनवलोकयन्तः निजमदृष्टं धिक्कृत्य रथनेमिमनुसृत्य क्रमशोऽयोध्यामेव प्रत्यागताः ।

## पितृनिन्दाश्रवणे रामस्य दुःखम्

प्रभाते प्रातःकृत्याद्यनन्तरं राजरथो निबिडमरण्यमतिक्रम्य कोसलराज्यं प्रविष्टः । मार्गमुभयतः नयनमनोहराः पुष्पितवृक्षाः, कर्षितानि क्षेत्राणि समृद्धाश्च ग्रामा आसन् । ग्रामवासिनः भाषितुमारब्धाः—'धिक् कामासक्तं दशरथनृपम् ! हा ! स्त्रियं प्रीणयितुं रामसदृशं धार्मिकपुत्रमपि वनं प्रेषयति ।'

पितृनिन्दाश्रवणेन अतिव्यथितमानसो रामः सुमन्त्रं वेगेन रथसञ्चालनायादिदेश । रथः कोसलराज्यसीमानमुल्लङ्घ्य वेदश्रुतिं, गोमतीं स्यन्दिकां च नदीरतिक्रम्य क्रमशः शृङ्गवेरपुरस्यानतिदूरं गंगातीरमागतः । रघुवरः सारसक्रौञ्चगणकलरवमुखरितां आवर्तमालासमन्वितां पूतसलिलां तीर्थमयभागीरथीमवलोक्य विशेषतः प्रमुदितोऽभूत् ।

ते रथादवरुह्य सुरनिम्नगां प्रणिपत्य कस्यचिद्बृहच्छिशपावृक्षस्य मूले उपविश्य सारथिमुक्तवन्तः—'अद्य रात्रावत्रैवनिवासं करिष्यामः ।'

## निषादराजगुहमिलनम्

अस्य प्रदेशस्य शासकः श्रीरामचन्द्रस्य प्राणप्रियसखः निषादराजः राघवेन्द्रस्य वार्तामधिगम्य अतित्वरितं वृद्धामात्यगणैः सह फलमधुपुष्पादिकं गृहीत्वा भक्तिपूर्णमानसो रामदर्शनार्थमागतः रामस्य पुरतः सर्वोपहारान् स्थापयित्वा कोटिलयनिषादाधिपतिर्गुहः साष्टांगपातं प्रणम्य राघवस्य चरणवन्दनमकार्षीत्। राघवः सत्वरं गुहमुत्थाप्य तमालिङ्गनपाशबद्धमकरोत्। गुहः कुशल प्रश्नानन्तरं कृताञ्जलिपुटो राममुवाच—'हे त्रिलोकपावन! अद्यधन्योऽस्म्यहम्! सार्थकं खलु मे निषादजन्म। हे रघूत्तम! त्वदङ्गस्पर्शेन पवित्रोऽस्मि संवृत्तः। हे प्रभो! तव दासस्येदं निषादराज्यं त्वदधीनमेव। हे रघुवर! अत्रैवनिवासं विधाय अस्मान् पालय। आगम्यताम्, नगरं प्रविशाम, पवित्रीक्रियतामस्मद्गृहम्। इदं फलमूलादिकमङ्गीक्रियताम। हे शूरश्रेष्ठ! अहं तवदासः सेवकश्च।'

रामः प्रीतिपूर्णवचनमुक्तवान्—'तवेदं राज्यमस्माकमेव वर्तते; किन्तु मया चतुर्दशवर्षपर्यन्तं गृहे नगरे वा निवासः न करिष्यते। पितृसत्यपालनार्थं वनवासी संवृत्तोऽस्मि। त्वत्प्रदत्तं सर्वमपि मया स्वीकृतम। किन्तु अन्यप्रदत्तफलमूलादिकं उपभोक्तुं न शक्नोमि। त्वया पितुर्दशरथस्य प्रियतुरगार्थं किञ्चिद्यवसव्यवस्था कार्या सैवास्माकं पर्याप्तसेवा स्यात्।'

 

अनन्तरं रामः सायं सन्ध्यासमाप्त्यनन्तरं गंगाजलपानं विधाय वृक्षतले सुखमुपविश्य गुहेन सार्धं विविधविषयेषु विचारविनिमयपरो जातः। गुहेन आनीतं शय्यादिकं परित्यज्य रामः भूमावेव शयनमकार्षीत्। ततो गुहः विनीतभावेन उपस्थापितखाद्यपदार्थान् स्वीकर्तुं शय्योपयोगार्थं च लक्ष्मणं प्रार्थितवान्। लक्ष्मणस्तं जगाद—'बन्धुवर! रामः सीतयासह गंगाजलं निपीय भूशय्यायां स्वपिति चेत्कथंकारमहमेतादृशाहारशय्ये स्वीकुर्याम्। *

लक्ष्मणः उद्यतकार्मुकः सावधानं धनुष्पाणिना गुहेन सार्धं श्रीरामरक्षार्थमात्मानं नियुज्य परस्परं श्रीरामकथाप्रसङ्गेन रजनीमतिवाहितवान्।

## रामलक्ष्मणयोर्जटाधारणम्

रात्रौ व्यतीतायां प्रभाते च जाते विशालवक्षा महायशाः रामः सुमित्रानन्दनमुवाच—'भ्रातः! वयं तीक्ष्ण प्रवाहायाः गंगायाः पारं गच्छेम, त्वं गुहं नौकानयनार्थं कथय।' अनन्तरं स गुहमुवाच—'अस्मिन्सजने वनेऽस्माकं वासो नोचितः। इदानीं तपस्विवेशेन

---

* कृत्तिवासरचितरामायणमतेन रामचन्द्रः सीतालक्ष्मणाभ्यां सह दिनमेकं गुहगृहे न्यवसत्। समर्पितफलमूलादिकं च स्वीकृत्य गुहमानसमानन्दयामास। परस्मिन्दिने गुहः नौकया तान् गंगापरतीरं नीत्वा भारद्वाजाश्रममानयामास।

आश्रमनिवासपराभवेम। बन्धो! त्वं जटासंस्कारार्थं वटक्षीरमानय।' गुहेन समानीतं वटक्षीरं रामलक्ष्मणौ शिरसि विलिप्य जटाः संस्कृतवन्तौ। मुनिवेशधारिणौ रामलक्ष्मणौ गुहोऽश्रुपूर्णनयनः प्रणम्योक्तवान्—'सुहृत्! सुदृढास्तरणा बृहतीनौका प्रस्तुतास्ते।'

रामं नौकारोहणोद्यतमवलोक्य सुमन्त्रः साश्रुनयनः कृताञ्जलिः प्रपच्छ—'हे राम! इदानीं मम कागतिःस्यात्?' सुमन्त्रवचनं निशम्य रामः तं दक्षिणहस्तेन संस्पृश्य उक्तवान्—'सुमन्त्र! त्वया शीघ्रं प्रतिनिवृत्य गन्तव्यम; प्रमादशून्येन च दशरथनृपति प्रतिगत्वा पित्रे मात्रे चास्मत्प्रणतिं समर्प्य नः कुशलं निवदनीयम्। वयमधुना पद्भिरेव महारण्यं प्रविशेम।'

## गङ्गापारं तथा भरद्वाजाश्रमे गमनम्।

रामवचनेन सुमन्त्रः व्याकुलीभूय क्रन्दनपरोऽभूत्। तं सान्त्वयन् रामो मधुरवचनमब्रवीत्—'त्वत्सदृशः इक्ष्वाकुकुलसुहृद् अपरः कोऽपि नास्ति। अत एव राजा दशरथः येन शोकाकुलो न भवेत् तदेव त्वया विधेयम्। मातरं पितरं विमातृश्च प्रति अस्मत्प्रणतिं निवेदय येन ते नास्मत्कृते शोकाकुला भवेयुः। चतुर्दशवत्सरानन्तरं अहमार्यगुणसम्पन्नो लक्ष्मणः सीता च अयोध्यां प्रत्यागत्य तेषां चरणप्रणतिं विधास्यामः। पिता भरतं शीघ्रं राजसिंहासने स्थापयतु। भरत च ब्रूहि—येन भवान् स्वजननीं कैकेयीदेवीं पूजयति तथैवावयोर्मातरौ

कौसल्यासुमित्रादेव्यौ अपि पूजयतु' सुमन्त्रोऽधोमुखोऽश्रुविसर्जनपरो बभूव।

इत्थं सुमन्त्रंप्रति विविधसान्त्वनावचनमुक्त्वा रामः धृतवर्मा गुहानीतनौकामारोढुं गंगातीरमाससाद। अस्त्रादिकं पेटिकाप्रभृति विविधसामग्री नौकायामारोपिता। रामः लक्ष्मणेन सीतया च सह तामेव सुदृढां नौकामारूढवान्। ज्ञातिगणेन सार्धं स्वयं गुहः नौकासञ्चालनतत्परो बभूव। मध्येगङ्गमेत्य जानकी गंगादेवीं प्रति कृताञ्जलिः प्रार्थितवती —'हे देवि! नमस्ते! अहमार्यपुत्रेण लक्ष्मणेन च सह वनवासात्प्रत्यावृत्य मांसप्रभृत्युपहारैः सादरं तव सपर्यां विधास्यामि।* तरणिः क्रमेण गङ्गादक्षिणतीरमाससाद। रामः लक्ष्मणः सीता च अस्त्रपेटिकादिभिः सह नौकातोऽवरुरुहुः। तदानीं गुहः बद्धाञ्जलिः राघवमुक्तवान्—'हे रामचन्द्र! अहं (पेटिकादिकं वहन्) त्वया सार्धं यास्यामि नो चेत् प्राणत्यागं कर्तास्मि।' मित्रवचनं निशम्य श्रीरामचन्द्रस्तमब्रवीत्—बन्धो! चतुर्दशवर्षपर्यन्तं दण्डकारण्यवासानन्तरं पुनरप्यत्र एष्यामि' इत्युक्त्वा गुहमालिङ्ग्य तं

---

*वाल्मीकिरामायणमतेन सीता मध्येगङ्गं तस्याः प्रार्थनापराभूत्—'हे देवि! अहं (वनवासानन्तरं) अयोध्यापुरीं प्रत्यागत्य सहस्रकलशसुरया तदुपयुक्तपरिमाणपलान्नेन च तवार्चनां सम्पादयिष्यामि। इदानीं त्वमस्मान्प्रति प्रसन्ना भव।'

विसर्जयामास। अनन्तरं रामलक्ष्मणसीता गङ्गातीरतः क्रमशः दक्षिण-दिशं प्रचलिताः। **

अथ रामः लक्ष्मणमब्रवीत्—'सजने निर्जने वा सर्वत्रैव त्वया सीतासंरक्षणार्थं सावधानेन भवितव्यम्। त्वमग्रतो मार्गपरीक्षणपरः स्याः सीतात्वामनुसरन्ती गच्छेत् अहं च युवयोः उभयो रक्षापरः अनुगामी भवेयम्।

---

** अनेके पृच्छन्ति रामसीतालक्ष्मणाः अन्यसहायं विनैव सीतायाः चतुर्दशवर्षपर्यन्तमुपयुक्तानि वस्त्रादीनि पेटिकां अस्त्रशस्त्रादीनि च कथं वोढुं समर्थाः? अयोध्यापरित्यागसमये रथे स्थापयित्वैव यावद्वस्तूनि नीतान्यासन्—प्रभूतशस्त्राणि तैः सहस्थितानि। केषुचिद्रामायणेषु दृश्यते निषादराजगुहनियुक्तवाहकगणैभरद्वाजऋषेराश्रम-पर्यन्तं सर्वाण्येतानि प्रापितानि। अनन्तरं भरद्वाजनिर्देशानुसारं चित्रकूटपर्वते ते रामनिवासार्थं पर्णकुटीरचनां चक्रुः। गोस्वामि तुलसिदास रामायणेऽवलोक्यते—गंगापारमागत्य यदा रामः गुहं नौकां नेतुमादिशत् तदा गुहः विनीतभावेन प्रार्थयामास—'हे रघुकुलमणे! मामपि गृहीत्वा भवान्गच्छतु। अहं मार्गं दर्शयन् अग्रतो यास्यामि चिरं त्वच्चरणसेवापरश्च भविष्यामि। यस्मिन्नेव वने त्वं स्थास्यसि तत्र पर्णकुटीरचनां कृत्वा तवान्यादेशानुसरणमपि करिष्यामि।' गुहस्य दृढभक्तिमवलोक्य रघुवरः तमात्मना सार्धं नीतवान्। तुलसी-

## वत्सप्रदेशे प्रवेशः

क्रमशः सर्वेऽपि गहनारण्यं प्रविविशुः। यत्स्थानं वत्सदेशान्तर्गतमासीत् (प्रयागसमीपं यमुनोत्तरतीरे वत्सासुरस्य राज्यम्) अनन्तरं तत्र पवित्रपशुवधंविधाय तन्मांसरन्धनपूर्वकं होमं च कृत्वा हुतावशिष्टमांसं त्रयोऽपि ते भुक्तवन्तः। इत्थं सायंकाले सन्ध्याकृत्यादिकं समाप्य पर्णशय्यारचनापूर्वकं तां रात्रिमतिवाहितवन्तः।*

---

दासरामायणेऽपरमपि परिदृश्यते—देवगणा एव भिल्लकिरातादिवेशा एतादृशपर्णशालानिर्माणं चक्रुः।

* मूलवाल्मीकिरामायणे दृश्यते....

तौ तत्र हत्वा चतुरोमहामृगान् वराहमृष्यं पृषतं महारुरुम्।

आदायमेध्यं त्वरितं बुभुक्षितौ वासाय काले ययतुर्वनस्पतिम्॥

(४२-१०२)....गम्भीररजन्यां शोकाकुलरामः लक्ष्मणमब्रवीत्—'कैकेयीदेवी भरतमुपस्थितमवलोक्य साम्राज्यकामनया दशरथमहाराजस्य प्राणहानिमपि न चिन्तयेत्तदेवमङ्गलम्!....त्वमस्मिन्नेवक्षणे इतः प्रस्थितः अयोध्यां प्रति निवर्तस्व। अहमेकाकी एव दण्डकवनं यास्यामि।....नीचकार्यप्रवणा कैकेयीद्वेषवशातः त्वज्जनन्यै सुमित्रायै अस्मज्जनन्यै कौसल्यायै च विषमपि दातुं शक्नुयात्!....अहमधर्मात् परलोकतश्च भीतः सन् सम्प्रति स्वयं राज्याभिषिक्तो भवितुं न समर्थः।'

इत्थं बहुविधं विलपन् एव तस्य रात्रिर्व्यतीता।

अपरेद्युः प्रभाते प्रातःपूर्वाह्णिककृत्यसमाप्त्यनन्तरं ते सर्वे निबिडवनमार्गे गङ्गायमुनासङ्गमदिशा अग्रेसरा जाताः। मार्गश्रम-क्लान्ता जानकी अग्रतोगन्तुमसमर्था आसीत्। लक्ष्मणः मध्ये मध्ये वृक्षशाखांभङ्क्त्वा सीताशीर्षोपरिधृतवान्। मार्गभ्रमणेऽनभ्यस्ता सीता तच्छायायां शनैः गन्तुं प्रवृत्ता। केषुचित्स्थानेषु नारीगणस्तया सह मृदुवचनैर्वार्तालापं कुर्वन् श्यामसुन्दररामचन्द्रस्य परिचयजिज्ञासां कृतवान्। नतमस्तका मृदुस्मिता सीता तत्कृतप्रश्नानां समाधानं कृतवती।

सन्ध्यासमये रामोऽब्रवीत्—'पश्य लक्ष्मण! प्रयागतीर्थं समीपमेवेति मन्ये। चतुर्दिक्षु धूमः उत्तिष्ठति। अदूरमेव कस्य-चिदृषेराश्रम आस्ते; जलोच्छ्वास शब्दोऽपि श्रूयते।'

क्रमेण ते गङ्गायमुनासङ्गमस्थले भरद्वाजमुनेराश्रममुपास्थिताः। श्रीराम आगत इति श्रुतमात्रे भरद्वाजस्तेषां स्वागतं विधायोक्तवान्—'हे रघुनन्दन। त्वामभ्यागतं वीक्ष्य अस्मच्चिरतपस्या सफलीभूता त्वं विष्णोरवतार इत्यहं जाने। अकारणमेव त्वं निर्वासित इत्यपि मया श्रुतम्। एतयोरेव महानद्योः सङ्गमस्थानं निर्जनं पुण्यप्रदं रमणीयं च। अत्रैव त्वया सुखेन वस्तव्यम्।'

भरद्वाजऋषेर्वचनं निशम्य राम उवाच—'मुनिवर! भवता अत्यादरेण सम्मानितोऽस्मि। अस्मिन्स्थाने निवासविषये च यदुक्तं

भवता तदपि अत्यधिकप्रीतिपूर्णम् । किन्तु भगवन् ! अस्मादाश्रमादयोध्या नातिदूरम् । अयोध्यावासिगणाः विशेषतः भरतप्रभृतिरात्मवर्गः वैदेहीमावां च द्रष्टुमिहागन्तुं शक्ष्यन्ति । अतः अस्मिन्स्थाने निवासं नाभिलषामि । भवानेतादृशं किमपि निर्जनं स्थानमुपदिशतु यत्र वयं सुखपूर्वकं निवत्स्यामः ।'

भरद्वाजोऽब्रवीत् —'वत्स । अस्मात्स्थानात् दशक्रोशान्तरे पुण्यात्ममहर्षिगणैः ऋक्षगोलाङ्गूलवानरगणैश्चाध्युषितं 'चित्रकूट' नामैकं शुभदर्शनं पवित्रं स्थानं विद्यते तत्रैव भवान्निवसतु ।' अनन्तरं रात्रौ भरद्वाजप्रदत्तं फलमूलाद्याहारं विधाय ते निर्दिष्टवासस्थाने क्षमां क्षपयामासुः ।

## चित्रकूटगमनम्

अपरस्मिन्दिवसे प्रातः रामः भरद्वाजसमीपमागत्योक्तवान्— 'भगवन् ! आश्रमेऽस्माभिः सुखेन रात्रिः यापिता । इदानीं भवानस्माकं नूतनवासस्थानं निरूपयतु । भरद्वाजोऽगादीत् — 'त्वं मधुमूलसमन्वितं पुण्यप्रदं विविधवृक्षैर्गजैश्चसमाकीर्णंकिन्नरीसेवितं च चित्रकूटपर्वतं गच्छेः । तत्र सीतया सार्धं भ्रमन् सरितः प्रस्रवणानि, गभीरसंकीर्णा उपत्यकाः कन्दरान्, निर्झरसमूहांश्चेक्षमाणाः आनन्दितः स्याः । इत्युक्त्वा मुनिवरः तान् मार्गनिर्देशं विहितवान् ।

## सीतायाः श्यामवटपूजा

तदनु भरद्वाजचरणवन्दनपूर्वकं ते त्रयोऽपि चित्रकूटाभिमुखं प्रतस्थिरे। यमुनातीरमागत्य मुनिकुमारकृतप्लवे यथास्थानं पेटकमन्य-द्रव्यादिकं च स्थापयित्वा त्रयोऽपिप्लवमारुह्य वहित्रेण नदीपारं गताः। यमुना तत्र त्रिंशता चत्वारिंशता वा हस्तैः परिमितायामा अगभीरा-चाभूत्। अथ वनमध्ये गच्छन्तः नदीतीरवर्तिनं 'श्याम' नामक वट-वृक्षसमीपं ते समुपस्थिताः। सीता अस्य वटवृक्षस्य पूजां प्रदक्षिणं च कृत्वा युक्तहस्ता 'अस्माकं वनवासः निर्विघ्नः भवतु' इत्यभ्यर्थनां कृतवती। क्रमेण पुष्पितवनस्थल्याः सौदर्यमीक्षमाणास्ते क्रोशात्मक-मार्गमतिक्रम्य विचित्रवालुकाभूषितं, हंससारसादिपक्षिणां कलगान-मुखरितं यमुनातीरमासाद्य रामलक्ष्मणौ अनेकमेध्यपवित्रमृगान्हत्वा आनीय च भोजनं कृतवन्तः।

शान्तिपूर्वकं रजनीमतिवाह्य प्रातः पवित्रयमुनातीरे पूर्वाह्णकृत्या-दिकं समाप्य ते चित्रकूटाभिमुखं प्रस्थिताः मार्गे पुष्पितकिंशुगपादपान् फलभारनतभल्लातकबिल्ववृक्षान् प्रत्येकवृक्षे च मधुमक्षिकाभिः सञ्चितं द्रोणपरिमाणं लम्बितमधुचक्रमवलोक्य सीता विशेषेण प्रमुदिता बभूव। चित्रकूट*पर्वतमुपस्थितो रामः लक्ष्मणमुक्तवान्—'अस्मिन्नेव पर्वते महात्मानो मुनिगणा निवसन्ति, अतो वयमपि अत्रैव निवत्स्यामः।

* बुन्देलखण्डे 'कामता' पर्वतः 'चित्रकूट' इति ज्ञातुं शक्यते। 'इलाहाबाद-मानिकपुर- झांसीरेलमार्गे 'चित्रकूट' नामक

## वाल्मीकेराश्रमः**

अनतिदूरे ते वाल्मीकेर्मनोरममाश्रमपदमवालोकयन् । —

" इति सीता च रामश्च लक्ष्मणश्च कृताञ्जलिः ।

अभिगम्याश्रमं सर्वे वाल्मीकिमभ्यवादयन् ॥

तान्महर्षिः प्रमुदितः पूजयामास धर्मवित्

आस्यतामितिचोवाच स्वागतं तं निवेद्य च "

(५६ सर्गः, १६-१७ वा, रा.)

अथ ते स्वकीयपरिचयं दत्वा 'वयं पित्राज्ञापालनार्थं चतुर्दश-वत्सरपर्यन्तं वनवासं कर्तुमत्रागता' इत्युक्त्वा वाल्मीकिमुनिं निवासार्थं किमपि योग्यस्थानं दर्शयितुं प्रार्थितवन्तः । एतच्छ्रुत्वा वाल्मीकि-रुक्तवान् — 'आगम्यताम्, युष्माकं वासस्थानं दर्शयिष्यामि' इति व्याहृत्य शिष्यगणपरिवृतो मुनिः पर्वतगङ्गयोर्मध्यवर्ति रमणीयस्थानमेकं तेषां निवासार्थं निर्दिदेश ।

तेषु निकटस्थ गुहायामेकस्यां वसत्सु कतिपयदिवसाभ्यन्तरमेव लक्ष्मणस्य तत्परतया द्वे रमणीयपर्णशाले निरमीयेताम् । सीता पर्ण-

..............................

मञ्जरथ स्थानं (Station) विद्यते (83 miles) समीप एव अनेक तीर्थस्थानानि सन्ति ।

** अप्ययं रामायणरचयिता वाल्मीकिः ? वाल्मीकि रामायणे-ऽपि रामवाल्मीकिर्मिलनस्पष्टतया उल्लेख आस्ते ।

शालयोः मृत्तिकादिलेपनां विधाय उभे अपि वासयोग्ये' कृतवती इत्य-वलोक्य रामः एकस्मिन्दिने लक्ष्मणमब्रवीत्—'वयं वास्तुसंस्कारविधान-पूर्वकं कुटीप्रवेशं कुर्याम। अथ रामस्यादेशेन लक्ष्मणः मृगं हत्वा मांस-रन्धनं च विधाय शुभमुहूर्ते गृहप्रवेशमकरोत्। सीता देव्या कुटीं परितः निर्मितया रुचिरपुष्पवाटिकया तत्स्थानमधिकतररमणीय-मजायत।

## सुमन्त्रस्य अयोध्या प्रत्यावर्तनम्

सुमन्त्रः गुहसकाशात् लब्धानुज्ञः उद्विग्नमना द्वितीय दिने सायंकाले अप्रसन्नः अयोध्यां प्रत्यागतः। सुमन्त्रं गृहीतशून्यरथमागत-मवलोक्य पुरवासिगण विलपितुमारब्धः। सुमन्त्रः बहिर्देशस्थापितरथः अश्रुपूर्णनयनः आवृतमुखः दशरथसमीपमेत्य 'इति तं सम्मानितवान्। सुमन्त्रमवलोक्य राजा स्तब्धः सन्निनगाद—'सुमन्त्र सीतालक्ष्मणाभ्यां सह मम नयनाभिराम रामं क्व परित्यज्यागतोऽसि? अहं तु पापात्मा! रामः मां किमुक्तवान्? अहं निर्दयः, सीतालक्ष्मणौ मां किमुक्तवन्तौ? हा राम! हा गुणनिधे! हा सीते! हा प्रियवादिनि! दुःखसागरे-मग्नोऽहम्, आसन्नमरणश्च मां किंनपश्यथ?' इत्थं राजा साश्रु-नयनः विलापं कर्तुमारेभे।

## दशरथस्य शोकः

राजानं सान्त्वयित्वा सुमन्त्रः बद्धाञ्जलिरुवाच—'रामसीता-लक्ष्मणान् रथेनारोपयित्वा इतः नीतवानहम्; तांश्च शृंगवेरपुरे गंगा-

तीरे परित्यज्य प्रत्यागतोऽहम्। गुहसहायेन रामलक्ष्मणौ वटक्षीर-मानाय्य विरचितजटाभारौ सीतया सह गंगापरतीरं गतवन्तौ। गंगा-पारगमनात्पूर्वं रामः मामुक्तवान्—'सुमन्त्र! पितरं प्रति अस्मत्प्रणा-ममर्पयित्वा त्वया स वक्तव्यः 'मा दुःखितो भूः। वने वयमयोध्यातो-ऽपि सुखितराः स्मः। मातरं प्रणम्य वक्तव्यम् 'अस्माकं कृते न कार्यं किमपि दुःखम्। शोकाकुलं पितरं सान्त्वयतु भवती।' हे नृपवर! सीता अश्रुपूर्णनयना गद्गदकण्ठ मामभाषत—'श्वश्रूश्वशुरश्रीचरण-कमलयोर्मम साष्टांगपातप्रणतिः समर्प्या' इत्येव व्याहृत्य साधोवदना क्रन्दन्ती प्रस्थिता। अनन्तरं ते सजलनयना नौकामारुरुहुः। गुह-स्तानपरतीरं नीतवान्। तान्गंगापारं कारयित्वा अहमतिदुःखितः सन् प्रत्यागतः।''

अथ कौसल्यारुदती राजानमवोचत्—'राजन्! त्वया स्व-प्रियभार्याकैकेय्यै वरोदत्तः, भवतु; तदात्मजायैव राज्यं दीयताम्; परं ममात्मजः किमर्थं निर्वासितः? स्वयमेवाखिलं विधाय पुनस्तव कीदृशोऽयं शोकः?

दशरथः कृताञ्जलिः कम्पितशरीरोऽधोवदनोऽब्रवीत्—'कौस-ल्ये प्रसीद! त्वं तु शत्रावपि सस्नेहासि तर्हि मां पुनः किमर्थं पीडयसि? अस्मत्प्राणाः इदानीमेव निर्गमिष्यन्ति।'

दशरथस्य बद्धाञ्जलिकरौ स्वमस्तके स्थापयित्वा कौसल्या रुदती निजगाद—'महाराज ! मत्समीपं तवाभ्यर्थनं मृत्युतुल्यम् । पुत्रशोकेन स्खलितधैर्या सत्यहेव त्वां प्रति कठोरवचनमुक्तवानहम् । क्षमस्व माम् ।

## दशरथस्यानुतापः ।

रामवनवासस्य षष्ठी रात्रिः अयोध्यायां कालरात्रौ परिणता बभूव । मध्यरात्रौ दशरथः क्रन्दन् कौसल्यामुवाच, कल्याणि ! पुरा कृतपापार्थमेको मुनिः मां शप्तवान् । विवाहात्पूर्वमहं यौवनमदमत्तः मृगयासक्तः रजन्यां नदीतीरे निबिडारण्ये धृतशरासनः विचरन्नासम् । कोऽपि मुनिः तृषार्तमातापितृभ्यांकृते जलानयनार्थं सरयूनदीमेत्य कलसीमपूरयत् । अन्धकारे जलपूरणशब्दं गजजलपानध्वनिं मन्यमानः तं शब्दं लक्ष्यीकृत्य शब्दवेधिबाणं क्षिप्तवानहम् । तदैव 'हा ! ममहत्यामकार्षीः' । मनुष्यकृतमिममार्तनादं निशम्य त्रस्तोऽहं तत्रोपस्थितः । जटाजूटधारिणं तापसबालकमेकं शरविद्धमार्तनादपरमद्राक्षम् । मां पश्यन्नेव स तापसः करुणस्वरेण जगाद, 'राजन् ! किमर्थं मां हतवानसि ? कस्तवापराधोमया कृतः ? अहमन्धमातापितृकृते जलाहरणार्थं नदीमागतः । त्वया तु एकेनैव बाणेन त्रीनपि अस्मान्हतवानसि ! तौ पिपासार्दितौ जलार्थं प्रतीक्षमाणौस्तः । त्वया शीघ्रं गत्वाऽयं संवादः श्रावणीयः । पिता च प्रसाद्यः । नो चेत्स्त्वामभिशापेन भस्मसात्करिष्यति । हा ! न सोढुं शक्नोमीमां भीषणयन्त्रणाम् ! त्वया विद्धः

शीघ्रमुद्धरणीयः' इत्यभिधाय स ऋषिबालकः शरयन्त्रणयातीव व्याकुलितोऽभूत्। तापसकुमारः क्रमशोऽवसन्नः पतितः। मां शरोद्धरणे विलम्बपरमवलोक्य बालकः क्षीणस्वरेणाब्रवीत्—'राजन्! त्वया ब्रह्महत्यापातकान्न भेतव्यम्। नाहं ब्राह्मणः अपितु वैश्यपितुः शूद्रामातृगर्भतः उत्पन्नोऽहम्।' निशम्येदं मया स तीक्ष्णः शरस्तस्य मर्मस्थलादुद्धृतः। तत्क्षणमेव मुनिकुमारकोऽपि मर्मभेदिनमार्तनादं कृत्वा प्राणान्विजहौ।

## अन्धमुनेः शापः

अहं तापसकुमारकलसीं जलेन पूरयित्वा भीतभीतः आश्रमं प्रविष्टः। अस्मत्पदशब्दं निशम्य उत्थानशक्तिशून्यो वृद्धतापसः क्षीणस्वरेणाभाषत—'पुत्र! शीघ्रं जलं दीयताम्। कण्ठगताः खलु प्राणाः पिपासया। कुत ईदृशो विलम्बः? पुत्र? किमर्थं न भाषसे? त्वमेव वृद्धमातापित्रोः एकमात्रावलम्बः।' मया तदानीं कृताञ्जलिपुटेन कम्पितस्वरमभिहितम्, 'तपोधन! अहं पापिष्ठो राजा दशरथः; नास्मि तव पुत्रः। अज्ञानतो मयायमपराधो विहितः। अज्ञानतो मयायमपराधो विहितः। अहमेव त्वत्पुत्रघातकः। मयि प्रसन्नो भवेः।'

मया सविस्तरं पुत्रनिधनवार्तायां श्राविताायां वृद्धतापसोऽब्रवीत्—'राजन्! त्वया चेत्पापकर्मणः प्रवृत्तिः स्वयं नादास्यत

तर्हि तवमस्तकं शतधा विदीर्णमभविष्यत्! इदानीं यत्रास्मत्पुत्रः तिष्ठति तत्रैवास्मान्प्रापय।' अहं तावुभावपि सरयूतीरे नीतवान्; तावुभावपि पुत्रदेहं समालिङ्ग्य बहुविधं विलेपतुः।

अनन्तरमन्धमुनिः तत्पत्नी च जलं गृहीत्वा तर्पणमकार्ष्टाम्। तदानीं मुनिपुत्रः धृतदिव्यशरीरः स्वर्गं प्रस्थितः। वृद्धमुनिर्मामगादीत्—'राजन्! त्वरितं चिता निर्मीयताम्। आवां पुत्रविरहं सोढुमसमर्थौ। या गतिरस्मत्पुत्रस्याजायत सैवास्माकमपि भवेत्।

## दशरथस्य मृत्युः

चितां निर्माय वृद्धतापसनिर्देशानुसारं प्रथमं तत्र पुत्रं स्थापितवानहम्। अनन्तरं वृद्धोमुनिः मुनिपत्नी च चितामारुह्य तां प्रज्ज्वालयितुमादिदिशतुः। चितायां प्रज्ज्वलितायां वृद्धमुनिरगादीत्—'अहं अभिशाप प्रयच्छामि 'अहमिव त्वमपि पुत्रशोकेन प्राणांस्त्यक्ष्यसि।'

एतदुपाख्यां समाप्य राजादशरथः कौसल्यामुवाच। इदानीं मम शापोपभोगसमयः उपस्थितः। अवसन्नं मे शरीरम्। हा पुत्र! राम! सीते! हा गुणाकर लक्ष्मण! युष्मद्विरहेण मया प्राणत्यागः कर्तव्य आसीत्।' इत्थं विलप्य क्षपावशेषे शोकाकुलो दशरथः प्राणांस्तत्याज।

## तैलकटाहे मृतदेहरक्षणम्

अयोध्यावासिनां कृते सा रात्रिः दीर्घा शोकावहा चाजायत कौसल्यादिर्दशरथस्य पत्नीगणः कराभ्यां शिरस्ताडनपूर्वकं चक्रन्द।

पुरवासिगणश्च दशरथं परिवेष्ट्य रुरोद । रोदनशब्देनाकाशं विदीर्णमिव ! देवी कौसल्या स्वामिनः मस्तकं उत्सङ्गे स्थापयित्वा विलपन्ती व्याजहार—'हे दुराचारिणि कैकेयि ! इदानीं सम्पूर्णास्तव मनोरथाः ! राजानं हत्वा एकाकिनी निष्कण्ठकं राज्योपभोगं विधेहि । अहमधुनैव पातिव्रत्यपालनार्थं प्राणपरित्यागं विधास्यामि । स्वामिनः शरीरमालिङ्ग्याग्निप्रवेशं करिष्यामि ।'

ततः अमात्यगणः स्वामिनः मृतशरीरसंलग्नां विलपन्तीं शोकविह्वलां कौसल्यादेवीं अन्यमहिलासहायेन स्थानान्तरितां कृतवान् । वसिष्ठस्याज्ञया आनुष्ठानिककृत्यादिसमाप्त्यनन्तरं नृपतेः शरीरं तैलपूर्णकटाहे संरक्षितमासीत् ।

## भरतस्य कृते दूतसम्प्रेषणम्

अपरेद्युः प्रभाते राजकार्यनिर्वाहकर्तारः मार्कण्डेय-मौद्गल्य-वामदेव-काश्यप-कात्यायन-गौतमजाबालिप्रभृतयो ब्राह्मणा अमात्यगणाश्च समवेताः सन्तः राजपुरोहितं महायशसं वसिष्ठमवोचन्—'अराजकराज्येऽनेकाद्भुतघटनासम्भवः । राजहीनं राज्यमरण्यसदृशम् । रामलक्ष्मणौ वनं प्रयातौ । भरतशत्रुघ्नौ मातुलालये स्तः । अतः हे द्विजवर ! विचार्येदमखिलं अन्यः कोऽपि इक्ष्वाकुवंशीयः कुमारः राजपदेऽभिषिच्यताम् । *

---

* "सतः समीक्ष्य द्विजवर्य वृत्तं नृपं विना राष्ट्रमरण्यभूतम् । कुमारमिक्ष्वाकुसुतं तथान्यं त्वमेवराजानमिहाभिषेचय" वा. रा. अयोध्या-

ब्राह्मणादीनां वचनं निशम्य वसिष्ठदेवोऽब्रवीत् — 'राजा दशरथः यस्मै राज्यं प्रददौ स एव भरतः शत्रुघ्नेन सह मातुलालये विद्यते। अतः द्रुतगामिनः अश्वारोहिदूताः वीरभ्रातरौ समानेतुं अद्यैव तत्र गच्छन्तु। अस्मिन्विषये एतद्वर्जं किमन्यद्विचारयिष्यामि ?

वसिष्ठश्चतुरो दूतान्सपाथेयानवोचत्—'युष्माभिः द्रुतगामिनोऽश्वान् आरुह्य केकयराज्यं प्रयातव्यम्। भरतशत्रुघ्नौ च अस्मदादेशं श्रावयित्वा तौ सत्वरमानेतव्यौ। रामस्य वनगमने दशरथस्यमृत्युविषये वा तौ प्रति किमपि न वक्तव्यम्।'

## भरतस्य दुःस्वप्रदर्शनम्

केकयराजार्थं वस्त्राभरणाद्युपहारान्गृहीत्वा अयोध्यादूतगणः पाञ्चालान्, हस्तिनापुरम्, कुरुजाङ्गलप्रदेशं, बाह्लीकदेशं, सुदामपर्वतं परतश्च विपाशां शाल्मलीनदीं चातिक्रम्य पञ्चमदिवसे सायं केकयराजधानीं गिरिव्रजनगरीमुपस्थितः।

तस्या एव निशायाः शेषभागे भरतः कुस्वप्नमवलोक्य विशेषत उद्विग्नोऽभूत्। तेनावलोकितम्—, चन्द्रसूर्यौ स्वकक्षाच्युतावजायताम्। पृथिवी विदीर्णा, पर्वतनदनद्यश्च स्थानच्युता अजायन्त ; रामलक्ष्मणौ

---

काण्डे ६७ सर्गे ३८ श्लोके। अप्यस्मिश्लोके इक्ष्वाकुवंशीयं अन्यकमपि राजानं सिंहासने प्रतिष्ठापयितुममात्यगणः निजेच्छां प्रकटयामासुः ?

वनं गतवन्तौ' राजा दशरथश्च परिहितासितवसनः तैलपानं कुर्वाणः तैलपूर्णकटाहे प्राविशत् ।—इति दुःस्वप्नान्विलोक्य भरतः पितरमवलोकयितुं अतीवोत्कण्ठितो जातः ।

परेद्युः प्रातः अयोध्यादूतगणः केकयनृपतये विविधरत्नादिकमुपहारीकृत्य तं प्रणम्य च वसिष्ठसन्देशं श्रावयांचकार । दूतमुखात् वसिष्ठादेशं निशम्य पितृमातृविषयकं कुशलं जिज्ञासमानं भरतं दूतगणः विनीतभावेनोक्तवान्—'हे नरशार्दूल ! भवता येषां कुशलकामना-जिज्ञासाकृता ते सर्वेऽपि कुशलाः सन्ति । सर्वेऽपि भवन्तं द्रष्टुमुत्कण्ठिताः । शीघ्रगामिरथं सज्जीकर्तुमादिशतु भवान् ।'

## भरतस्यायोध्या यात्रा

मातामहं केकयनृपतिं प्रणम्य तस्मिन्नेव दिने भरतशत्रुघ्नो द्रुतगामिरथेन अयोध्यायात्रार्थं निर्गतौ । अश्वारोही सैन्यगणश्च तयोरनुगमनं चकार । इत्थमनेकनदनदी पर्वतारण्यादीनतिक्रम्य भरतशत्रुघ्नौ पञ्चमदिवसे श्रीविहीनामानन्दशून्यामयोध्यानगरीं प्रविष्टौ । *

---

* केकयाः पञ्चनदीय (पंजाब) विपाशासरितः अपरतीरवर्ति देशः । पञ्चनदीय 'शाहपुर' मण्डलमित्यनुमीयते । दशरथस्यान्यतममहिष्याः कैकेय्या इदमेव पित्रालयम् । भौगोलिकी परिस्थिति —यानवाहनं, पर्वताः, काननाकीर्णो मार्गः, विभिन्नराज्याभ्यन्तरतो गम-

## अयोध्यायां प्रवेशः

भरतः आनन्दशून्यं राजगृहं प्रविश्य पितृगृहे जनकमनवलोकयन् कैकेयीसदनमुपगम्य तच्चरणयोः प्रणतवान् । कैकेयी स्नेहावेशेन सत्वरं स्वर्णासनादुत्थाय भरतमालिङ्ग्य तं स्वोत्संगे समुपावेशयत् । तन्मस्तकावघ्राणं च कृत्वा पितृमातृकुलकुशलजिज्ञासां कर्तुमारब्धा । भरतोऽपि संक्षेपतः सर्वप्रश्नानां समाधानं विधाय अपृच्छत्—'मातः पिता क्वविद्यते ? अपि त्वमेकाकिन्येव अत्रासि ? पितरमुत्सृज्य त्वं तु क्षणमपि एकाकिनी न स्थिता ! अपि स ज्येष्ठमातुः कौसल्यावासे विद्यते ? दूता मामित्थं सत्वरं किमर्थमानीतवन्तः ? अपिच क्वास्ते मम-ज्येष्ठभ्राता ?

.................................

ननु दूरमन्तरं चेत्यादि विषयकविचारे कृते अयोध्यातः अश्वचालितरथेन प्रस्थाय सहस्रद्वयक्रोशार्धाधिक परिमितमन्तरमतिक्रम्य पञ्चदिवसावकाशे केकयराज्ये आगमनं कीदृशं सम्भवेदिति विचारणीयम् । विशेषतःमित्रामित्रोभयराष्ट्राभ्यन्तरतो गमनं तु अतीव विघ्नपरिपूर्णम् । प्रधानराजपथा अपि तेषुदिवसेषु आसन् इत्यपि न ज्ञायते । वाल्मीकिरामायणे दृश्यते—'सप्तरात्रोषितः पथि'—भरतः पथि सप्तरात्रीरतिवाह्य अष्टमदिवसे अयोध्यायां प्रविवेश । कृत्तिवासिरामायणे उच्यते अयोध्यादूतगणः गिरिव्रजं पञ्चमदिवसे प्राप्तः । अत एव भरतः पथि

## भरतस्य मातृतिरस्कारः

कैकेयी अभाषत,—'हे पुत्र! अश्वमेधप्रभृतियज्ञकारिधर्मशीलानां या गतिः निर्दिश्यते, हे पितृवत्सल! सम्प्रति तवपिता तामेव पारलौकिकीं सर्वोत्तमगतिं प्राप्तवान्।'

भरतः निशम्यैतच्छोकविह्वलः भूलुण्ठनपरोऽरोदीत्,—'हे पितः! मां शोकसागरे मज्जयित्वा क्व प्रयातोऽसि त्वम्।'

शोशुचानं पुत्रं वक्षसि उत्थाप्य चक्षुषीचोन्मृज्य कैकेयी तं सान्त्वयन्त्युवाच—'वत्स! समाश्वसिहि! स्वस्ति तुभ्यम्! शोकं परित्यज्य पितुरन्त्येष्टिक्रियां समाप्य च राज्येऽभिषिक्तो भवेः।' भरतोऽब्रवीत्—'पितुः केन प्रकारेणमृत्युर्जातः? 'ज्येष्ठो भ्राता पितुः समः' क्वास्ते सः?'

कैकेय्या व्याहृतम्—'तवपिता असकृत् 'हा राम! हा सीते!

---

सप्तरात्रीरतिवाह्य यदि अयोध्यामागतः। तर्हि दशरथमृत्योरेकादशेऽह्नि भरतः अशोचसमाप्तेः परदिवसे दशरथश्राद्धकार्यादिकं कर्तुं न शक्नुयात्। अतः अस्मन्मते अयोध्यादूतगण इव भरतोऽपि पञ्चदिवसैरेवेदमन्तरमतिक्रम्य दशरथमृत्योर्दशमदिवसे अयोध्यां प्रत्यागतः अथवा दशरथस्य श्राद्धादिकं एकादशेऽह्नि न विधाय अनन्तरं व्यधीयत।

हा लक्ष्मण ! इत्येव वदन् चिरं विलपंश्च देहत्यागमकार्षीत्। त्वयि मातुलालयं गत एव राजा रामं यौवराज्येऽभिषेक्तुं त्वरान्वितोऽभूत्। तदानीं तव हितार्थं मयास्मिन्नभिषेके विरोध उपस्थापितः। वरप्रदेन राज्ञा पूर्वं मह्यं वरद्वयं प्रतिश्रुतमासीत्। अस्मिन्समये नृपतिसमीपं मया तद्वरद्वयं प्रार्थितम्। एकेन वरेण रामस्य चतुर्दशवर्षपर्यन्तं वनवासः द्वितीयेन च तव यौवराज्याभिषेकः। सत्यपरायणस्तवपिता रामं वनं प्रेषयामास-पतिव्रता सीता भ्रातृवत्सलो लक्ष्मणश्च राममनुजग्मतुः। राजा तेषां विरहेण शोकग्रस्तावस्थाया मृत्युमुखे पतितः'

मातृमुखादेतादृशदारुणवचनं निशम्यैव भरतः वज्राहतइवाचेतनःसन् भूतले पतितः। कैकेयी परिचर्यया भरतंकिञ्चित्स्वस्थीकृत्याब्रवीत् पुत्र ! किमर्थं त्वं दुःखितोऽसि ? त्वया तु विशालं राज्यमधिगतम्, अप्ययं तव शोकस्य समयः ?' भरतः दृष्टया मातरं दहन्निवोक्तवान्—'पापीयसि ! त्वया पापबुद्धिवशतः रघुवंशोपरि विनाशकारिविपदुपस्थापिता। पतिघातिनि ! त्वद्गर्भसम्भूतोऽहमपि-पापिष्ठः अहमग्निं प्रवेक्ष्यामि विषपानं वा विधास्यामि। त्वमस्याद्राज्यात् दूरमपसर। पापं तवाभ्यन्तरं प्रविष्टम् ! अस्मन्मृतपितृकृते शोककरणेऽपि नास्ति तवाधिकारः ज्येष्ठभ्रातरमहमरण्यतः प्रत्यावर्तयिष्यामि। तत्पूर्वं न शाम्येन्ममान्तरम्। नासि त्वं धर्मराजाश्वपतेर्दुहिता, अपितु इक्ष्वाकुकुलध्वंसकारिणी राक्षसी त्वम् !

भरतः इत्थं कैकेयीं भर्त्सयन् रुदन्नेव शत्रुघ्नेन सह कौसल्यां द्रष्टुं प्रयातः ।

## भरतकौसल्ययोर्मिलनम्

इतः कौसल्या 'भरतः प्रत्यागतः' इतिवार्तामुपलभ्य सुमित्रया सह भरतं द्रष्टुं प्रस्थिता । भरतः शोकातुरां मलिनवसनां उद्विग्नां कौसल्यां दृष्ट्वैव तां वक्षसि समालिङ्ग्य क्रन्दितुं प्रवृत्तः। कौसल्यापि रुदती जगाद—'भरत ! इदानीं त्वया निष्कण्टकं राज्यमुपभोक्तव्यम्। रामेण कोऽपराधः कृतः येन तया स वनं प्रेषितः ? अधुनात्रमम निवासोऽसम्भवः यस्मिन्वने रामोगतस्तस्मिन्नेव वने मां सुमित्रां च प्रेषयितुं प्रबन्धो विधीयताम् ।'

निष्पापो भरतः कौसल्यावचनेन मर्माहत इव तच्चरणयोः पतित्वा उक्तवान्—'आर्ये ! अहं तु अस्मिन्विषये न किमपि जाने । 'ज्येष्ठभ्रातरं प्रति मम कीदृशं प्रगाढं प्रेम एतत्तु त्वं जानास्येव । कैकेय्या मात्रा यत्किमपि कृतं तत्र चेन्मम बिन्दुमात्राप्यनुमतिः तर्हि मया शतब्रह्महत्यापातकमाचरितं भवेत् ! अस्मिन्विषये चेदहं किमपि जानामि तर्हि खड्गप्रहारेण अरुन्धत्यासह वसिष्ठस्य वधेन यत्पापं तदेव ममापि भवेत् ।' इत्थमश्रुत्यागनिरतः शोकसन्तप्तः भरतोऽनेकविध कठोरशपथान्कृतवान्। तदा कौसल्या तमालिङ्ग्याब्रवीत्,—'पुत्र ! तव शपथं दृष्ट्वाहमधिकतरं दुःखितास्मि । वत्स ! यथार्थ-

मेव त्वं धर्मप्राणः। रामं प्रत्यपि तव गभीरप्रेम इति व्याहृत्य भरतं स्वाङ्के स्थापयित्वा क्रन्दितुमारेभे।

## वसिष्ठस्यागमनम्

अस्मिन्नेव समये वसिष्ठ आगम्य शोकाकुलं भरतमब्रवीत्—'यशस्विन् राजपुत्र! स्वस्ति तुभ्यम्! माधिकं दुःखितोभूः। अमोघ-विक्रमो राजादशरथः वृद्ध आसीत्। पार्थिवसुखोपभोगान् प्रचुरदक्षिणा-श्वमेधयज्ञाद्यनुष्ठानं साक्षान्नारायणं श्रीरामचन्द्रं पुत्ररूपेण प्राप्य च सोऽन्तेऽमरधाम प्रस्थितः। इदानीं वृथा शोकं परित्यज्य नृपस्यौर्ध्व-देहिकक्रियादिसम्पादनं विधेहि।

## दशरथस्य सत्कारः

वसिष्ठगुरोरादेशेन राजपुत्रभरतः ब्राह्मणादिसहायेन नृपतेः मृतदेहं तैलकटाहादुद्धृत्य वाहकैः शवाधारे निधाय सरयूतीरेऽनाययत्। दशरथस्य पञ्चाशदधिकत्रिशतमहिष्यः पात्रमित्रब्राह्मणाः पुरवासिगणाश्च शोकं कुर्वन्तः शवदेहमनुययुः। मार्गेऽगणितपरिमाणं सुवर्णरजतरत्ना-दिकं वितीर्णमासीत्। सरयूजले स्नापितं, शुक्लवस्त्रोत्तरीयभूषितं, सुगन्धिचन्दनकस्तूरिभिः अगरुमनोहरमालाभिश्च सुवासितं राजदेहं चन्दनकाष्ठरचितचितायां स्थापयित्वा ऋत्विग्गणा अग्निसंयुक्तमकार्षुः।*

---

* पुत्रयोः भरतशत्रुघ्नयोः स्थितयोरपि ऋत्विग्गणैरग्निसंस्कारः किमर्थं कृतः? अपि तेषु दिवसेषु ब्राह्मणद्वारा अग्निसंस्कारपद्ध-तिरासीत्?

ब्राह्मणाः सामगानं कुर्वन्तः चन्दनागरुगुग्गुलादिकं चितायां क्षिपन्तः तत्कालोचितमन्त्रजपपरा बभूवुः। कौसल्यादिमहिषीगणः सशोकं चिताप्रदक्षिणं चकार। ततः राजमहिषी, पुरोहितः, अमात्यगणश्च भरतेन सह सरय्वां उदकक्रियासंस्कारं विधाय पुरीं च प्रविश्य अश्रुपूर्ण-नयना अतिदुःखेन भूमिशय्यायां दशमदिनमतिवाहितवन्तः।

## दशरथस्य श्राद्धकार्यम्

अथातीतेषु आशौचदशदिनेषु एकादशेऽह्नि राजकुमारो भरतः कृतशौचः सन् ऋत्विग्गणैः श्राद्धकार्यं सम्पाद्य परलोकमङ्गलार्थं ब्राह्मणेभ्यः प्रभूतमन्नं, धनरत्नादि सुवर्णरजतेऽनेकच्छागधेनूः दास-दासिगृहादिकं च प्रतिपादितवान्। ततः त्रयोदशदिने प्रातकाले महाबाहुर्भरतः शत्रुघ्नेन सार्धं चितास्थानमेत्य रुदन्नब्रवीत्—'पितः, अस्मान्विहाय क्व प्रयातोऽसि ?

वसिष्ठऋषिः शोकाकुलं भरतं सस्नेहमुत्थाप्योक्तवान्—'सर्व-कार्यदक्ष ! अद्य त्रयोदशदिवसः अतस्त्वया अस्थिचयनं विधाय चिता-भूमिशोधनं कार्यम्। वृथा विलम्बः कीदृशः ? ऐहलौकिके सत्तोत्पत्ती, वृद्धिक्षयौ, परिणामविनाशौ एतान्विविधविकारान् अतिक्रमितुं नास्ति कस्यापि शक्तिः ; अतः तवेदृशीऽव्याकुलता नोचिता।' वसिष्ठवच-नेन भरतशत्रुघ्नौ अश्रुजलमोचनपरौ सकलमपि विहितक्रियाजात सम्पादितवन्तौ।

## शत्रुघ्नद्वारा मन्थरादण्डनम्

त्रयोदशदिवसानन्तरं अतीव शोकसन्तप्तं रामसमीपं जिगमिषुं च भरतं शत्रुघ्नोऽब्रवीत्—'हा ! यः रामः सर्वलोकाश्रयः स किं नारी-द्वारा निर्वासितो जातः ? वीर्यसम्पन्नो लक्ष्मणो वा पितरमपि निगृह्णन् किमर्थं रामं मुक्तं नाकर्षित् ?'

इत्थं शत्रुघ्ने शोकं कुर्वति कुब्जा विविधाभरणभूषिता तद्गृह-द्वारदेशमुपस्थिता । दौवारिकः निर्दयतया तामाकर्षन् शत्रुघ्नसमीप-मानीय जगाद—'इयमेव सा यस्याः कारणात् रामः वनं प्रयातः राजा च प्राणत्यागमकार्षीत् । स्वेच्छानुसारमेनां दण्डयतु भवान् ।'

शोकसन्तप्तः शत्रुघ्नः कुब्जामवलोक्यैव क्रोधपरवशः तां भूमौ पातयित्वा गृहीततत्कचभारः समाकर्षन् तामतीव भर्त्सयंश्च कैकेयी-वासगृहं प्रतिप्रस्थितः । रक्ताक्तगात्रा कुब्जा आर्तवादं कर्तुमारब्धा । कैकेयी शत्रुघ्नस्य तादृशक्रुद्धमूर्तिमवलोक्य भयेन पुत्रस्याश्रयं कृतवती ।

शत्रुघ्नमतिक्रुद्धमवलोक्य भरतोऽगादीत्, 'भ्रातः ! स्त्रिजाति-रवध्या क्षमस्वैनाम् । राम यदि मां प्रति 'मातृघाती' इतिकृत्वा घृणादृष्ट्या नाद्राक्ष्यत् तदा मया कैकेयी वधोऽपि अकरिष्यत । कुब्जाघातकाभ्यामावाभ्यां सार्थं रामः वार्तालापमपि न कुर्यात् ।'

तदा मूर्च्छिताकुब्जा शत्रुघ्नेन मुक्ता सती कैकेयी समीपं गत्वा रोदितुमारब्धा ।

# भरतस्य सिंहासनप्रत्याख्यानम्

अनन्तरं चतुर्दशदिने प्रातःकालेऽखिलाभिषेकद्रव्यादिभिः सह अमात्यगणः भरतसमीपमुपस्थायाब्रवीत्—, 'राजा प्राणत्यागमकार्षीत्। रामलक्ष्मणौ निर्वासितौ। राजविहीनराज्येऽनेकविपदां संभवः; अतः यशःसंपन्नराजनन्दन। भवानिदानीं स्वयं शासकत्वं स्वीकृत्यास्मान्पालय।

दृढव्रतोभरतः अभिषेकोपकरणं प्रदक्षिणीकृत्य अमात्यान्पौरगणांश्चावादीत्, 'अस्माकं वंशे ज्येष्ठपुत्र एव राज्याधिकारी-इयमेव सनातनी प्रथा। अतः एतादृशनियमोल्लाङ्घनार्थं नोचितो भवादृशानामनुरोधः। राम एव राज्याधिकारि। अहमभिषेकद्रव्यादिगृहीत्वा वनं यास्यामि तस्य राज्याभिषेकं च विधाय तमयोध्यां प्रेषयित्वा स्वयं चतुर्दशवर्षपर्यन्तं वनवासं करिष्यामि। यूयम् शिल्पिभिः शीघ्रं राजमार्गं प्रस्तुतं विधाय वनयात्रार्थं चतुरङ्गिणीं सेनां सज्जीकुरुत।'

भरतवचनं निशम्य सर्वेऽपि प्रमुदिताः वनयात्रापथनिर्माणार्थं भूमितत्वज्ञाः, सुदक्षाः खनकाः, यन्त्रपरिचालकाः, सूत्रधराः, रथनिर्मातारः, वृक्षछेदकाः, मार्गरक्षकाः, सुधाकाराः, वंशकाराः, चर्मकाराः पथनिर्देशकगणाश्च नियुक्ताः। कतिपयैरेव दिनैः स्थाने स्थाने शिबिरस्थापनपूर्वकं गंगातीरपर्यन्तं सुगमपथनिर्माणकार्यमारभ्यत।

 


इतः कुलगुरुः वसिष्ठः एकस्मिन्दिने कैकेय्या विशेषानुरोधेन भरतराज्याभिषेकस्य समस्तसम्भारानेकीकृत्य राजसभायाः आयोजनं कृतवान्। सशिष्यो वसिष्ठः राजसभामेत्य स्वर्णमयसिंहासनमलंकृत्य च भरतं सभायामाहूतवान्। आगते एव भरते सभागृहे तुमुलानन्दध्वनिरुत्थितः। सभासदः भरतं दशरथतुल्यो भवानिति प्रशशंसुः। ततः राज्यपुरोहितः वसिष्ठः भरतं सम्बोध्योक्तवान्,—'वत्स ! नियतधर्मानुष्ठानपरो राजा तुभ्यमिमां धनधान्यपूर्णां पृथिवीं समर्पयामास। सत्यधर्मनिष्ठो रामः पितृसत्यरक्षार्थं वनं प्रयातः। त्वयाऽमात्यान् प्रजावृन्दं च आनन्दयता पितृभ्रातृप्रदत्तमकण्टकराज्यमुपभोक्तव्यम्। त्वरया स्वयमभिषिक्तो भव।'

धर्मज्ञो भरतः वसिष्ठवचनं निशम्य विलपन्नब्रवीत्—'यः धर्मप्राणदशरथनृपतिपुत्रः स कथमन्यराज्यापहरणं कुर्यात्! इदं राज्यं तु रामस्यास्ते अहमपि तदधीनः। महर्षे! त्वयातु धर्मानुकूलमेव भाषितव्यम्। अहं तु अस्मादेवस्थानात् कृताञ्जलिः नरवरं रामं प्रणमामि स एव राज्यशासकः सतु त्रैलोकस्यापि स्वामी भवितुमर्हति। तमेवानुसराम्यहम्। यदि रामं वनात्प्रत्यावर्तयितुमसमर्थोऽस्मि तर्हि स्वयमपि वनौका भवेयम्।' भरतवाक्येन सर्वेऽपि सभासदः प्रमुदिताः।

अथ भरतः सुमन्त्रं लक्ष्यीकृत्योक्तवान्,—'सुमन्त्र! त्वमस्मदादेशमुद्घोषय, सर्वेऽपि सज्जिता भवन्तु। श्वः प्रभाते वयं प्रस्थास्यामः।

## भरतस्य ससैन्ययात्रा

परेद्युः प्रभाते उत्कृष्टरथारूढान् पुरोहितामात्यब्राह्मणगणान्-पुरस्कृत्य भरतः शत्रुघ्नेन सह चित्रकूटाभिमुखं प्रतस्थे । यशस्वीनी कौसल्या कैकेयी सुमित्रा च मातृगणेन सह विविधरथारूढा निर्गता* विविधास्त्रसुसज्जिता षष्टिसहस्त्ररथिभिः गजोष्ट्रैश्च सह लक्षमश्वारोहिणः वेदपाठपरा बहवो ब्राह्मणा अगणिताश्च पुरजनपदवासिनः भरतमनुजग्मुः । अथ शत्रुघ्नपरिचालितविशालसेनाबलेनसार्धं भरतः गंगातीरगतशृङ्गवेरपुरमासाद्य चतुर्दिक्षु शिबिराणि स्थापयामास । निषादराजो गुहः सेनया सह भरतस्यागमनं निशम्य विशेषेण उद्विग्नः सन् स्वबान्धवानुवाच —‘ससैन्यभरतागमने शङ्कितमिव मम मानसम् ।

---

* अध्यात्मरामायणेऽवलोक्यते - भरतः उक्तवान्........'अहं, भवन्तः, राक्षसीकैकेयीवर्जं मातृगणश्च....राममानेतुं गमिष्यामः ।.... शत्रुघ्नेन सह सत्वरं पद्भ्यामेव दण्डकारण्ययात्रो विधास्यामि ।' श्रीरघुनन्दनगोस्वामिविरचित ‘श्रीरामरसायन’ रामायणे दृश्यते - भरत घोषणां निशम्य कैकेयी देवी विशेषतो विषण्णमानसा अश्रुपूर्णनयना कौसल्या-शरणं गता ।

“भरतः स्वकीयपुत्रः समीपमास्ते ।

तथापि रामस्य शोकेन हृदयं विदीर्यते ।।” इत्थं विलप्य आत्मार्थं रामदर्शनार्थं प्रार्थयामास । कैकेय्या दुःखेन कौसल्यादेवी-

अपि भरतः 'रामस्य किमपि अनिष्टं विधातुं प्रस्थितः ? यूयं वर्मधारिणः सन्तः सशस्त्रं सावधाना भवत। अहं भरतमनोभावं ज्ञातुं प्रयते। पश्चात्कर्तव्यनिश्चयः करिष्यते'। इत्युक्त्वा गुहः गृहीतविविधोपहारः ज्ञातिजनैः परिवृतः भरतसाक्षात्कारार्थं प्रयातः।

## गुहस्यातिथ्यम्

प्रीतिसम्भाषणकुशलप्रश्नादिविनिमयानन्तरं गुहो भरतमब्रवीत्-'भवानागत इत्यहं धन्यं मन्ये। अयं तवैव देशः। मम सर्वस्वं भवते समर्पये। ससैन्यो भवानस्मदातिथ्यं स्वीकरोतु। निषादगणैरर्जितं शुष्कमार्द्रं च मांसफलमूलादिकं चाभ्यवहृत्य रात्रिर्यापयितव्या।'

---

मानसं करुणार्द्रं जातम्। कौसल्या तामालिङ्गय सान्त्वयित्वाच भरतमब्रवीत्—'वत्स! नारी बाल्ये पितुः यौवने स्वामिनः वार्धक्ये च पुत्रस्याधीना वर्तते' इति शास्त्रवचनम्। इदानीमस्माकं परिपालवस्य भारस्त्वयि निहितः। त्वं वृद्धसेवी शास्त्रकुशलश्च। कैकेय्या विप्रशापग्रस्तया यत्किञ्चिद्विहितं तदर्थं सातीवानुतप्ता। सा रामदर्शनार्थमतिव्याकुला। अत एव पुत्र! त्वमेतामनुगन्तुमनुमन्यस्व।' तत्र वसिष्ठोऽपि उपस्थित आसीत्। सोऽब्रवीत्—'महाराज्ञी यदुक्तवती तन्मयापि अनुमन्यते। 'रामं प्रति कैकेय्या अनन्ता स्नेहभावना' इत्यहं विशेषरूपेण जानामि। केवलं दैववशतः एव कैकेय्या इदमखिलमकार्यमनुष्ठितम्। एतत्कृते न तस्या दायित्वम्। अपि च

गुहस्य हार्दिकस्नेहभावेन मुग्धो भरतस्तमब्रवीत्—'हे गुह-मित्र! त्वया इत्थं सत्कृतः प्रमुदितोऽहम्। किन्तु अस्मन्मानसं राम-दर्शनार्थमतिव्याकुलम्। मां भरद्वाजाश्रमपथं दर्शयेः। ते नातीवो-पकृतो भविष्यामि।'

गुहः कृताञ्जलिपुटः उवाच, 'महाबलराजनन्दन! अहं स्वयमेवा-भिज्ञदासगणैः सह मार्गदर्शनार्थमागच्छेयम्। किन्तु भवतो महतीं सेना-मवलोक्य मनसि भवति-अपि भवान् रामं प्रति कमपि शत्रुभावं परिपोष्य प्रस्थितः?

भरतो मधुरवचनं व्याजहार—'मित्र! मामुद्दिश्य तव कापि शंका नोचिता। रामः ममज्येष्ठभ्राता अतः पितृतुल्यः तमेव वनवासि रामं प्रत्यावर्तयितुं प्रस्थितोऽहम्।'

---

त्वदभिलषितं रामस्य प्रत्यावर्तनमपि कैकेयीद्वारैव सम्भवेत्। तस्या एवानुरोधेन रामः प्रत्यावर्तिष्यते। कौसल्यावसिष्ठवचनेन भरतः मातुः कैकेय्याः तैः सार्धं गमनमन्वमन्यत।

भरतः पद्भ्यामेव चित्रकूटयात्रार्थं प्रतिष्ठासति इति श्रुत्वा माता कौसल्या तमाहूयोक्तवती, 'पुत्र वयं तु वृद्धाः, अतः पद्भ्यां गन्तुमसमर्थाः त्वयि पादचारिणि वयं रथेन कथं यास्यामः अतस्त्वं रथमारुह्य अस्मानपि नय। कौसल्यावचनेन पादचारितया गमनं भरतेन परित्यक्तम्। 'श्रीरामरसायने' इदं वर्णनं अतीव हृदयस्पर्शि।

श्रुतभरतवचनो गुहः प्रत्यब्रवीत् ।'—'रामः इदानीं चित्रकूटमधिवसति । श्वः भवन्तं सुरनिम्नगापरत्तीरं प्रापयामि । ततस्त्वया चित्रकूटंप्रति गन्तव्यम् ।'

ससैन्यो भरतः निषादराजगुहस्यातिथिसत्कारं स्वीकृत्य रजनीमत्यवाहयत् । परेद्युः प्रातः गुहः स्वयमेकां राजोचितां बृहन्नौकामानयामास । तां भरतत्नुघ्नौ, कौसल्यां वसिष्ठप्रभृतिराजपरिजनवर्गं च समारोढुमुपदिश्यनदीपारं नीतवान् । ततश्च गुहाज्ञया निषादगणाः सुसज्जिताः ध्वजपताकाशोभिताः पञ्चशत संख्याकानौका आनयामासुः । सैन्यगणांश्च सयत्नं गंगापरपारं नीतवन्तः । अनेकेसैनिका हस्तिनश्च जले सन्तरन्तः परतीरं जग्मुः । गुहेन प्रेषिताः कतिपये बलिष्ठा युद्धनिपुणाश्च सशस्त्रानुचराः पथप्रदर्शकरूपेण भरतस्य पुरतो जग्मुः ।

## भरद्वाजाश्रमे भरतः

प्रयागवने उपस्थितः भरतः तत्र शिबिरस्थापनपूर्वकं सेनानिवासव्यवस्थां व्यधात् । ततश्च परिहितधौतवासा भरतः शस्त्रास्त्राणि परित्यज्य मन्त्रिपुरोहितौ पुरस्कृत्य पादचारी भरद्वाजाश्रमं प्रति अग्रसरो बभूव । वसिष्ठमवलोक्यैव महातपस्वी भरद्वाजः तमभिनन्द्य वसिष्ठभरताभ्यां पाद्यार्घ्यविविधफलादिकं च समर्घ्य यथाविधि तान्सत्कृतवान् । सकलानुपवेश्य भरद्वाजः भरतस्य कुशलप्रश्नाद्यनन्तरमन्वयुक्तं —

'किमिहागमने कार्यं तव राज्यं प्रशासतः ।
एतदाचक्ष्व सर्वं मे नहि मे शुद्ध्यते मनः ॥ १० ॥
कच्चिन्न तस्यापापस्य पापं कर्तुमिहेच्छसि ।
अकण्टकं भोक्तुमना राज्यं तस्यानुजस्य च ॥ १३ ॥
(९१ सर्ग वा. रा.)

भरद्वाजवचनं निशम्य भरतः व्यथितचित्तः अश्रूपूर्णलोचनश्च अब्रवीत् —'भगवन् ! सर्वज्ञोऽपि भवान् मामीदृशं किमर्थं पृच्छसि ? अहं रामं प्रसाद्य अयोध्यां प्रत्यावर्तयितुं प्रस्थितः सम्प्रति महामती रामः क्वनिवसतीति कथ्यताम् ।'

श्रुतभरतवचनः तमधिकं प्रशंस्य तन्मस्तकाघ्राणपूर्वकमुवाच ; 'वत्स ! मा दुःखितो भूः । त्वं रामं प्रति विशेष भक्तिसम्पन्नः इत्यहं जाने । हे अनघ ! ससैन्येन त्वया अस्मत्कृतातिथिसत्कारः स्वीकार्यः । अनीयतां तर्हि सर्वे सैनिकाः । सेनयासार्थ माहारादिकं समाप्य पश्चाद्रामसमीपं गमिष्यसि ।

## भरद्वाजकृतससैन्यभरतसत्कारः

मुनिवचनं निशम्य भरतोऽब्रवीत्, 'भवता यदाज्ञाप्यते तदेव करिष्यामि ।' ततः मुनिश्रेष्ठः भरद्वाजः अग्निगृहं प्रविश्य यथाविधि आचम्य च अतिथिसत्कारार्थं विश्वकर्माणमाहूय आवश्यकवासभवननिर्माणार्थमादिदेश ; इन्द्रवरुणकुबेरादिलोकपालत्रयं नदीसमूहगन्धर्वान् अप्सरः

प्रभृतीश्चाहूय अतिथिसत्कारार्थं निर्दिदेश। अचिरादेव संपूर्णं जातम-खिलमायोजनम् प्रचुरपरिमाणेन भक्ष्यभोज्यलेह्योष्यादिकैः, उत्तमव्य-ञ्जनैः, छागवराहमांसेन मद्यमधुदधिदुग्धैश्च सर्वेषामपि इच्छानुरूपः सत्कारो व्यधीयत। अप्सरोदेवाङ्गनासेविताश्च सर्वे उत्तमशय्यासु सानन्दं रात्रिमतिवाहयामासुः।

## भरतस्य चित्रकूटयात्रा

तस्मिन्स्वर्गतुल्याश्रमे रात्रिमेकां सुखमुषित्वा प्रातःकाले सानुबः भरतः मुनिमभिवाद्य तदनुमत्या रामसमीपमुपगन्तुं प्रस्थितः। क्रमशः चित्रकूटमुपगम्य सैनिकगणान्दूरतएव स्थापयित्वा परन्तपो भरतः शत्रुघ्नवसिष्ठसुमन्त्राशोकान गुहं च गृहीत्वा रामाश्रमं प्रत्यग्रसरो बभूव।

सहसा दूरादेव सैन्यकोलाहलधूलिं त्रस्तवन्यजन्तूनां सार्तनादा-मितस्ततो भ्रमणं च वीक्ष्य चिन्ताकुलो रामः लक्ष्मणमेतत्कारणानुसन्धानं कर्तुमादिदेश। अग्रजादेशेन लक्ष्मणः सत्वरमेव कश्चित्कुसुमितसालवृक्ष-मारुह्य चतुर्दिक्षु कृतदृष्टिपातः दूरतः हस्त्यश्वरथसमाकुलां महतीं सेना-मवलोक्य उत्तेजितस्वरेणोक्तवान्—'आर्य! आश्रमे अग्निनिर्वापणं क्रियताम्। सीतादेवी गुहां प्रविशतु; भवानपि करकलधनुर्बाणः सुसज्जितःसन कवचं धारयतु। कैकेयीपुत्रः भरतः राज्याभिषिक्तः सन् निष्कण्टकराज्यभोगाकांक्षया अस्मान्हन्तुमायाति। अहमद्य चिर-

सञ्चितक्रोधस्वरूपं शत्रुसैन्यवधं करिष्यामि — सबान्धवं भरतं विनाश्य धरित्रीं पापमुक्तां विधास्यामि ।'

निशम्येदं लक्ष्मणं च युद्धोद्यतं क्रोधान्धंचावलोक्य तं सान्त्वयन्रामः दुःखितचित्तेनाब्रवीत्—'लक्ष्मण ! महाबलो भरतः स्वयं चेदत्रोपस्थितः तर्हि धनुर्वर्मासिभिः किं प्रयोजनम् ? मम तु पितृसत्यप्रतिज्ञा बद्धस्य सतः भरतं युद्धे निहत्य लोकापवाददूषितराज्यग्रहणेन कोऽर्थः ? लक्ष्मण ! युष्मदर्थमेव मया धर्मार्थकामानां पृथिव्याश्च कामना विहिता । अहं तु अधर्ममार्गेण इन्द्रपदप्राप्तिमपि न कामये । भरतं प्रति निष्ठुरं अप्रियं वा वाक्यं नोचितं वक्तुम् । तस्मै प्रयुक्तं किंचिदपि अप्रियं वाक्यं मदर्थमेव प्रयुक्तं भवेत् ! सौमित्रे ! कस्मिन्नपि विपत्काले पुत्राः पितरं भ्राता वा स्वप्राणसमं भ्रातरं नाशयितुं शक्नुयात्किमु ? राज्यार्थं यदि त्वामिदमखिलं भाषसे तर्हि 'लक्ष्मणायैव सर्वं राज्यं प्रदीयतामित्यहं भरतं वक्ष्यामि ! भरतोऽस्मद्वचनमवश्यं पालयिष्यति ।' रामस्य हितवचनं निशम्य लक्ष्मणः लज्जासंकुचितः सन् स्वगात्रप्रविष्ट इव अभूत् । सलज्जमेव स राममब्रवीत्—'पिता स्वयमेवास्मान्विलोकयितुमागत इति मन्ये ।'

रामोऽपि लक्ष्मणवचनमनूद्योक्तवान्—'अस्मानयोध्यां प्रत्यावर्तयितुं पिता आगतो ...

## भरतमिलनम्

इत्थं परस्परवार्तालापपरौ रामलक्ष्मणौ आश्रमं प्रत्यागतौ। इतः भरतः निषादगणैः सह रामाश्रमान्वेषणपरः दूरात् 'महाबाहू रामः सीतालक्ष्मणाभ्यांसह परिहितचीरवल्कलकृष्णाजिनः उपविष्ट आस्ते' इति व्यलोकयत्। राममवलोक्यैव स वसिष्ठमब्रवीत्—'अयमेवाश्रमः। अयमार्यो रामः सीतालक्ष्मणाभ्यां सहोपविष्टः। भवान्त्वरितमेवास्मन्मातृगणेनसार्धमागच्छतु।' इत्युक्त्वा भरतः शत्रुघ्नेन सह क्रन्दमानस्तान्प्रतिधावितः। 'रामः अस्मदर्थमेव एतादृशदुःखानुभवपरः, धिगस्मज्जीवितम्!' इत्यस्फुटाक्षरं भाषमाणः रामचन्द्रचरणयोः पपात। आन्तरिकावेगेन 'आर्य!' इत्यक्षरद्वयमुच्चार्य च रोदितुमारब्धः। शत्रुघ्नोऽपि साश्रुनयनः रामचरणवन्दनं कृतवान्। विवर्णमुखं दुर्बलं परिहितक्षौमवस्त्रं भरतमुत्थाप्य वक्षसा आलिङ्ग्य मस्तकमवघ्राय च साश्रुमोचनं रामः सस्नेहमुक्तवान्—'भ्रातः! त्वमित्थं किमर्थं वनमागतोऽसि? पितृसेवां विहाय तवेदृशं वनगमनं तु नोचितम्। अपि पितुः कुशलम्?'

भरतोऽब्रवीत्—'आर्य! भवन्तमयोध्यां प्रत्यावर्तयितुमागतोऽहम्। आगम्यताम्।'

अस्मिन्नेव समये वसिष्ठोऽपि मातृगणं पुरस्कृत्य तत्रोपस्थितः। रामः जननीं कौसल्यामवलोक्यैव सपदि तच्चरणौ ववन्दे। कौसल्यापि साश्रुनयनाऽऽलिङ्ग्य रोदितुमारब्धा। रामोऽन्यमातृगणमपि प्रणम्य

वसिष्ठं च साष्टांगपातं नमस्कृत्य समुचितसत्कार सम्भाषणेन तं संतोष्यासनपरिग्रहार्थमभ्यर्थयामास । लक्ष्मणः सीता च वन्दनार्हमाचार्यं ब्राह्मणगणं पूजनीयजननीश्च प्रणतवान् । ततः सर्वेषु सुखोपविष्टेषु रामः कृताञ्जलिरुवाच—'अप्यस्मत्पितुः कुशलम् ? किमुक्तवान्स माम् ?'

## दशरथमुद्दिश्य पिण्डदानम्

वसिष्ठोऽब्रवीत्—'हे रघुनन्दन ! राजा दशरथः त्वद्विरह-सन्तप्तहृदयः 'हा राम ! हा सीते ! हा लक्ष्मण ! इति वदन् शोचमानोऽमरलोकमारुरोह ।'

कर्णशूल्ये श्रुतमात्रे गुरुवाक्ये रामः ऊर्ध्वबाहुः उच्चस्वरेण क्रन्दमानः वज्राहत इव भूमौ पपात । लक्ष्मणः, सीता मातृगणश्च सर्वे समवेताश्च विलापपरा बभूवुः किञ्चिदाश्वास्य रामः 'हा पितः ! दयासागर ! अस्मान्विहाय कुतः प्रयातोऽसि ? सीते तवश्वशुरः लोकान्तरं प्रयातः । लक्ष्मण ! त्वमपि पितृहीनः संवृत्तोऽसि' । इत्थं शोकपरो बभूव । वसिष्ठः सान्त्वनावचनैः शोकशान्तिं विधायोक्तवान्—'राम ! त्वमेव ज्येष्ठः पुत्रः इदानीं पितुरुदकक्रियादिकं निर्वर्तय ।' ततः भ्रातृमातृगणपरिवृतः समीपस्थनदीतीरमासाद्य स्नानतर्पणादिसमाप्त्यनन्तरं सर्वेऽपि जलाभिलाषिणं दशरथमुद्दिश्य जलदानमकुर्वन् । अनन्तरं रामः साश्रुनयनः लक्ष्मणेन सह इङ्गुदीफलप्रस्तुत-पिण्डान् मधुसिक्तान्विधाय पितरमुद्दिश्य समर्पयन्नुवाच 'यदेवास्माकं

मर्जं पितृगणस्यादि तदेव।' इत्थं स्मृतिशास्त्रस्य विधानम्।—अत एव पितः! गृहाणेमं पिण्डम्।

पिण्डदानानन्तरं सर्वे पुनः स्नात्वा साश्रुनयना आश्रमं प्रत्यागताः। तस्मिन्दिवसे सर्वेऽपि उपोषिता आसन्।

## भरतरामसंवादः

सा रात्रिस्तैस्तैर्महता दुःखेनानिर्वाहिता। अन्येद्युः प्रातः रामः बन्धुवृन्दैः परिवेष्टितः मन्दाकिनी नदीतीरे* जपहोमादिसमापनानन्तरमाश्रममागतः वसिष्ठं च प्रणम्योपविष्टः।

मन्त्रिसेनापत्यमात्यवर्गैः प्रमुखपौरगणैश्च सह भरतादयः त्रयो भ्रातरः रामस्य पृष्ठतः तूष्णीं स्थिता आसन्। अथ भरतः सर्वेषामानन्दं वर्धयन् राममुवाच—'हे आर्य! हे महाभाग राम! भवान् पैतृकराज्येऽभिषिक्तो भवतु। भवान् ज्येष्ठः अत एव पितृतुल्यः; प्रसीद। मम जननी मोहवशेन यमनर्थं कृतवती तं विस्मरतु भवान्! क्षमस्वमाम्। भवानस्माकं स्वामी, वयं तु भृत्याः। अतः अस्मान् पालयतु भवान्।' इत्युक्त्वा भरतः भक्तिभरेण रामचरणावुपगृह्य साष्टांगं प्रणनाम।

---

* मतान्तरेण 'मालावतीनदी' प्रसिद्धमन्दाकिनी हिमालयान्निर्गता जाह्नव्या संगता। 'मन्दाकिनी' 'स्वर्गङ्गा' इत्यप्युच्यते। कम्बरामायणमतेन प्रयागतः 'चित्रकूट' पथे कालिन्दी नदी आसीत्।

राघवः भरतं सस्नेहमुत्थाप्य अङ्कमारोप्य स्नेहार्द्रस्वरेण शनैः शनैरभाषत: 'भ्रातः ! यदुक्तं त्वया तदखिलं सत्यम्; दशरथपुत्रस्य चोचितम्। किन्तु भरत! अस्माकं सत्यधर्मपरायणेन पित्रा मत्कृते चतुर्दशवर्षपर्यन्तं वनवास आदिष्टः, तुभ्यं च राज्यं प्रदत्तम्। अतोऽहं अतिमाननीयस्य पितुरादेशं पालयिष्यामि— त्वमपि पितृदत्त-राज्यं स्वीकृत्य पितरमृणमुक्तं विधेहि। सत्यप्रतिज्ञदिवंगतपितुरादेशो-ल्लङ्घनं नोचितमस्माकम्।'

रामवचनं निशम्य भरतोऽश्रुविसर्जनपूर्वकमुक्तवान् —'पितरि मोहवशेन विपरीतकार्यपरे सुपुत्रस्तत्संशोधनं कुरुते। अतः भवता पितृराज्याङ्गीकारः कर्तव्यः, सत्पुत्रेण च भवितव्यम्। महादेवः यथा सर्वभूतेषु दयावान् तथैव भवानपि कनिष्ठोपरि दयां करोतु। अहमवनत-मस्तकेन भवत्समीपमस्मन्मातृपितृकृतदुष्कृत्यर्थं क्षमां प्रार्थयामि; भवानस्मत्प्रार्थनाङ्गीकारं न करोति चेत् त्वया सार्धमहमपि वनवासपरो भविष्यामि' इत्युक्त्वा भरतः रामस्य चरणयुगलं गृहीत्वा उच्चैः क्रन्दि-तुं प्रवृत्तः।

भरतं सान्त्वयन् रामः सस्नेहमुक्तवान्* —'भ्रातः! अस्माकं पिता स्त्रीवशो भूत्वा मूढबुद्धया वा नाकरोदीदृशीं व्यवस्थाम्। सत्वा-

* वाल्मीकिरामायणेऽवलोक्यते—राम उक्तवान् 'किन्तु भ्रातः पुराऽस्माकं पिता तव जनन्याः पाणिग्रहणसमये 'तव कन्यागर्भतः

सीत्सत्यवादी अतः तेन पूर्वप्रतिश्रुत्यनुसारं कैकेयीमात्रे वरद्वयं दत्तमासीत्। अहमपि पितुः कैकेयीमातुश्च समीपं 'तवादेशपालनं करिष्यामि' इतिप्रतिज्ञाबद्धोऽभूवम्। त्वमपि मम सन्तोषार्थं राजानं ऋणमुक्तं विधेहि। ममापि सत्यपालने सहायकारी भव। 'सन्तानं 'पुं' नाम नरकात् पितरं त्रायते, इष्टपूर्ताभ्यां च स्वर्गलोकं प्रापय्य तं सर्वथा रक्षति' इत्येव हेतोस्तत्पुत्र इति कथ्यते। अतः हे पितृप्रिय भरत! त्वया पिता नरकाद्रक्षितव्यः। मातापितरौ पुत्रस्य कृते यादृशं दुःखं सहन्ते तादृशदुःखानुभवक्षणस्यापि पुत्रः स्वकीयसम्पूर्णजीवनेऽपि परिशोधनेऽसमर्थः। वीरश्रेष्ठ! त्वया स्वयं मनुष्यगणस्वामिना भाव्यम्। अहं तु वन्यपशूनां शासकः स्याम् त्वं हृष्टचित्तः सन् अयोध्यां प्रत्यावर्तत। अहमपि प्रीतमनसा दण्डकारण्यप्रवेशेन पितृऋणशोधनं विधास्यामि। वयं चत्वारो भ्रातरः दशरथनृपतेः चत्वारः सुपुत्राः; अतः वयं पितरं सत्यभ्रष्टं न करिष्यामः हे धर्मप्राण भरत! एतेन त्वं विषण्णो माभूः।'

---

उत्पन्नसन्तानायैव राज्यं दास्यामि' इत्यङ्गीकृतवानासीत्।'

अस्मन्मते दशरथनृपतिः एतादृशप्रतिज्ञास्मरणेनैव विशेषतः चिन्तितोऽभूत्। समश्च ज्येष्ठपुत्रः सिंहासनस्याधिकारी; तं जनप्रियं राममतिक्रम्य भरताय राज्ये प्रदत्ते तत्र विद्रोहः सम्भवेत' इत्याशङ्कय भरतस्यानुपस्थितावेव झटिति स रामयौवराज्यायोजनं चकार। दशरथस्येदं भयं नाभून्निर्मूलम्।

रामवचनश्रवणेन विशालवक्षा भरतः अतिदुःखितचित्तः समीपवर्ति सुमन्त्रमभाषत । सारथे ! त्वया सत्वरं कुशाः प्रसारयितव्याः ; आर्यः यावत्कालं प्रसन्नः न स्यात् तावत्कालमनशनेन द्वारदेशे कुशाशय्यायां एकपार्श्वे शयनपरो भवेयम् । सुमन्त्रं दोलायमानमानसमवलोक्य भरतः स्वयमेवातपे कुशानास्तीर्य जलस्पर्शमाचमनं च कृत्वा पूर्वाभिमुखः तदुपरि उपविष्टः । इत्थं भरतस्य कठोरव्रतग्रहणं वीक्ष्य रघुनन्दनः सावेगकण्ठमब्रवीत्—'भरत ! ईदृशः कोऽपराधो विहितः येन त्वयेदमतिदुष्करव्रतमङ्गीकृतम् ? क्षत्रियाणां प्रायोपवेशनमनुचितम् । उत्तिष्ठ ! एतादृशं दारुणव्रतं विहाय अयोध्यां प्रत्यावर्तस्व ।'

भरतस्तदानीं पुरजनपदवासिनः संबोध्योक्तवान्—'यूयमार्यं रामं किमर्थं नानुरुन्धीथ ?'

---

रामराज्याभिषेकमवरुध्य भरते तत्पदे प्रतिष्ठापयितुं कैकेयी यमुपायमवालम्बत तस्मिन्विषये दशरथेन कैकेय्याः पाणिग्रहणात्पूर्वं केकयराजसमीपं यदङ्गीकृतं तत्कैकेय्या मन्थरया वा अज्ञातमेवासीदिति मन्यामहे ।

अथवा ज्ञाते सत्यपि लोकप्रियं राममतिक्रम्य आभ्यन्तरिकसम्भ्रमभयात् स्वगर्भजातपुत्रस्य राजसिंहासनेऽधिकारं न ज्ञातवती । पश्चान्मन्थरापरामर्शात् तस्याः बुद्धिवैकल्यमभूत् तत्कृते च तस्याः पश्चात्तापोऽपि जातः ।

पौरा ऊचुः 'रघुवंशे काकुत्स्थकुले च जातस्य तव यादृशं वक्तुमुचितं तादृशं त्वयाभिभाषितमेव। परमितः महानुभावो रामः पितृसत्यपालने दृढ संकल्पो जातः; अतःवयं तं सहसा प्रतिनिवर्तयितुमसमर्थाः।

रामचन्द्रोऽपि तेषां वचनमनुसृत्योक्तवान्—'भरत! श्रुतं त्वया? एतेषां धर्मदर्शिबान्धवानां वचनानुसारं क्षत्रियाणामधर्म्यप्रायोपवेशतान्निवर्तयस्वात्मानम्। एतस्य प्रायश्चित्तार्थं च मां स्पृष्ट्वाचमनं क्रियताम्।

एतास्मिन्नवसरे द्विजवरो जाबालिरवोचत्—'अस्तु राम! त्वं तु विचक्षणः तपस्वी च अतः सामान्यजनसदृशी तवेदृशी निरर्थकबुद्धिर्नोचिता। कःकस्यास्मिन्संसारे? कःपिता? का माता? मनुष्यः एकाकी एव जायते एकाकि एव पुनर्म्रियते! दशरथः न कोऽपि तव नापि त्वं तस्य कोऽपि! ये प्रत्यक्षसिद्धं राज्यादिरूपपुरुषार्थं परित्यज्य अप्रत्यक्षपारलौकिकधर्माश्रयं कर्तुमभिलाषुकाः तेषां कृते तु वयं दुःखप्रकाशनं कुर्महे। देवपूजा कर्तव्या, अन्नदानं विधेयं, यज्ञदीक्षाचरणीया, तपस्या करणीया इत्यादिशास्त्रवचनानि साधारणजनान्वशीकर्तुं चतुरलोकैर्निर्मितानि सन्ति। हे महामते! इह लोकात्परं पारलौकिक धर्मादिकं नास्ति किमपि! त्वया निजबुद्धिबलेनैतदवगन्तव्यम्। सर्वलोकसम्मतं विचारं स्वीकृत्य च भरतप्रेरितेन [illegible]ीकर्तव्यम्।

## रामो जाबालिश्च

सत्यपरायणोरामः जाबालिवचनेन विस्मितः सन्नुवाच—'भवताऽस्मद्धितकाम्यया यदेवोक्तं तद् वस्तुतः अकर्तव्यमपि आपाततः कर्तव्यमिव तथाऽपथ्यमपि पथ्यमिव प्रतिभासते ! सत्यवचनं सर्वभूतेषु दया च सनातनं राजचरितम्। अतः राज्यमपि सत्यमयं सर्वं च जगदपि सत्यप्रतिष्ठितम्। मुनिगणा देवगणाश्च सत्यमेव पूजयन्ति। ईश्वरः सत्यपदवाच्यः धर्मश्च सततं सत्यप्रतिष्ठितः। सत्यमेव जगत्प्रभृति सत्यवस्तूनां मूलम्। नास्ति सत्यात्किमपि ज्यायः। वेदा अपि सत्यावलम्बाः। अतः भवता यदिदं प्रत्यक्षप्रमाणवादि चार्वाकमतानुसारं प्रतिपादितं तेन मन्ये भवतां बुद्धिभ्रंशो जातः। अप्येतज्ज्ञात्वैव पित्रा भवान् यज्ञकर्मणि नियुक्तः ! तेनाहं पितुः कृतकर्म निन्दां करिष्यामि। चोरः यथा दण्डार्हः यथा च नास्तिकमतावलम्बी तथागतबुद्धः* तादृशो भवानपि दण्डयोग्य इति मन्ये।' रामस्य पुरुषवचनेन जाबालिः सविनयमुक्तवान्,—'नाहं नास्तिकमतानुवादी। नाहं स्वयं नास्तिकः; परलोकादिकं च नास्ति इत्यपि न। समयक्रमेणाहं ईश्वर-

---

* वाल्मीकिरामायण - नवाधिकशततमसर्गः ३४ तमः श्लोकः।

यथाहि चोरः स तथाहि बुद्धस्तथागतं नास्तिकमत्रविद्धि।

तस्माद्धि यः शाक्यतमः प्रजानां स नास्मिकेनाभिमुखो बुधः स्यात्।

वादि वचनमपि ब्रवीमि ; पुनः कदाचिन्नास्तिकोऽपि सम्पद्ये । वस्तुतः नाहं नास्तिकः । त्वां वनवासान्निवर्तयितुं प्रसादयितुं च मयेदृशमभिहितम् ।

## रामवसिष्ठसंवादः

रामं कुपितमिवावलोक्य वसिष्ठोऽब्रवीत्, 'राम ! नास्ति जाबालिर्नास्तिकः त्वामयोध्यासिंहासने स्थापयितुकामेनैव तेनेदृशं भाषितम् । मया त्वत्पुरतः संसारोत्पत्तिर्वर्ण्यते श्रूयताम् ।—

जगतः उत्पत्तिं इक्ष्वाकुवंशं च वर्णयित्वा वसिष्ठोऽब्रवीत्—'अस्मिन्कुले ज्येष्ठसन्तानमेव राजा भवेत् ; ज्येष्ठे वर्तमाने कनिष्ठः न कदापि राज्येऽधिकृतः । त्वयापि कुलधर्मपालयता अयोध्यानृपेण भाव्यम् । वत्स ! राम ! जातस्य मानवस्य, आचार्य, पिता, माता चैते त्रयो गुरवः । अहं च तव त्वज्जनकस्य चाचार्यः । अतः अस्मद्वाक्यपालनेन तव कदापि सङ्गतिभ्रंशो न भवेत् ।'

रामोऽब्रवीत्—'आचार्य ! यदुक्तं भवता तदवश्यमेव धर्मन्यायोभयसङ्गतम् । किन्तु राजा दशरथः मम जन्मदः पिता, तेन य आदेशः कृतः तमहं कदापि असत्यं न विधास्यामि । पित्राज्ञापालनमेव पुत्रस्य श्रेष्ठो धर्मः ।

## रामपादुकाग्रहणम्

अथ भरतः उत्थाय जलस्पर्शनं च कृत्वोक्तवान्,—'पारिषद-गणाः, मन्त्रिगणाः, ज्ञानिगणाश्च सर्वेऽपि श्रृणुत । मया पितृसमीपं

राज्यप्रार्थना न कृता नापि मातृसकाशे तदर्थमनुरोधो विहितः । नापि रामस्य वनवासोऽपि मयानुमतः तथापि यदिचेद्रामः पितृसत्यपालनमभिलषति तर्हि अहमपि तत्प्रतिनिधिरूपेण वने निवत्स्यामि ।'

भरतप्रतिज्ञया विस्मितो रामः उवाच—'जीवितकाले पिता यत्किञ्चित्क्रयविक्रयदानादिकं कृतवान् तद्विपरीतं पुत्रस्याचरणं नोचितम् । 'भरतः क्षमाशीलः सत्यसन्धश्च' इत्यहं जाने । वनवासात् प्रत्यावृत्य अनेनैव धर्मशीलभ्रात्रा सार्धं मिलित्वा पृथिवीपालनं करिष्यामि । अहं कैकेय्यामातुरादेशपालनतत्परो भविष्यामि तथैव भरतोऽपि पितृप्रतिश्रुतिपालनपरस्तमृणमुक्तं कुर्यात् ।'

रामस्य न्याय्यं धर्मसङ्गतं च वचन निशम्य अमरगणा अपि प्रच्छन्नतया 'साधु साधु' इत्यभाषन्त । भरतस्तदानीमुद्विग्नचित्तः कृताञ्जलिः सन् मधुरवचनमब्रवीत् 'कुलतिलक राम! एकाकी एतादृशातिविशाल राज्यस्य रक्षां कर्तुमसमर्थोऽहम् । भवानिदं राज्यं स्वीकृत्य कमपि निज प्रतिनिधिरूपेण नियोजय । यस्मै एव भवान् राज्यभारं समर्पयिष्यति स एव राज्यपालनसमर्थो भवेत् ।' इति व्याहृत्य भरतः रामचरणयोर्विलुठ्य करुणस्वरेण प्रार्थयामास ।

रामः भरतमुत्थाप्य स्वाङ्कमारोप्य च सस्नेहमब्रवीत—'वीरोऽसि त्वम् पृथिवीशासनक्षमश्च । सुहृत्! अमात्यैः मन्त्रिगणैश्च सार्धं राज्यपालनकार्यं कुरुष्व । चन्द्रः प्रकाशहीनो भवेन्नाम, हिमालयः शैत्यं

परित्यजेदपि, सागरोऽपि स्वमर्यादातिक्रमं कर्तुमलं स्यात्; किन्तु अहं पितुः समीपे कृतां प्रतिज्ञां कदापि अन्यथा न विधास्यामि।'

एतेन अनन्योपायो भरतः जगाद,—'आर्य! तर्हि इदमेव सुवर्णभूषितं पादुकायुगलं चरणयोर्धारयित्वा समर्प्यताम्। इदमेवाखिललोकस्य योगक्षेमभारसहने समर्थं स्यात्।'

महातेजस्वी रामः पादुकायुगुलं चरणसंयोगानन्तरं भरताय समर्पितवान्। भरतः पादुके प्रणम्य रामं जगाद—'वीरवर राघव! अहं चतुर्दशवत्सरपर्यन्तं जटावल्कलधारी फलमूलभोजी च सन् भवत्पादुकायुगुलाय राज्यभारं समर्प्य नगराद्बहिः निवत्स्यामि। यस्मिन्दिने चतुर्दशवत्सराणि पूर्णतां यास्यन्ति तस्मिन्दिने भवन्तं न द्रक्ष्यामि चेदग्निप्रवेशं करिष्यामि। यस्मिन्दिने चतुर्दश वत्सराणि पूर्णतां यास्यन्ति तस्मिन्दिने भवन्तं न द्रक्ष्यामिचेदग्निप्रवेशं करिष्यामि।

## भरतस्य अयोध्यायात्रा

रामः भरत शत्रुघ्नं चालिङ्ग्योक्तवान्—'एवमस्तु! मम सीतायाश्चानुरोधेन त्वं मातरं कैकेयीं पालय* तां प्रति कोपो न कर्तव्यः।

---

* अध्यात्मरामायणे अवलोक्यते - अश्रुजलसिक्ता कैकेयी निर्जने राममुक्तवती—'अहं दुष्टबुद्धिमोहिता तव राज्यप्राप्तौ विघ्नमुत्पादितवती; क्षमस्व मम दौरात्म्यम्। [illegible] [illegible]भूषणम्।' रामः

भरतः एतदुज्ज्वलमलङ्कृतं च पादुकायुगुलं प्रतिगृह्य रामं प्रदक्षिणीकृत्य तत् (पादुकाद्वयं) राजवाहनगजराजपृष्ठोपरिस्थापितवान् अथ रामः आचार्यमन्त्रिमण्डलं प्रजाजनगणं च प्रति यथायोग्यं शुभेच्छाप्रदर्शनपूर्वकं भ्रातृद्वयाय अनुज्ञां प्रददौ। मातृवर्गः दुःखेन बाष्पस्तम्भितकण्ठः सन् रामं प्रति किमपि वक्तुमसमर्थोऽभूत्। रामः तान्सर्वानभिवाद्य कियद्दूरपर्यन्तं तैः सह गत्वा पुनः स्वकुटीं निवर्तयामास।

## नन्दी ग्रामे राजधानी स्थापनम्

अथ भरतः इदं 'पादुकाद्वयं' पुरस्कृत्य गुर्वमात्यपरिजनवर्गेण सह भरद्वाजमुनिमभिवाद्य अखिलवृत्तनिवेदनपूर्वकमविलम्बं अयोध्यायात्रार्थं प्रास्थितः। किन्तु दशरथेन रामेण च विहीनायांमयोध्यायां वासस्तस्यासह्योऽभूत्। मातृगणं पुरवासिनश्च अयोध्यायां स्थापयित्वा

---

स्मितं कृत्वा अवोचत्—'मातः। भवत्या दैववशात एवैतदाचरितमित्यहं जाने। मया तवोपरि कदाऽपि क्रोधो न कृतः।' रामवचनं निशम्य कैकेयी हृष्टचित्ता सती अयोध्यां प्रतिनिवृत्ता। 'कैकेयीदेवी देहमनसोः अशेषगुणसम्पन्ना महीयसी असामान्या च रमणी आसीत्। दैवमेव रामवनगमनकारणम्। दैवेच्छैव कैकेयीं साधनीकृत्य सफलीभूता कैकेयीं च कलङ्कितां कृतवती' इति सर्वेऽपि रामायणकारा एकमतेन स्वीकुर्वन्ति। रामश्चेद्वनगमनं नाकरिष्यन् तर्हि तस्यावतारलीलायाः श्रेष्ठाङ्गस्वामिनयोऽपि असम्भवोऽभविष्यत् किन्तु रामचन्द्रस्य

वसिष्ठमन्त्रिगणसम्मत्या पुरोहितब्राह्मणान्पुरस्कृत्य कोशान्तरवर्तिनन्दि-ग्रामे रामपादुकायुग्मं मस्तकेन वहन् प्रयातः। अनेके नगरवासिनः सैनिकाश्च तमनुगताः। नन्दीग्राममागत्य भरतः रामपादुकाद्वयं महा-समारोहेण अभिषिच्य स्वर्णसिंहासने स्थापितवान्; गन्धपुष्पादिभिः पूजां चामरव्यजनं च कृतवान्। राजकार्यादि समस्तविषयं पादुका-समीप निवेद्य मन्त्रिपुरोहितसहायेन भरतः राजविषयककार्यनिर्वाहं कर्तुमारब्धः। अनेकहर्म्यप्रासादा निरमीयन्त। अचिरादेव नन्दीग्रामः विविधजानाकुलराजधान्यां परिणतो बभूव।

---

कैकेयीं प्रति नाभूदल्पोऽपि विद्वेषभावः। रावणवधावनन्तरं इन्द्राद्यमर-गणैः सह सीताग्निपरीक्षास्थाने उपास्थितं दशरथनृपतिं रामचन्द्रः कैकेयी कृतेऽपराधमार्जनां याचमानोऽभाषत् ‘ भवान् कैकेयीं भरतं च प्रति क्षमाशीलो भवतु। कैकेयीं प्रति भवानुक्तवान्—‘ पुत्रसहितां त्वामहं त्यक्तवानिति ’। अयमभिशापः तौ मा स्पृशतु ’। दशरथो-ऽपि शापपरिहारं कृतवान्।

बुद्धरामायणानुसारं (दशरथजातकम्) दशरथनृपतेः मृत्यो-रनन्तरं भरतमातुः भरतराज्याभिषेकः इष्ट आसीत, परममात्यगणैः स नानुमतः। तदानीं भरतः रामचन्द्रं वनात्प्रत्यावर्तयितुं गृहीतानेकरा-जचिह्नः (खड्गछत्रोष्णीषपादुकाबालव्यजनानि) चतुरङ्गसेनया सह वनं गतः। परं रामः अयोध्यां प्रतिगन्तुमनिच्छुकोऽजगाद—‘ यावदहं न

## रामस्य चित्रकूटत्यागः

इतः मुनिगणपरिवृतः श्रीरामः सीतालक्ष्मणाभ्यां सह चित्रकूटे कञ्चित्कालमुवास। 'जनप्रियो रामः चित्रकूटमध्यास्ते' इति ज्ञात्वा जनगणाः सततं रामदर्शनार्थं तत्रोपस्थिताः। अनेकलोकानां समागमेन मुनीनामुपरोधो आश्रमपीडा च मा भूत् इति विचार्य राक्षसानामुपद्रवपरिहारार्थं च रामः एतत्स्थानपरित्यागविषये निश्चयं कृत्वा सीतालक्ष्मणाभ्यां सह जनशून्यात्रिमुनेरुत्कृष्टाश्रमगमनतत्परोऽभूत्।

## अत्रि-आश्रमे रामः

यशस्वीरामः तादृशं सुखकरशोभनाश्रमं प्रविश्य प्रमुदितमानसः मुनेश्चरणौ ववन्दे। मुनिरपि तं पुत्रमिव समालिङ्ग्य मस्तकावघ्राणं च कृत्वा सस्नेहं स्वागतं व्याहृत्य बहुविधं सत्कृतवान्। अनन्तरं 'सर्वभूतहितेरतः' ऋषिसत्तमोऽत्रिः स्वधर्मचारिणीं तपस्यानिरतां अनुसूयां सीतास्वागतार्थमुपदिदेश। अथ रामं लक्ष्यीकृत्य मुनिरवादीत्

---

प्रत्यावर्तं तावत्पादुकाद्वयमेव राज्यपालनं कुर्यात्। स्वकीय तृणनिर्मित पादुकाद्वयं च पद्भ्यामवतार्य भरतहस्ते समर्पयामास। रामपादुके एव राज्यशासनकार्यं कृतवत्यौ। विवादनिर्णयसमये पादुके सिंहासनोपरिस्थापितेऽभूताम्। न्यायविरुद्धनिर्णयसमये पादुकाद्वयं परस्पराघातपरमजायत। अमात्यादिविचारे न्यायसङ्गमे सति ते निष्पन्देऽवस्थिते।

—'पूर्वं दीर्घकालपर्यन्तमनावृष्टिहेतोरनया मन्त्रसिद्धिप्रभावतः फलमूलादिसृष्टिं विधाय जाह्नवीं चाश्रमसमीपं प्रवाह्य ऋषिगणस्य प्राणरक्षा कृता। तामेनां सर्वजनपूज्यां अनसूयां मातृतुल्यां मन्यस्व।'

वार्धक्यवशतः अत्रिपत्न्याः अनसूयायाः सकला अपि शरीरग्रन्थयः शिथिलाः, चर्म वलितं, केशपाशश्च शुभ्रोजातः आसीत्। प्रणतमात्रां सीतां वृद्धतापसी अभिनन्द्योक्तवती—'पुत्रि! त्वं तु भाग्यवशादेव धर्मपथावलम्बनं कृतवती मानिनि! त्वया आत्मीयस्वजनात् सन्मानं समृद्धिं च परित्यज्य वनवासिपत्युः पवित्रसहधर्मचारिणीव्रतमङ्गीकृतम्। अतः तव अक्षयं यशः सम्पूर्णधर्मलाभश्च भूयात्।'

अनसूयाधर्मोपदेशं निशम्य सीतामृदुमन्दस्वरमब्रवीत्—'आर्ये! पतिरेव ममैकमात्रो गुरुः' इत्यहं जानामि। पूर्वं विवाहकाले अग्निसंमुखं मम जनन्या य उपदेशो विहित आसीत् स मया इदानीमपि स्मर्यते। आत्मीयजनानामप्युपदेशवाक्यं मया न विस्मृतम्। पतिशुश्रूषैव नारीकृते श्रेष्ठतपस्या।'

सीता वचनेनानन्दितानसूया तन्मस्तकावघ्राणपूर्वकमब्रवीत्—'जानकि! तव वचांसि अतिमधुराणि पवित्राणि च। तपोबलार्जितं मम सुमहत् पुण्यं संचितमास्ते; तुभ्यमहं वरं दातुमिच्छामि। इदानीं तव किं प्रियं कुर्यामित्युच्यताम्।'

सीता समन्दास्मितमुवाच—'देवि! भवदनुग्रहेण मम सर्वेऽपि कामाः पूर्णाः, न काप्यास्तेऽन्याभ्यर्थना।'

सीतानिर्लोभतयाधिकतरं प्रसन्ना अनसूया जगाद—'वैदेहि! मया इदमम्लानं, दिव्यमाल्यं, उत्कृष्टवस्त्रम्, सर्वालङ्काराः, महामूल्यं विलेपनं अङ्गरागश्च तुभ्यं सप्रमोदं दीयते। त्वं इमं दिव्यरागं रुचिर-शरीरे विलिप्य स्वामिनं सुशोभितं कुरुष्व।

प्रीतिप्रदत्तानि इमानि वस्त्रादीनि विनीतभावेन स्वीकृत्य सीता कृताञ्जलिः अनसूयां स्तोतुमारेभे। अथ अत्रिपत्न्या अनुयुक्ता सीता—स्वकीयं अलौकिकं जन्म, स्वयंवरम्, हरधनुर्भङ्ग इत्यादि सविस्तरं वर्णयामास। तन्निशम्य अत्यन्तं प्रीता अनसूया सीतामालिङ्ग्य जगादीत्—'मधुरभाषिणि मैथिलि! त्वन्मुखादिदं सकलं निशम्या-तीव सन्तुष्टास्मि। सन्ध्यासमयः आगतप्रायः; मुनिजनैराश्रममागत्य होमाग्निः प्रज्वालितः आस्ते।' इदानीं त्वमपि सर्वाभरणभूषिता सती अस्मदानन्दवर्धनपरा रामसकाशं गच्छेः।'

विविधवेशभूषिता लज्जिता सीता अनसूयां प्रणम्य सानन्दं रामसमीपमुपस्थिता। रघुनन्दनो रामः तापसैरर्चितः तत्र शान्तिपूर्वकं रात्रिमत्यवाहयत्। परेद्युः प्रातः अन्यत्र यात्राकरणार्थं प्रस्तुतं तमृषिग-णोऽब्रवीत्—'राघव! वयं राक्षसगणैः निर्दयतया पीडिताःस्मः। अतः एतादृशात्याचार निवारणपूर्वकं त्वमस्मान्रक्ष। अनेनैवपथा

महर्षिगणः फलाहरणार्थं गच्छति ; इममेवमार्गमनुसृत्य त्वं गहनारण्ये प्रवेष्टुं शक्ष्यसि ।'

ततः अत्रिऋषिः सशिष्यगणः रामेणसह कियद्दूरपर्यन्तं गत्वा शिष्यगणान्मार्गदर्शनार्थमादिश्य आश्रमं प्रत्यावृत्तः ।

प्रायः एकक्रोशान्तरे काञ्चित्सरितमवलोक्य रामः अत्रिशिष्यानुवाच—'अप्यस्तिकिञ्चित्साधनं नदीपारे गन्तुम् ?

शिष्या ऊचुः—'हे रघुनन्दन ! सुदृढनौका प्रस्तुतास्ते वयं नदीपारं प्रापयिष्यामः ।

ततः शिष्यगणा तान् नौकया परतीरं प्रापय्य निवृत्ताः ।

## दण्डकारण्ये मुनीनामाश्रमे

रामःदण्डकवनं प्रविश्य विशेषेणानन्दितः । निर्जनायाः झिल्लीरवमुखरितायाः, विविधमृगाकीर्णायाः पुष्पफलभारावनतायाः वृक्षराजिशोभितायाश्च वनस्थल्याः निरुपमसुषमामवलोकयन् अतिदूरमागतो रामः मुनीनामनेकानाश्रमानवलोकितवान् । त एव सकलाः कुशचीरवल्कलपरिव्याप्ता आश्रमा ब्राह्मीशोभाविशिष्टा आकाशस्यदुर्निरीक्ष्य सूर्यमण्डलमिव दीप्तिश्शापलिनः आसन् । सर्वेऽप्येते पवित्राश्रमाः स्वादुफलपूर्णवृक्षसमूहपरिवृताः वेदध्वनिमुखरिताश्चासन् । स्थाने स्थाने ते रमणीयपद्मसरोवरविराजिता मल्लिकामालतीप्रभृति पुष्पवृक्षलताशोभिता,

यज्ञशालासु अजिनकुशसमित् जलपूर्णकलशैर्विविधफलसमूहादि यज्ञीयोपकरणैश्च परिपूर्णा आसन्। महातेजा रामः ब्रह्मवादि ब्राह्मणगण परिशोभितान् सकलानाश्रमानवलोक्य महाधनुर्गुणमोचनपूर्वकं अग्रसरो बभूव। रामसीतालक्ष्मणानवलोक्य महर्षयः परमाग्रहेण मङ्गलाशीर्भिस्तेषां स्वागतम् चक्रुः। ततः महर्षयः अतिथि रामं पर्णकुट्यां नीत्वा अर्घ्यफलमूलपुष्पादिभिः सत्कृत्य कृताञ्जलयः जगदुः—'येन धर्मरक्षार्थं दण्डधारणं कृतं स एव राजा सकलप्रजानां गुरुः माननीयः पूजनीयश्च। इन्द्रस्य चतुर्थोऽशः इह लोके नृपतिरूपेण प्रजापालनकार्यं करोति। नगरे वने वा निवसन् त्वमस्माकं राजा। यतः वयं युष्मद्राज्य एव निवसामः* अतः अस्माकं परिरक्षणं तव सर्वतो भावेन कर्तव्यम्। राजन्! तप एवास्माकं धनम्। वयं जितेन्द्रिया जितक्रोधाश्च दण्डदानेऽसमर्थाः। अत एव गर्भस्थभ्रूणइव आत्मरक्षार्थे नालम्। अस्माकं सर्वथा परिरक्षणं तवोचितम्।'

मुनीनां वचनेन हृष्टमानसः रामः रक्षार्थं तानाश्वासयामास। महर्षयः रामसीतालक्ष्मणान् फलमूलाद्यनेकखाद्यैः पानीयप्रभृतिविविधो-

---

*ऋषीणां वचनेनेदं सूच्यते—दण्डकारण्यं अयोध्यासाम्राज्यस्यैवांशभूतम्। राक्षसोपहतं तज्जनपदं भयमुक्तं विधाय रामचन्द्रेण राजधर्मः पालितः।

पत्रादैश्चातर्पयन्। मुनिभिरित्थं पूजितो रामः तत्र तां रात्रिं सुखेन यापयामास।

## विराधवधः

प्रभाते रामः पूर्वाह्णिकप्रातःकृत्यादि समाप्यानन्तरं मुनीनामाशीर्वादान् गृहीत्वा सीतालक्ष्मणाभ्यां सह क्रमशः घोरं वनं प्रविवेश। इदं च वनं पुष्पितवृक्षलतागुल्मशोभितं, व्याघ्रभल्लूकादिहिंस्रजन्तुबहुलं मयूराणां केकारवैः भ्रमराणां गुञ्जनैः पशुपक्षिणां कलरवैश्च मुखरितं सन् राक्षसानां निवासस्थानमासीत्। धृतशरासनौ रामलक्ष्मणौ सावधानौ सन्तौ अग्रसरावभूताम्। अस्मिन्समये तौ एकं विराट्कायं भीषणदर्शनं राक्षसमवलोकयताम्। अयं राक्षसः परिहितरुधिरार्द्रव्याघ्रचर्मा गभीरकोटरगतनयनः, अतिबृहन्मुखः, विशालोदरः अतिभीषणावयवश्चाभूत्। अयं च घोरदर्शनः राक्षसः कतिपयान् सिंहव्याघ्रहरिणप्रभृतीन् शूलविद्धान्विधाय भीषणगर्जनेन वनस्थलीरकम्पयत्। रामलक्ष्मणौ विलोक्यैव राक्षसः कृताट्टहासः शूलहस्तः कृतान्त इव तौ प्रति वेगेन धावितः। भीतां सीतां च क्रोडे कृत्वा आस्फाल्य चोक्तवान्—, 'शरतूणीरौ जटावल्कलमुनिवेषधारिणौ यूयमत्र किमर्थमागतौ? पुनश्चावलोकयामि द्वावपि युवाम् सुन्दरीं नारीमेकां गृहीत्वा भ्रमणशीलौ। पापाचारिधूर्तौ! इयं सुन्दरी ममैव भवेत्। युवामुभौ हनिष्यामि च।

राक्षसस्य गर्वितवचनं निशम्य रामः शुष्ककण्ठं जगाद—'भ्रातः लक्ष्मण! कैकेय्या मनोभिलाषः अद्य पूर्णो जातः। पश्य सीतां अद्य राक्षसानां कवले! पितृमृत्योः राज्यहरणाच्चापि अधिकतरमिद दुःखम्। आवयोः पुरतः स्त्रीम् परपुरुषः बलादपजहार। अनेन निष्फलजीवनेन किमिदानीं प्रयोजनम्?'

रामस्य खेदोक्तिं निशम्य लक्ष्मणः क्रुद्धःसन् दीर्घनिश्वासपरः जगाद,—'काकुत्स्थ! भवांस्तु महेन्द्रसदृशः महापराक्रमशाली! विशेषतश्च मत्सदृशाज्ञापालनतत्परभृत्येन सहस्थितोऽपि भवान् किमर्थमबलेव शोकं करोति? अहमचिरादेव शराघातेन राक्षसं हत्वा जानकीं मोचयामि।

राक्षसः चीत्कारपरः जिज्ञासितवान्—'कौ युवाम्! क्व प्रयाथः? रामः—इक्ष्वाकुवंशे आवयोर्जन्म। आवां क्षत्रियौ सम्प्रति पितृसत्यपालनार्थं वनमायातौ; त्वं कोऽसि?

राक्षसः—अहं जवस्य पुत्रः; शतह्रदास्मन्माता। 'विराध' इति ममाभिधानम्। ब्रह्मणः प्रसादेन अहमस्त्रैरच्छेद्योऽभेद्यश्च। अथः युवामेतस्या रमण्याः आशां परित्यज्य शीघ्रमितः प्राणरक्षार्थं पलायेताम्'।

रामः तत्क्षणादेव सप्तभिः द्रुतगामिशरैः राक्षसं विव्याध। विराधोऽपि आहतः सन् सीतां स्वक्रोडादुत्तार्य भीषणार्तनादपूर्वकशूल-

हस्तौ तौ प्रति धावितः। रामलक्ष्मणौ प्रदीप्तशरवृष्टिमकुरुताम्। विराधे सहास्यं विजृम्भमाणपरे तच्छरीरात् शराः निर्गत्य मृत्तिकायां पतिताः। रामःबाणद्वयेन विराधशूलं चिच्छेद। ततः रामलक्ष्मणौ तीक्ष्णखड्गाभ्यां विराधमाहन्तुमारब्धौ आहतो राक्षसः रामलक्ष्मणौ हस्ताभ्यां बलात्परिगृह्य स्कन्धोपरि स्थापयित्वा च चीत्कारपरः विजनवनं प्रविवेश।

राक्षसेन रामलक्ष्मणौ नीयमानौ ईक्षमाणा सीता उच्चैःस्वरेण रुदती जगाद—'इदानीं मां व्याघ्रो भल्लूको वा भक्षयिष्यति। हे राक्षसश्रेष्ठ। नमस्तुभ्यम्! त्वमेतौ परित्यज्य मां नयेः।'

इत्थं सीतादुःखोद्गारान्निशम्य रामलक्ष्मणौ तत्क्षणं राक्षसस्य द्वौ हस्तौ चिच्छेदतुः। भग्नबाहुर्विराधो मूर्छितः पतितः। तदानीं तावुभौ राक्षसं हस्तपादमुष्टिभिः आहत्य उत्थानशक्तिशून्यं कृतवन्तौ। तथापि स न म्रियते इत्यवलोक्य रामः लक्ष्मणमगादीत्—'अयं राक्षसः अवध्यः भूमिं निखन्य पूरयितव्यः तदैव मरिष्यते।' त्वया एको महान् गर्तः खनितव्यः।'

इदमुक्त्वा रामः पादेन विराधग्रीवां संघट्य स्थितः, लक्ष्मणश्च खनित्रेण गर्तं कर्तुं प्रवृत्तः। तदैव विराधोऽगादीत्—'मोहवशतोऽहं भवन्तं नाजानाम्। अधुना 'त्वं दशरथसुतः पतितपावनो रामः' इति

मया ज्ञातम् । अहं शापग्रस्तः तुम्बुरुनामागन्धर्वः । रम्भायामासक्तेन मया निजकर्तव्यमुपेक्षितम इति कृत्वा कुबेरशापेनाहं राक्षसः संवृत्तः । शापमुक्तयेऽर्थितः कुबेरः मामब्रवीत्—'दशरथनन्दनरामेण युद्धस्थले हतः त्वं मुक्तिं प्राप्स्यसि पुनः गन्धर्वशरीरं धारयित्वा च स्वर्गमेष्यसि । कृपालुर्भूत्वा त्वयाहं शापमुक्तो विहितः । मङ्गलमस्तु तुभ्यम् ! इतः स्थानाद्योजनान्तरे महातेजस्विनः शरभङ्गमुनेराश्रमः । भवतापि तत्र प्रयातव्यम् । मां गर्ते पूरय । राक्षसानामन्त्येष्टिक्रियाया एषैव सनातनपद्धतिः ।*

ततः लक्ष्मणेन खाते गर्ते रामलक्ष्मणावुभावपि मिलित्वा विराधं तत्र पूरयां चक्रतुः ।

---

* अध्यात्मरामायणे दृश्यते—बलात्सीताग्रहणार्थमागच्छतः विराधस्य द्वावपि बाहू पदयुगलं च रामेण बाणैः छिन्नम् । अर्धचन्द्राकारबाणेन च तस्य मस्तकमपि द्विधाकृतम् । मृत्योः पूर्वं विराधेनोक्तम्—'अहं दुर्वाससाभिशप्तः । कृत्तिवासरामायणे त्ववलोक्यते—विराधेनोक्तम्—'मां दग्ध्वा मारय । मृतराक्षससंस्कारस्य इयमेव सनातनी रीतिः । लक्ष्मणः अग्निं प्रज्वाल्य विराधमदहत् । एवं विभिन्नरामायणेषु विराधवधस्य विभिन्नं विवरणं प्राप्यते । श्रीरामरसायनरामायणे विराधः तस्य पितुर्नाम 'काल' इत्यवादीत् । पुनः कस्मिन्नपि रामायणे स ब्रह्मणाऽभिशप्तः इति प्राप्यते । अयमासी-

## शरभङ्गमुनेराश्रमः

विराधवधानन्तरं रामः सीतालक्ष्मणावगादीत्,—'अरण्यमिदमतीव विपत्सङ्कुलम्। आगम्यताम्, वयं शरभङ्गाश्रमं गच्छेम।' इत्युक्त्वा ते विराधनिर्दिष्टशरभङ्गाश्रमयात्रार्थं प्रस्थिताः।

आश्रमं प्रविश्य दूरादेवालौकिकां घटनामेकामवलोक्य ते स्तम्भितांविव जाताः। तैर्दृष्टम्—'देवराज इन्द्रः दिक्पालैरमरगणैश्च परिवृतः। दिव्यरथमारुह्य शरभङ्गमुनिना सह वार्तालापपरः आस्ते।' राममायान्तमवलोक्य देवराजः अनुयायिनः देवगणानब्रवीत्—'रामागमनात्पूर्वमेव वयं प्रयास्यामः। वयमिदानीं रामं न द्रक्ष्यामः' इत्युक्त्वैव इन्द्रोऽमरगणैः सह दिव्यरथमारुह्यान्तर्हितः।

---

¹चमरुर्नाम गन्धर्वः। वयं तु मन्यामहे—विराधः अग्निदाहेनैव मारितोऽभूत्, अन्यथा एकाकिना लक्ष्मणेन खनित्रमात्रेण गजतुल्यप्रकाण्डशरीरवन्तं विराधं पूरयितुं एतावन्महद्गर्तखननमसम्भवमिव भासते। अपरं च रावणवधानन्तरं तस्याग्निसंस्कारव्यवस्था स्वयं रामेणैव कृतासीत्। राक्षसानामन्त्येष्टिक्रियाया इयमेव चिरन्तनप्रथा इति प्रतिभाति। केषाञ्चिन्मतेन विराधो रावणप्रेरितः आसीत्। रामलक्ष्मणौ हत्वा सीतापहरणार्थमेव स रावणेन नियुक्तोऽभूत्।

वाल्मीकिरामायणवर्णितं विराधवधविवरणं अतीव रोमाञ्चकारी हृदयंगमं च। रामलक्ष्मणौ यत्र सीतयैव रावणादिकान् सहस्रशो

निजचरणवन्दनपरेभ्यो रामसीतालक्ष्मणेभ्यः शरभङ्गो मुनिः स्वागतम् व्याहृत्य तेषामातिथ्यसत्कारायोजनं कृतवान्। रामेण इन्द्रागमनकारणे जिज्ञासिते शरभङ्गोऽब्रवीत्—'अहमुग्रतपस्यया ब्रह्मलोकमर्जितवान्, देवराजश्च मां तं लोकं नेतुमागतवान्; किन्तु 'त्वमागतं' इति ज्ञात्वा मया ब्रह्मलोकप्रयाणं कञ्चित्कालं स्थगितम्। राम! त्वामवलोक्याहं विशेषेण प्रमुदितोऽस्मि। मया तपोबलेन भूर्भुवःस्वः' प्रभृति-अनेक लोकनिवासशक्तिरासादिता तां शक्तिमहं तुभ्यं दास्यामि। प्रार्थयस्व ताम्।'

रामः विनीतभावेनोक्तवान् 'मुनिवर! नास्ते मम कापि अभ्यर्थना। स्वयं तांल्लोकानर्जयिष्ये। इदानीमस्मिन्वने मया क्व वासो विधेयः इत्येवोपदेष्टव्यम्।'

शरभङ्गस्तान् सुतीक्ष्णमहर्षेराश्रमं गन्तुं निर्दिशन्नुवाच—'वत्स! क्षणकालमपेक्षस्व। सर्पः यथा जीर्णत्वङ्मोचनं विधत्ते तथैवाहमपि त्वत्पुरत एवेदं जीर्णशरीरं विहास्यामि।' इत्युक्त्वा शरभङ्गः

---

दुर्धर्षराक्षसान् अवधिष्टाम् तत्र द्वयोरपि सज्जितशरासनयोः दिव्यास्त्रज्ञयोः सावधानयोरपि सतोः विराधः सीतामवस्कन्द्य नीतवान् रामश्चासहाय इव विलपितुमारब्धः; विराधश्च रामलक्ष्मणौ बालकाविव स्कन्धावारोप्य नीतवान् इदमखिलमसामञ्जस्यमिव प्रतिभाति।

मन्त्रोच्चारणपूर्वकं प्रज्वलितहुताशने स्वशरीरमाहुतीकृत्य ब्रह्मलोकं गन्तुं प्रस्थितः ।

श्रीरामचन्द्रस्य दर्शनार्थं शरभङ्गमुनेराश्रमे वैखानसाः बालखिल्या* इत्यादि बहवः ऋषिमुनयः तपस्विगणाश्च समवेता आसन् । शरभङ्गे ब्रह्मलोकं प्रयाते ते राममूचुः—'राम! त्वं तु इक्ष्वाकुवंशे प्रधानः, पृथिवीरक्षकश्च । त्वद्यशोविक्रमौ त्रैलोक्यविख्यातौ वयं तवैव राज्ये निवसामः । ये नृपतयः प्रजापालनं न कुर्युः किन्तु कररूपेण षष्ठभागं गृह्णीयुः तेषां महाननर्थो भवेत् । ये च पुत्रवत् प्रजां पालयन्ति ते चिरस्थायि यशः पुण्यं च सम्पाद्य ब्रह्मलोकं प्राप्नुवन्ति । अस्मिन्नरण्ये ऽनेकर्षिमुनयः ब्राह्मणाः तपस्विनः वानप्रस्थाश्च निवसन्ति ते राक्षसैरुपद्रुता निहताश्च भवन्ति ; त्वया तेषां अस्थिसञ्चयः द्रष्टुं शक्यः। चित्रकूटे पंपासमीपे मन्दाकिनीतीरे च राक्षसगणैः भयंकरात्याचारः प्रारब्धः त्वया वयं रक्षितव्या ।

---

* अस्मिन्समये दण्डकारण्येऽनेकसम्पदायावलम्बिनः मुनयः न्यवसन्—'वैखानसाः (प्रजापति नखजाताः), बालखिल्याः (प्रजापतिलोमजाताः), संप्रक्षलयः (प्रजापतिचरणप्रक्षालनोत्पन्नाः), मरीचिपाः (चन्द्रसूर्यकिरणपानेन प्राणधारिणः) अश्मकुट्टाः (अपक्वकुट्टितान्नभोजिनः), पत्राहारिणः (शाकपत्रभोजिनः, दन्तोलूखलिनः (दण्डकुट्टितान्नभोजिनः), उन्मज्जकाः (कण्ठे आकण्ठनिमज्जनेन तपस्याकारिणः),

रामः सविनयं जगाद—'अहं तु पितृसत्यपालनार्थं वनमागतोऽस्मि राक्षसकृतात्याचारप्रतिकारमपि करिष्यामि, तेनैव मम वनवासः सफलीभविष्यति। भवन्तोऽऽव्याकुलास्तिष्ठन्तु। अथ रामः ऋषिभ्योऽधिगतानुज्ञः अगस्त्यशिष्यसुतीक्ष्णस्याश्रमाभिमुखं प्रतस्थे।

## सुतीक्ष्णाश्रमे रामः

अतिदूरं भ्रमणानन्तरं महर्षिसुतीक्ष्णाश्रममुपस्थितं रामं मुनिवरः गाढमालिङ्ग्यागादीत्—'रघुश्रेष्ठ! तवागमनेन धन्योऽस्मि जातः। मयाऽनेकविधतपस्यया देवलोको विजितः। सुरपतिरिन्द्रः दिव्यरथेन मां नेतुमागत आसीत्; किन्तु केवलं त्वद्दर्शनार्थं देहत्यागपूर्वकं देवलोकं न गतोऽहम्। त्वमस्मत्तपोबललब्धलोकान् गृहाण।'

---

गात्रशय्याः (भूतलशायिनः), अशय्याः (निद्रापरिहारकारिणः), अनवकाशिकाः (एकपार्श्वेस्थितास्तपस्विनः), जलाहारिणः (केवलं जलपानेन जीवन्तः), वायुभोजिनः (वाताहारकारिणः), आकाशनिलयाः (अनावृतस्थाने आकाशतले वासकारिणः), स्थण्डिलशायिनः (यज्ञवेदी शयनपराः), ऊर्ध्ववासीनः (पर्वतशिखरादि उच्चप्रदेशवासिनः), दान्ताः (इन्द्रियदमकारिणः), नियतार्द्रवस्त्रपरिधानकारिणः, सततजपपरायणाः; नित्यवेदाध्यायिनः पञ्चतपोऽनुष्ठायि प्रभृतिऋषिगणाः।

रामचन्द्रः अस्मिन्नेव वनवाससमये निजसाम्राज्ये विद्रोहिनृपान् स्ववशमानीतवान्; बालीवधः रावणवधश्च एतादृशविद्रोहदमनकार्य-

रामः किञ्चिद्विहस्योक्तवान्—'मुनिवर ! न ममान्यार्जित-लोकेन प्रयोजनम् । निजतपोबलेनैव विविधलोकानर्जयिष्यामि । त्वया-अस्मन्निवासार्थं किञ्चिन्मङ्गलप्रदं स्थानमुपदेष्टव्यम् ।

सुतीक्ष्णोऽभाषत—'त्वं ममैवाश्रमे सुखं निवस । इदं स्थान-मनेकऋषिसेवितं विविधमृगप्रचुरं फलमूलपूर्णं च ।

रामो जगाद—'अहमेतानखिलमृगान् शरविद्धान्विधाय हनि-ष्यामि चेद्भवतां मनसि अतीव कष्टं भवेत् । अतोऽस्मिन्नाश्रमे मम चिरनिवासो नोचितः ।' मुनिवरस्यातिथ्यं स्वीकृत्य रामस्तत्र रजनी-मतिवाह्य च परेद्युः प्रभाते यथाविधि देवपूजाहोमादि समाप्त्यनन्तरं सः सुतीक्ष्णमुवाच—'वयं दण्डकारण्यवासिपुण्यकर्मऋषीणां आश्रमान् दिदृक्षवः । अस्माकं मार्गनिर्देशं करोतु भवान् ।'

---

स्यैवांशभूतौ इति प्रतिभाति । दक्षिणभारतमपि अयोध्याधीनमासीत् अनार्या ताडका मारीचः सुबाहुप्रभृतयः राक्षसा वा वर्तमानविहार-प्रान्तस्य कञ्चिद्देशं स्वाधिकारे कृतवन्तः । उत्तरप्रदेशस्य चित्रकूटप्रभृ-तिस्थानानि समग्रमपि जनस्थानं च रावणवंशीयैरधिकृतमासीत् । रामः वनवाससमये सकलराज्योद्धारं विधाय लङ्कापर्यन्तमधिकारविस्तृतिं चकार । रामचन्द्रस्येदमभिधानं 'Aryanisation of the South' (दक्षिणभारतस्यार्यीकरणमिति वक्तुं शक्यते ।

सुतीक्ष्णः रामं विभिन्नऋषीणामाश्रमं गन्तुमुपदिश्योक्तवान्—'एतानाश्रमानवलोक्य पुनरत्रागन्तव्यं युष्माभिः।'

## अहिंसाविषये सीताया उपदेशः

सुतीक्ष्णाश्रमात् प्रस्थाय सीता रामं प्रति मनोहरवचनमुक्तवती—'आर्यपुत्र! त्वया ऋषिणां समिधे राक्षसवधार्थं या प्रतिश्रुतिर्दत्ता तेन त्वन्मङ्गलचिन्तया मम मानसमधिकतरं शङ्कितमास्ते। अहिंसा एव परमो धर्मः। सा एव तपस्विनां चिरन्तनी रीतिः; मिथ्यावचनं, व्यभिचारः, हिंसा च एतान्येव त्रीणि कामजव्यसनानि मनुष्यानधर्मकवलितान्विधत्ते। आद्यं तु दोषद्वयं तव नास्त्येव, तृतीयमपि त्वया त्यक्तव्यम्। हे राघव! अस्त्रधारणेन मनसि सर्वदा हिंसाविचार एव जागर्ति। त्वं तु पितृसत्यपालनार्थं वनवासरूपां तपस्यां स्वीकृतवान्; अतः तपस्विनां धर्म एव त्वया पालनीयः। शत्रुतां विना राक्षसानामपि वधस्तव नोचितः। अयोध्यां प्रत्यावर्त्य क्षात्रधर्मस्त्वया पालनीयः।'

सीतायाः धर्मसम्मत 'वाक्येन प्रीतो रघुकुलमणिरवोचत्—'प्रिये! यदुक्तं त्वया तद्धर्माविरोधि, किन्तु राक्षसैः असंख्यऋषिमुनिगणाः तपस्विनः ब्राह्मणाश्च हताः। ते राक्षसभीता मां शरणागताः। आर्तत्राणं राजधर्मः क्षत्रियधर्मश्च। मया तु तेभ्यः प्रतिश्रुतिर्दत्ता। अहं सत्यनिष्ठः। सत्यरक्षार्थं स्वीयजीवनत्यागमपि

विधास्यामि। त्वां लक्ष्मणं च परित्यजेयम्। अतः ऋषिरक्षार्थकृत-प्रतिज्ञोल्लङ्घनं मत्कृतेऽसाध्यम्।' राम वचनेन सीता तूष्णीं स्थिता।

## माण्डुकर्णेराश्रमः

धनुर्धारी रामः अग्रतः, मध्ये सीता, पश्चाल्लक्ष्मणश्च अरण्य-शोभामीक्षमाणाः प्रचलिताः। इदमरण्यमनेकनदीपरिशोभितं सर्वर्तु-फलपुष्पपरिपूर्णं स्वच्छन्दतया भ्रमद्भिः विविधमृगकुलैः समाकीर्णं अनेकविधविहंगकुलकलरवमुखरितं चासीत्। क्रमशः तेऽतिदूरमन्तर-मतिक्रम्य संध्यासमये श्वेतरक्तोभयविधपद्मपरिशोभितं, तटविहारिगज-यूथैरलङ्कृतं, जलचरसारसहंसगणपरिव्याप्तम्, प्रशस्तमेकं स्वच्छसलिलं रमणीयं तडागमद्राक्षुः। तत्सरोवराभ्यन्तरतः उत्थितं मधुरवाद्यगीत-ध्वनिं निशम्य कुतूहली रामः धर्मभृतनामानं मुनिमेकं पृष्टवान्—'सोऽब्रवीत्—' माण्डुकर्णिर्नाम महामुनिः स्वतपोबलेन एतत्सरोवरस्य सृष्टिं कृत्वा केवलं वायुभक्षणेन दीर्घकालपर्यन्तं तपस्तेपे। ततः अग्नि-प्रभृतिदेवगणाः तत्तपस्यायां विघ्नोत्पादनार्थं विद्युत्प्रभाशालिनीः पञ्च अप्सरसः प्रेषितवान्। तद्रूपयौवनमुग्धः माण्डुकर्णिः ता उद्वाह्य तपोभ्रष्टः सन् सरोवराभ्यन्तरे मनोहरमेकं हर्म्यं निर्माय तत्र निवसति। तासा-मेवाप्सरसां संगीतध्वनिरयं श्रूयते।

मुनेरलौकिक शक्तिवर्णनमाकर्ण्य रामः विस्मयान्वितोऽभूत्।

## दण्डकारण्ये विभिन्नाश्रमेषु दशवर्षाणि

अनतिदूरं स्वर्गीयशोभाविशिष्टं रमणीयमेकमाश्रममवलोक्य रामसीतालक्ष्मणाभ्यां सह सुखेन तत्र रात्रिमतिवाह्य क्रमशः ते दण्डकारण्यगतानखिलानाश्रमानवलोकयन्तोऽभ्रमत् । ते सर्वे क्वापि दशमासान्, कुत्रापि षण्मासान्, कुत्रचिन्मासत्रयम्, अन्यत्रचाष्टमासान्, मासार्धं वत्सरं वान्यवसन् । इत्थं तेषां दशवर्षात्मकः कालो व्यतीतः । पुनस्ते सुतीक्ष्णमुनेराश्रमं प्रत्यागताः । तत्र कतिचिद्दिवसानन्तरं रामः सुतीक्ष्णऋषेः सकाशात् महामुनि-अगस्त्याश्रमविषयकसूचनामधिगम्य सभ्रातृकागस्त्यमुनेर्दर्शनार्थं प्रस्थितः । प्रस्थानात्पूर्वं तैः (रामसीतालक्ष्मणैः) अगस्त्यमुनिना तपोबलेन वातापील्वलनामकमहाक्रूरराक्षसद्वयं कथं हतमिति सुतीक्ष्णतः आकर्णितम् ।

### अगस्त्याश्रमः

दीर्घभ्रमणानन्तरं रामसीतालक्ष्मणः अगस्त्यभ्रातुराश्रममागत्य तत्र रजनीमेकामुषित्वा च परस्मिन्दिने चिरकालाभिलषितं अगस्त्यस्य रमणीयमाश्रमपदमुपस्थिताः । कस्यचिच्छिष्यस्य मुखतः तेषामागमनप्रवृत्तिमधिगम्य अगस्त्यमुनिः शिष्यवृन्दपरिवृतः रामाय स्वागतं व्याजहार । रामोऽपि वन्दितमुनिचरणः कृताञ्जलिः पुरतः स्थितः । अर्घ्यपाद्यादिभिः पूजयित्वा विविधफलमूलैश्च सादरं सम्मान्य अगस्त्यो

राममुक्तवान्—, काकुत्स्थ। यदि तपस्वी अतिथिसत्कारपरो न भवेत् तर्हि परलोके तेन निजमांसभक्षणं कर्तव्यमास्ते। त्वं तु महारथी धर्मानुष्ठानपरः सकललोकानां नृपतिः; अतः त्वमस्माकं माननीयोऽतिथिः। चिरादहं त्वत्प्रतीक्षापर आसम्। अद्य त्वामवलोक्य अतिप्रमुदितः। हे पुरुषसिंह! देवराजेन मह्यम् विश्वकर्मनिर्मितं स्वर्णवज्रमणिविभूषितं दिव्यं महच्चेदं वैष्णवं धनुः, सूर्यतुल्यप्रभाविशिष्टममोघं ब्रह्मदत्तं नाम उत्तमसुवर्णनिर्मितं हेमविभूषितं खड्गं अनलसमदीप्तिशालितीव्रशरसमूहपरिपूर्णमक्षयतूणीरद्वयं च प्रदत्तानि। हे मानद! यथा इन्द्रः वज्रं धारयति तथैव त्वमपि अरिविजयार्थीसन् एतान्धनुर्बाणखड्गतूणीरान् गृहाण।'

इदमभिधाय अगस्त्यः रामाय तानि सकलदिव्यास्त्राणि समर्प्य जगाद हे रघुनन्दन! त्वदागमनेनालङ्कृतोऽयंदेशः। त्वया विदेहनन्दिन्या लक्ष्मणेन च सार्धमत्रैववासः कर्तव्यः।'

## अगस्त्याशीर्वादः पञ्चवटीगमनं च

रघुनन्दनो रामः सकलदिव्यास्त्राणि स्वीकृत्य विनीतोऽवादीत्—'मुनिवर! भवान् मम गुरुः। भवतः कृपाभाजनतामेत्य धन्योऽहम। इदानीं त्वयैतादृशं काननपरिशोभितं किञ्चित्स्थानमुद्देश्यं यत्र अल्पायासेनैव जलं प्राप्यते। आश्रमनिर्माणपूर्वकं वयं सुखेन तत्र निवत्स्यामः।'

अगस्त्यः कंचित्कालं तूष्णीं स्थित्वा राममुवाच—'राम! त्वं भूभारहरणार्थं भूतलमवतीर्णः। इदानीं पृथिवी भारभूतं राक्षसकुलं समूलमुच्छिद्य तपस्विरक्षाप्रसितो भव। योजनद्वयान्तरे गोदावरी-नदीतीरे 'पञ्चवटी' नाम विविधफलमूलपूर्णः अस्ति कश्चिद्रमणीयः प्रदेशः। तत्रैव त्वया चतुर्दशवर्षाणां अवशिष्टकालं यापयित्वा देवतामङ्गलकार्यं सम्पादनीयम्।

अनन्तरं रामः अगस्तिमुनेः स्तुतिं वन्दनं च विधाय सीतालक्ष्मणाभ्यां सह मुनिप्रदर्शितमार्गेण पञ्चवटीमुखं प्रस्थितः।

## जटायुसंवादः

मार्गे गच्छन् दूरात् गिरिशिखरसदृशमेकं महाकायं पक्षिणम-वलोक्य रामः लक्ष्मणमुवाच—'सौमित्रे! पश्य पुरतः कियान् भयंकरराक्षसः! ऋषिभोजिनमिममहं हनिष्यामि।

रामवचनमाकर्ण्य पक्षिराजः भयेन आत्मपरिचयं दत्वोवाच—'राम! अहं तु तव पितुः सखा, अतः अवध्योऽस्मि तव।' तदानीं रामेण तस्य विशेषपरिचयजिज्ञासाकृता*

---

* वाल्मीकिरामायणे दृश्यते—गृध्रराजः जटायुः स्वपरिचय-दानप्रसङ्गे प्रोक्तवान्—'प्रथमः प्रजापतिः कर्दमः' ततः विकृतः शेषः संश्रयः स्थाणुः, मरीचिः, अत्रिः, क्रतुः पुलस्त्यः, अंगिराः

पक्षी सृष्टिक्रममुपवर्ण्योक्तवान्—'अस्मत्पितुर्नाम 'अरुणः' माता च 'श्येनी'; सम्पातिः मम ज्येष्ठो भ्राता; 'जटायु'रिति ममाभिधानम्। वत्स! त्वमिच्छसि चेत् तव पञ्चवटीवाससमयेऽहं सीतारक्षणतत्परो भविष्यामि।'

---

प्रचेताः, पुलहः, दक्षः, सूर्यः, अरिष्टनेमिश्च इति प्रजापतयः अन्ते महातेजाः कश्यपप्रजापतिरभूत्। दक्षप्रजापतेः षष्टिः कन्या जाताः तासां मध्ये अदितिः, दितिः, दनुः, कालका, ताम्रा, क्रोधवशा, मनुः अमला च। एतासामष्टकन्यकानां कश्यपः पाणिग्रहणमकरोत्। अदितिगर्भे द्वादशादित्याः, अष्टवसवः, एकादश रुद्राः, स्वर्गवैद्यद्वयं (अश्विनौ) एतास्त्रयस्त्रिंशद्देवता जाताः। दितेः गर्भतश्च दैत्यगणा उत्पन्नाः। दनुः (प्रजापतिकन्या) अश्वग्रीवनामकं पुत्रं कालका च नरककालकनामानौ पुत्रौ अजीजनत्; ताम्रा च भासी, क्रौञ्ची, धृतराष्ट्री शुकी चेति पञ्चकन्याः प्रासूत। क्रौञ्ची उलूकान्, भासी भासान्, श्येनी गृध्रश्येनान्, धृतराष्ट्री हंसकलहंसचक्रवाकान् शुकी च 'नतां' प्रसूतवती नतायाः विनतानाम्नी कन्या जाता। क्रोधवशा—मृगी, मृगमदा, हरी, भद्रमदा, मातङ्गी, शार्दूली, श्वेता, सुरभिः, सुरसा कद्रूः इति दश कन्याः प्रासूत। मृगीगर्भे मृगगणाः ऋक्षाः सृमरा जाताः; मृगमदातश्च चमराः प्रसूताः। भद्रमदाया इरावती नाम कन्या जाता। इरावतीगर्भे ऐरावत नामा

रामः जटायुषं पितृसखं मत्वा तमालिङ्ग्यावन्दत पञ्चवटीं गन्तुं च प्रस्थितः ।

## पञ्चवट्यामाश्रमनिर्माणम् ।

पञ्चवट्यां गोदावरीतीरमासाद्य रामः पुष्पिततरुलतावेष्टिते प्रशस्तसमतलमनोरमस्थाने लक्ष्मणसहायेन कतिपयैरेव दिवसैः एकां बृहतीं पर्णशालां निर्मितवान् । समीपमेव पद्मशोभितं सरोवरं, कदम्बपनसाम्राशोकचम्पकप्रभृतिवृक्षराजयः आसन् । एकस्मिन् शुभदिने रामलक्ष्मणौ गोदावरीजले स्नात्वा प्रभूतपद्मपुष्पाणिफलानिचाहृत्य वास्तु-

---

महागजः सम्भूतः । सिंहा गोलाङ्गूलाः अन्ये वेगवन्तः वानरगणाः हरीगर्भतः प्रसूताः । शार्दूली व्याघ्रान्, श्वेता दिक्पालान् हस्तिनः, मातङ्गी चेतरगजान्प्रसूतवती । सुरभेः रोहिणि गन्धर्वी चेति द्वे कन्ये, रोहिणी गोजातिम्, गन्धर्वी अश्वान् सुरसा नागान् कद्रूश्च सर्पानजीजनत् । कश्यपस्योरसः ब्राह्मणक्षत्रियवैश्यशूद्रा इति चतुर्वर्णमनुष्याः उत्पन्नाः । कद्रूः धरणीधारिणः सहस्रं नागान् प्रसूता । विनतायाः पुत्रद्वयम्— गरुडः अरुणश्च ।'

जटायुवर्णनानुसारं सर्वदेवताः दैत्यगणाः मनुष्यपशुपक्षिप्रभृतयः प्राणिगणाः सर्वेऽपि कश्यपदक्षप्रजापति कन्यावंशीया अतः सर्वेऽपि समजातीयाः ।

पूजाहोमादिसमाप्त्यनन्तरं नवनिर्मितां कुटीं प्रविविशतुः। सीतापि नूतनकुटीं परितः सुरभिपुष्पविटपिलताः समारोप्य तत्स्थानं सुशोभितं मनोहरं च कृतवती।

## शूर्पणखासंवादः

इत्थं रामः सीतालक्ष्मणाभ्यां सह पञ्चवट्यां सुखेन निवासं चकार। क्रमेण हेमन्तर्तुः समायातः। एकस्मिन्नहनि प्रातः गोदावर्यां स्नात्वा रामे सीतालक्ष्मणाभ्यां सार्धं अयोध्याविषयकवार्तापरेऽकस्मात्तत्रैका सुकेशा राक्षसी उपस्थिता। देवतुल्यमायतलोचनमिन्दीवरश्यामं कन्दर्पोपमं राजलक्षणयुतं बले महेन्द्रतुल्यं महाबाहुं सुकुमारं राममवलोक्य राक्षसी मदनपरवशा सती तं पृष्टवती—'त्वं तपस्विवेशे करकृतधनुर्बाणः स्त्रियं गृहीत्वा राक्षससेवितमिमं वनं किमर्थमागतोऽसि?'

रामोऽपि ऋजुभावेन स्वकीयपरिचयं दत्वा तां पप्रच्छ—'कात्वम्? किमर्थमागता?'

शूर्पणखा सस्मितमुक्तवती—'अहं शूर्पणखा। लंकाधिपतिः रावणः, धर्मात्मा विभीषणः, महाबलः कुम्भकर्णश्च मम भ्रातरः। महाबलभ्रातुः खरस्य सहायेनाहमत्र जनस्थाने शासनकार्यपरास्मि। अहं बलवती। रावणेन युद्धार्थं प्रेरितोऽस्मत्स्वामी हतः। अतः रावणः चतुर्दशसहस्रसैन्ययुक्तसेनापतिदूषणेन सह जनस्थाने आधिपत्य-

विस्तारार्थं प्रेषितवान् । त्वां दृष्ट्वैव मोहिताऽहम् । त्वं प्रभावशालिन्या मम स्वामी भवेः ।'

रामः किञ्चिद्विहस्याब्रवीत्—'अहं तु विवाहितः, मया सह मम सुन्दरी पत्नी अपि विद्यते । त्वादृशनारीकृते सपत्न्या सहवासः नोचितः । अयं मम कनिष्ठभ्राता लक्ष्मणः सच्चरित्रः, प्रियदर्शनः, श्रीमान्, वीर्यवान्, युवा च । अनेन सह तस्य भार्यापि न विद्यते । अतः हे वरानने! तमेवपतित्वेन स्वीकुरु ; तेन त्वं सुखिनी स्याः ।'

शूर्पणखा तत्क्षणमेव रामं परित्यज्य लक्ष्मणमुपगम्योक्तवती—'हे सुन्दर! त्वं ज्येष्ठभ्रातुरनुमत्या मम पतिः स्याः । तवैतद्रूपं बलं च ममैव योग्यम् ।'

लक्ष्मणः किञ्चिद्विहस्योवाच—'अहमग्रजस्य दासः; मां वृत्वा त्वया तु तस्य दास्या भवितव्यम् । त्वमग्रजस्यैव द्वितीयपत्नी भवेः । रामः निजपुरातनपत्नी परित्यागपूर्वकं त्वामेव सेविष्यते ।'

शूर्पणखा लक्ष्मणस्य परिहासवाक्यमजानती पुनरपि रामसमीपं गताक्रुद्धा च राममुवाच—'त्वं स्वकृशोदरीं पत्नीं विहाय मामेवाङ्गीकुरु नोचेदस्मिन्नेव क्षणेऽहमेतां हनिष्यामि ।' इति वदन्ती सा आरक्तनयना भीषणदर्शना शूर्पणखा वेगेन सीतां धर्तुं धाविता ।

तदानीं रामोऽब्रवीत्—'सौमित्रे! किमर्थमनार्ययानया सह त्वं

परिहासपरोऽसि? एतस्यै समुचिता शास्तिः प्रदातव्या। किं न पश्यसि सीता भयेन मृतप्राया संवृत्ता!'

लक्ष्मणस्तत्क्षणमेव खड्गं कोशमुक्तं विधाय शूर्पणखायाः कर्णनासिकं चिच्छेद,* रुधिराक्तशरीरा भीषणार्तनादपरा शूर्पणखा

---

*शूर्पणखाकर्णनासिकच्छेदनं अनेकविधकाव्यरचनायाः विषयो जातः। किन्तु एतत्सर्वं बीभत्समिव प्रतिभाति। श्रीरामचन्द्रस्य पुरतः एतादृशघटनासम्भवो भवेदिति न मन्यामहे।

शूर्पणखा रावणस्य भगिनी एतत्प्रान्तस्य शासनकर्त्री च। सा नितान्तदुर्बलाङ्गी इत्यपि वक्तुं न शक्यते।

रामचन्द्रं प्रति शूर्पणखा आत्मपरिचयं दत्वा स्वमनोभावं कस्यां भाषायां प्रकटितवती? अनेकेषां मतेन तस्मिन्युगे समग्रे भरतखण्डे भारतेतरदेशे च—लङ्काप्रभृति स्थानेषु देवभाषैव प्रचलिता आसीत्। वानरा राक्षसा वा देवभाषायामेव परस्परालापमकुर्वन्। उच्चवर्णानामभिजातानां च मध्ये अन्तर्देशीयभाषारूपेण संस्कृतप्रवचनं भवितुं शक्यम्; किन्तु सर्वत्रैव संस्कृतभाषाप्रचार आसीत् इति प्रमाणीकर्तुमनेकेऽन्तरायाः सन्ति।

केषांचिद्रामायणानां मतेन शूर्पणखा रावणकृते सीतामपहर्तुमागतासीत। चतुर्दशराक्षसानां सहायेन च रामं पराभूय सीतां नेतुं प्रचलितवती।

क्रन्दन्ती सत्वरं भ्रातुः खरस्य समीपमेत्य निजदुर्दशां ज्ञापयित्वा प्रतिशोधग्रहणार्थं तमुत्तेजितवती।

---

प्रथमतः चतुर्दश दुर्धर्षराक्षससेनापतिभिः सह शूर्पणखा युद्धार्थमागता। तदा रामः चतुर्दशनाराचास्त्रैः चतुर्दशराक्षसान् जघान—किन्तु शूर्पणखा अक्षतशरीरा प्रत्यावृत्ता। अर्थात् रामः 'शूर्पणखां स्त्री' इति कृत्वा तां न अवधीत्।

शूर्पणखावृत्तान्तः केवलं प्रहसनमिति भाति। पारिपार्श्विकाः समसामयिकाश्च (तत्कालावलम्बिन्यः) विविधघटनाः विश्लेषणेन अत्यावश्यपूर्णा भासन्ते। विभिन्नरामायणकथा संग्रहात् इदमपि लभ्यते—यत् सीतां प्रत्यासीद्रावणस्य प्रच्छन्नोऽनुरागः। हरधनुर्भङ्गे समर्थः सन् वीर्यशुल्कां सीतामप्राप्य विफलमनोरथः रावणः यदा 'रामः सीतया सह पञ्चवटीवने निवसति' इत्यज्ञासीत् तदा सीतामधिगन्तुं तेन शूर्पणखा नियुक्ता। अत्रासफलीभूय स्वयमेव सीतां बलादपहृत्य नीतवान्; सीतया सार्धं विवाहं कृत्वा तां पत्नीरूपेणाधिगन्तुं संवत्सरपर्यन्तं सधैर्यं प्रतीक्षां कृतवान्।

बङ्गदेशे शूर्पणखां विषयीकृत्य विचित्रकाव्यरचना चित्राङ्कनं च वर्तिनमस्ति। कस्यापि रामायणस्य मते शूर्पणखा रामदर्शनेन मोहिता। अफलप्रेम्णः परिशोधार्थं स्वयमेवात्मानं विरूपीकृत्य रावणसमीपं मिथ्याभियोगं प्रदर्श्य रावणमुत्तेजितवती।

## राक्षसैः सह युद्धम्

तत्क्षणमेव खरः चतुर्दशमहाबलराक्षसान् आहूयोक्तवान्—'अस्मिन्नरण्ये नरद्वयं कयाचिन्नार्या सह निवसति । यूयं तौ विनाशयत । ताभ्यामस्मद्भगिनी लाञ्छिता अपमानिता च ।'

खरेणादिष्टा शूर्पणखा चतुर्दशप्रशस्त्रराक्षससेनापतिभिः सह रामस्याश्रममागता । रामः दूराद् राक्षसानवलोक्यैव स्वर्णखचित शरासने ज्यामारोपयन् धनुष्टिङ्कारं दत्तवान् । राक्षसा निशितशूल-निक्षेपं कृतवन्तः । रामः शराघातैः लीलयैव सकलान्तान् शूलान् खण्डशोविधाय चतुर्दशनाराचैः अखिलराक्षसविनाशं कृतवान् ।

शूर्पणखामुखेन चतुर्दशवीरनिधनवार्तामाकर्ण्य खरः क्रोधेन प्रजज्वाल । अविलम्बेन चतुर्दशसहस्रराक्षससैन्यं सेनापती त्रिशिरसं दूषणं च गृहीत्वा युद्धयात्रां चकार ।

सैनिककोलाहलं रणभेरीशब्दं च निशम्य रामः लक्ष्मण-मब्रवीत्—'अद्य घोरतरं युद्धं भविष्यति । हे महाबल! त्वया शीघ्रमेव धनुर्गृहीतव्यम् । सीतां च नीत्वा गुहाश्रितां कुरुष्व । अहमेकाकी एव राक्षसविनाशे समर्थो भवेयम् । त्वया सीता रक्षणीया ।'

रामः कठोरशरासनं, अक्षयशरान्, तूणीरयुगलं च गृहीत्वा घृताग्नितुल्योज्ज्वलकवचः ज्यानिनादैश्च सर्वा दिशो निनादिताश्चकार ।

सः क्रुद्धरुद्रसदृशं बद्धपरिकरः स्थित आसीत्। ततः राक्षसगणाः रामस्योपरि शतशः शरान् विविधशिलाखण्डांश्च निक्षिप्य सिंहनादं कर्तुमारेभिरे। रामः लीलयाक्षणादेव तदखिलमस्त्रजालं एकैकशः शकलीकृत्य शरजालैः राक्षसान् भूमावपातयत्। अल्पसमयेनैव खरप्रेरितमधिकतरसैन्यं निहतमासीत्।

तदानीं दूषणप्रेषितं पञ्चसहस्रसंख्याकसैन्यं राममाचक्राम। रामः भैरवनादेन दिशः प्रकम्प्य दिव्यगान्धर्वास्त्रं युयोज, यस्मात् सहस्रशः शराः निर्गत्य दूषणं राक्षसांश्च धरातले पातयामासुः।

पुनः त्रिशिराः सहस्रावधि सैन्यं गृहीत्वा रामं प्रति धावितः। रामः शरत्रयेण त्रिशिरसः मस्तकत्रयं छित्वा नानादिव्यास्त्रैः राक्षसानां पूर्णतया संहारं कृतवान्।

## खरदूषणयोः त्रिशिरसश्च वधः

संख्यातीतसैन्यं च निहतमवलोक्य खरः रथमारुह्य अवशिष्ट सेनया सार्धं रामं प्रति धावितः। सः नाराचप्रभृत्यनेकशरनिक्षेप-पूर्वकं रामस्य धनुर्बाणकवचान् छित्वा जगर्ज। रामः शरविद्धः क्रुद्धश्च भूत्वा वैष्णवधनुषि सकलदिव्यास्त्राणि योजयित्वा खरस्य धनुर्बाणौ रथं ध्वजं च खण्डितवान्। रथं अश्वान् सारथिं च विनाश्य इन्द्रप्रदत्तब्रह्मदण्डतुल्यबाणेन तं निपात्य कालान्तक इव गर्जितु-मारब्धः। हतावशिष्टा राक्षसगणाः पलायिताः। रामखरयोः

रोमहर्षणयुद्धमवलोकयितुं अन्तरिक्षे समवेता देवगणाः हर्षध्वनिं पुष्पवृष्टिं च व्यदधुः। अगस्त्यादिऋषिगणः रामाभिवन्दनं विधाय जगदुः—'हे दशरथात्मज! एतेषां दुर्दान्तपापचारिणां राक्षसानां नाशार्थमेव त्वां ऋषिगणा अस्मिन्देशे प्रेषितवन्तः। त्वया सर्वेषां राक्षसानां वधं विधाय ऋषीणां प्राणरक्षा विहिता।

## शूर्पणखारावणसंवदः।

खरदूषणत्रिशिरसः भीमकर्म चतुर्दशसहस्रराक्षसाश्च युद्धे रामेण विनाशिता इत्यवलोक्य रावणभगिनी शूर्पणखा मेघवद्गर्जन्ती अकम्पनदूतेन सह रावणस्य लङ्कापुरीमभ्येत्य राजसभामुपस्थिता क्रन्दितुमारब्धा। रावणस्तां विकृताननां भयविह्वलां च समीक्ष्य सस्नेहमपृच्छत्—'भगिनि! उत्तिष्ठ। केन त्वमीदृशी विरूपी कृतासि? कथय, अहं तमचिरादेव विनाशयामि।

शूर्पणखा क्रन्दती उवाच—'त्वं प्रमत्तः मूढबुद्धिः पानासक्तः स्त्रैणश्च। सर्वत्र षण्ढवत् प्रतीयमानस्य ते चाररूपं चक्षुः। राज्यरक्षां कथं विधास्यसि? राक्षसारिरामेण एकाकिना युद्धे खरदूषणत्रिशिरसः चतुर्दशसहस्रमहाबलराक्षसाश्च निहताः। त्वं तु तस्याधुनापि कमपि प्रतिकारं न करोषि।

रावणः सक्रोधमुवाच—'कोऽयं रामः। कथं तेनास्मद्बलं निहतमिति सविस्तरं ब्रूहि। तमहं शीघ्रं यमसदनं प्रेषयिष्यामि।'

शूर्पणखा रामलक्ष्मणपरिचयंप्रदानं विधायोवाच—'अहमेकस्मिन्नहनि गोदावरीतिरे पञ्चवटीं गत्वा अमितवीर्यौ रामलक्ष्मणाववलोकितवती। रामेण सार्धमायतलोचनास्ति लक्ष्मीरिव सुन्दरी काचित्स्त्री। सा तु स्त्रीरत्नम्। न देवाङ्गना नापि गन्धर्वी तत्सदृशी वर्तते—नूनं सा काननमिदमालोकितमिवकुर्वन्ती तिष्ठति। 'तामेव सुन्दरीं तत्र पत्नीं करिष्यामि' इति मनसि कृत्वा तदर्थमुद्यतां मां लक्ष्मणः छिन्नकर्णनासिकां विधाय विविधप्रकारेण प्रताड्य बहिष्कृतवान्। मत्सकाशादाकर्णितसकलवृत्तान्तः खरः दुर्धर्षराक्षसादीन्गृहीत्वा रामेण सार्धं योद्धुं प्रयातः। किन्तु एकाकिना रामेण क्षणार्धात् सराक्षसबलः खरः हतः। रामस्तु निमेषार्धमात्रे त्रैलोक्यमपि जेतुं शक्नुयात्। तस्य स्त्रियालिङ्गितस्यैव तव जीवनं सार्थकं भविष्यति। त्वं चेत्तस्त्रियमानेतुं समर्थो भवेस्तर्हि स रामः शोकेन कृशः सन् मृत्युमुखे पतिष्यति। रामे जीवति युद्धं कृत्वा तामानेतुं त्वमसमर्थः। अतः मायाबलेन सीताहरणार्थं इदानीमेव दक्षिणपदसञ्चरणमारभस्व।

शूर्पणखावचनं निशम्य रावणस्तामाश्वास्य दीर्घं निःश्वस्य च समागृहमत्याक्षीत्। रावणः रात्रावपि विनिद्रः अस्थिरचित्तश्च समचिन्तयत्। कश्चित्साधारणमनुष्यः ससैन्यं खरं निहतवान्? अथवा रामः मां हन्तुमेव ब्रह्मणा प्रेषितः किमु? पुनर्मनासि रावणोऽचिन्तयत्—'यदि परमात्मा रामः मां विनाशयेत् तर्हि

कृतसायुज्यमुक्तिलाभोऽहं वैकुण्ठलोके निवत्स्यामि।' अतः रामेण सार्धं विरोधकरणं निश्चित्य सीताहरणविषये चिन्तनपरो बभूव।

सीताहरणप्रयोगः

परेद्युः प्रभाते रावणः मन्त्रिगणेन सार्धं कृतपरामर्शः स्वर्णमयं रत्नजटितं पिशाचवदनखरनियोजितमेकं रथमारुह्य * तीर्णसागरः मारीचाश्रममुपस्थितः। विश्वामित्रयज्ञरक्षासमये सिद्धाश्रमे रामबाणेनाहतो मारीचः पलाय्य छद्मवेशेन दण्डकारण्ये वासमकल्पयत्। नानाविधमायाविस्तारपूर्वकं च ऋषिमुनीनामाश्रमे उपद्रवं कर्तुमारब्धः।

मारीचाश्रमः

रावणः मारीचसमीपं सीताहरणरहस्यं प्रकटीकृत्य तस्य सहायं चापेक्ष्योक्तवान्—'त्वमिह धृतरजतबिन्दुचित्रितस्वर्णमृगरूपः रामाश्रममेत्य सीतापुरतः विचरितुमारभस्व। नूनं सीता तादृशहरिणग्रहणार्थं रामलक्ष्मणौ प्रार्थयेत्। रामे मृगानुसरणतत्परेऽहं सीतामनायसेन हरिष्यामि।'

श्रुतरावणवचनः मारीचः भयेन शुष्ककण्ठः निजोष्ठलेहनपरोऽब्रवीत्—'राक्षसराज! येन भवतः एतादृशोपायः सूचितः

---

* वाल्मीकिरामायणे प्राप्यते कुबेरस्य कनिष्ठभ्राता श्रीमान् रावणः मेघगम्भीरनादः कामगामी रथमारुह्य आकाशमार्गेण समुद्रमुल्लङ्घ्य मारीचाश्रममुपस्थितः।

स खलु शत्रुरूपः। भवता चराः न नियुक्ताः अत एव महेन्द्रवरुण-सदृशपराक्रमं रामं न जानासि। रामेण सार्धं शत्रुतायाः भवतः मृत्युरेव निश्चितं फलम्।' मुमूर्षुर्यथौषधसेवनं परिहरति तथैव रावणोऽपि मारीचस्य हितवाक्यं नाश्रणोत्। कठोरवचनेन रावणोऽगादीत्—'कृतसंकल्पं मां न कोऽपि निवर्तयितुमलम्। मदङ्गीकृत-कार्यस्य गुणदोषविचारार्थं नाहं त्वत्समीपमागतः; केवलं तव सहायमिच्छामि।

तथापि मरीचः सभयमुक्तवान्—'राजन्! नाहं स्वमृत्यु-कृतेव्याकुलः। रामहस्तेन मृत्यौ धन्यो भविष्यामि, किन्तु भवतः सवंशध्वंसो भविष्यति इत्येव मम दुःखम्। तथापि गमिष्यामि, आगम्यताम्।'

## मायामृगग्रहणे कौतूहलम्

रावणः मारीचं रथे स्थापयित्वा रामाश्रमसमीपं रथादवतीर्णः ततः मारीचः चित्रमृगरूपं धारयामास। अस्य मृगस्यवर्णः सुवर्णसदृशः, गात्रं रजतमयबिन्दुशोभि, शृङ्गे रत्नमये, खुराः मणिमयाः, नेत्रे नीलरत्नखचिते प्रभाविद्युत्सदृशी मुखं च कमनीयमासीत। मृगरूपधारी मारीचः आश्रमसमीप सीतादृष्टिमाकर्षत् नृत्यपरो बभूव।

सीता विचित्राङ्गमिमं मृगमवलोक्य एतादृशी मुग्धा जातायत् तं मृगं धृत्वाऽऽनेतुं साराममसकृदनुरुरोध। लक्ष्मणः ससन्देहमुक्त-

वान् 'एतादृशो मृगस्तु कदापि न दृष्टः। ध्रुवमेतन्मायाविनः मारीच-स्येन्द्रजालम्।'

मायामृगमवलोक्य सीताबुद्धिशुद्धिर्विलुप्तेव। सा लक्ष्मण-वचनमवरुध्याब्रवीत्—''आर्यपुत्र! अयं रुचिरमृगः मम मनः हरति। त्वयायं धृत्वाऽऽनेतव्यः। अहं तेन सह क्रीडितुमिच्छामि।

## मायामृगवधः

सीतायाः साग्रहानुरोधेन रामः लक्ष्मणमब्रवीत्—'अहमेतं मृगं गृहीष्यामि। चेदियं मारीचमाया तर्हि एनं हनिष्यामि। लक्ष्मण! त्वं तावत्सर्वथा सतर्कः सन् सीतया सहाश्रमस्थो भवेः।' इत्युक्त्वा स धनुर्बाणाक्षयतूणीरान्गृहीत्वा सविचित्रखड्गो मृगानुसरणपरो बभूव * सशस्त्ररामदर्शनेन हरिणः द्रुतं पलायितुमारब्धः। रामः

* अध्यात्मरामायणे प्राप्यते—रावणस्योद्देश्यमवगम्य रामः मृगानुसरणात्पूर्वं निर्जने सीतामाहूयोक्तवान्—'जानकि! श्रूयतां मम वचनम्। रावणः भिक्षुवेशधारी त्वां हर्तुमागमिष्यति। त्वया तत्र मनुष्याकृतिछायां पर्णशालायां स्थापयित्वा स्वयं होमाग्नौ प्रविश्य वत्सरपर्यन्तं तत्रैवादृश्यरूपेण स्थातव्यम्। हे शुभे! तत्र हरणं रावणवधं करिष्यामि। रावणवधानन्तरं पुनः मया सह संगता भविष्यसि।' रामवचनमाकर्ण्य, मायासीतां कुट्यां स्थापयित्वा

तमेव मायामृगमनुसृत्य अतिदूरं प्रयातः। किन्तु मृगं गृहीतुमसमर्थो बभूव। अथ रामः क्रुद्धः सन् एकेन दीप्तबाणेन हरिणमविध्यत। आहतो मृगः मृत्योः पूर्वं धृतनिजरूपः रावणोपदेशानुसारं रामकण्ठ-स्वरमनुसृत्य 'हा लक्ष्मण! रक्ष मामित्यार्तनादं विधाय प्राणा-नत्यजत्। **

---

सीता स्वयं होमानले प्रविश्य अदृश्या जाता—अर्थात् रावणः तामेव मायासीतामहरत्। यथार्थसीता तु रावणवधानन्तरं अग्निपरीक्षासमये अग्नेर्बहिरागता सती स्थूलरूपं धारयित्वा रामसम्मुखमाविरभूत्।

** अध्यात्मरामायणानुसारं-अनन्तरं मारीचदेहात् एकं तेजः निर्गत्य रामशरीरे प्राविशत्। मारीचः परमात्मानं रामचन्द्रं साक्षात्कुर्वन् तेन निहतः यदि सायुज्यमुक्तिमलभत तर्हि किमत्राश्चर्यम्? टीकाकारः लिखति—'मारीचः पूर्वं रामबाणेन विद्धोऽभूत् तेन भयेन गृहवित्तादिकं परित्यज्य शयनस्वप्नजागरणेषु सर्वत्र रामरूपमवलोकयत्। नित्यं रामचिन्तनेन च निष्पापोऽभूत्। अतः अन्तिमकाले रामरूपमीक्षमाणः रामसायुज्यमलभत। पापी तापी च रामनामस्मरणेन त्यक्तशरीरः अवश्य-मेव मुक्तिं लभते।' अध्यात्मरामायणेऽवलोक्यते—मारीचः दण्ड-कारण्यमुनिसदृशं जटावल्कलधारी सन् परमात्मनः रामचन्द्रस्य ध्यानपरो बभूव। वाल्मीकिरामायणानुसारं मारीचः धृतमायारूपः दण्डकारण्य-ऋषीन् हत्वा तानभक्षयत्।

मारीचस्यार्तस्वरेण सीतालक्ष्मणयोः का अवस्था जायेत एतद्विचिन्त्य रामः अधिकमुद्विग्नः सन् त्वरितं आश्रमाभिमुखं प्रतस्थे ।

इतश्च सीता आकर्णितमारीचार्तनादा भीता दुःखिता च कराभ्यां शिरः आहत्य क्रन्दन्ती उवाच—'लक्ष्मण ! त्वया शीघ्रं गम्यताम् । अवश्यमेवार्यपुत्रः राक्षसेन पीडितः ; तस्यार्तस्वरमाकर्ण्यातीव व्याकुलमस्मन्मानसम् ।' रामाज्ञां स्मृत्वा लक्ष्मणः नासीत्गन्तुमभिलाषुकः । तेन सीता वक्षसि कराघातं कुर्वन्ती क्षुब्धा जगाद 'सौमित्रे ! त्वं तु रामविनाशाभिलाषी भरतप्रेरितो दूतोऽसि ।'

लक्ष्मणः सीतां सान्त्वयन्नब्रवीत्—'देवि मैवं गादीः । एतेनाहं मनसि अतीव दुःखितः । निजमानसं शान्तं कुरुष्व । स शीघ्रमेव मृगवधं विधाय प्रत्यागच्छेत् । यः आर्तस्वरस्त्वया श्रुतः स तु मायाविराक्षसस्य । नासौ रामस्य कण्ठस्वरः । देवगन्धर्वदानवयक्षरक्षस्सु न कोऽपि रामं पराभवितुं समर्थः ।'

सीताऽधिकतरं कुपिता सती कठोरवचनं व्याजहार—'त्वं निर्दयः, अतिदुष्टः ; रामविनाशानन्तरं मामधिगन्तुमेव त्वं वनमागतोऽसि । सौमित्रे ! त्वया निश्चयेन ज्ञातव्यम् रामं विनाहं त्वां भरतं वा न स्पृशेयम् । अहं तव पुरत एव प्राणांस्त्यक्ष्यामि ।' इत्युक्त्वा सीता उच्चस्वरेण रुदती वक्षःशिरश्च कराघातेन ताडयामास ।'

## लक्ष्मणस्य रामसमीपगमनम्

सीता दुर्वचनं निशम्य हस्ताभ्यां कर्णौ पिधाय दुःखितचित्तो-ऽभाषीत्—'भवती मम पूजनीया। तवेदृशस्यायोग्यवचनस्य प्रत्युत्तरं दातुं नाभिलषामि। रामादेशेनाहं त्वद्रक्षणपर आसम्। भवती स्त्रीसुलभदुष्टवृत्तिवशात: मयि साशंकासती कठोरवचनमुक्तवती। धिक् भवतीम्!—अथवा स्त्रीजातेः स्वभाव एवैतादृशः! भवत्या अयं बुद्धिभ्रंशः अत्यनिष्टकारणं भविता। यत्र रामस्तत्रैवाहं गमिष्यामि—जलचरस्थलचरान्तरिक्षचराः सर्वेऽपि साक्षिणो भवन्तु! वनदेवतास्त्वां रक्षन्तु।' इत्युक्त्वा लक्ष्मणः कुटयभ्यन्तरमेकां मन्त्रपूतां रेखांकृत्वा सीतां च न तद्रेखाभ्यन्तरमेवावस्थातुमुपदिश्य कृताञ्जलिः प्रणम्य अति-दुःखितः सन् प्रस्थितः।

## तपस्विवेशे रावणस्यागमनम्

सीता तत्क्षणं क्रन्दन्ती आसीत्। रावणः कस्यचिद्वृक्षस्य पार्श्वतः सर्वमीक्षमाणः गतमात्रे लक्ष्मणे दण्डकमण्डलुधारि तपस्वि-वेशेन कुटीसम्मुखमायातः। सीतायाः निरुपमरूपलावण्येन विमुग्धो रावणः वेदमन्त्रोच्चारणपरोऽब्रवीत्—'हे शोभने! त्वामहं पद्मिनीमिव चिन्तयामि। तव दन्ता नयने मृदुहास्यं च अतीव सुन्दरम्। विलासिनि! यथा नदी जलवेगेन कूलङ्कषा त्वमपि तथैव स्वसौन्दर्येण मम मानसं हरसि। हे सुकेशि! घनस्तनि! देवीयक्षी-

किन्नरीमानुषीषु त्वादृशीरूपवती स्त्री मयाद्यापि क्वाप्यनवलोकितपूर्वा। का त्वम्? कस्य भार्या? कुतश्च समागतासि? हे शुभहासिनि! सिंहव्याघ्रसेवितेऽस्मिन्विजनवने किमर्थं त्वमेकाकिनी निवससि?'

'तपस्वी ब्राह्मणोऽय'मिति विचार्य सीता छद्मवेशिरावणं अनुपेक्ष्य तस्मै आसनपाद्यादि समर्प्य अभ्यवादयत; आत्मपरिचयं च दत्त्वोक्तवती 'मम स्वामी देवरश्च मृगयार्थं प्रयातौ; शीघ्रमेव प्रत्यागम्य भवतः समुचितसत्कारादिकं कुर्याताम्। आसनपरिग्रहं करोतु भवान्।'

रावणः—तवावलोकनेनैव धन्योऽस्मि संवृत्तः। कस्मिन्नप्याश्रमेऽहं भोजनं न करोमि इदमेव मम व्रतम्। समयोजातः फलमूलभिक्षा दीयताम्; तां स्वीकृत्याहं प्रयास्यामि।'

सीता—'तापसवर! स्वामिनः अनुमतिं विनाहं कुटयाः बहिर्गन्तुं न शक्नोमि। अत एव भवता कंचित्समयं प्रतीक्षा कर्तव्या।'

रावणः—मह्यं शीघ्रं भिक्षा दातव्या-नोचेदहं गमिष्यामि।' रावणोऽद्राक्षीत् सीतायाश्चतुर्दिक्षु कश्चिदग्निप्रकारो विद्यते यमतिक्रम्य तस्याः समीपं गन्तुमशक्यमिति। अतः स सीतां प्रति 'बहिरागत्य भिक्षा देया' इत्याग्रहपरो बभूव।

## सीताहरणम्

रावणवचनं निशम्य सीता अचिन्तयत्—'ब्राह्मणविमुखीकरणेन धर्मकर्मादिकं सर्वमपि प्रणश्यति। रामोऽपि तन्निशम्य किं

भूयात् ! इति विचार्य विधिनिर्बन्धहेतोः करगृहीतफलपात्रां, रक्षारेखा- मतिक्रम्य भिक्षासमर्पणोद्यतमात्रामेव तापसरूपधारी रावणः दृढमुष्टिना सीतां हस्तेगृहीत्वा आकृष्टवान् । सीतापि हस्तमोचनार्थं निष्फलप्रयत्न- परा आत्मानं नितान्तमसहायाममन्यत । पापिष्ठ! दुर्जन! धूर्त! इत्यादि वृथैव तं प्रति अपशब्दपरा उच्चैः स्वरेण रामलक्ष्मणावाह्वयामास। किन्तु अखिलमेव निष्फलं संवृत्तम् । रावणः आत्मपरिचयं दत्वोवाच— 'अहं पौलस्त्यपुत्रो रावणः कुबेरमपि जितवानहम् । त्रिभुवनमपि अस्मन्नामश्रवणमात्रेण कम्पते । मां क्रोधान्वितमवलोक्य इन्द्रादि- देवगणाः भयेन पलायन्ते । त्वत्सौन्दर्यविमुग्धः सन् त्वां प्रधानमहिषी- करणाय लङ्कां प्रति नेतुमागतोऽस्मि ! सुन्दरि! मयि प्रसन्ना भवेः । मुनिवेषधारिरामेण सह त्वं किं विचरिष्यसि ? वनवासः क्लेशकरः खलु ; त्वं लङ्कायाः प्रधानमहिषी भूत्वा मत्समीपे सुखेन स्थास्यसि ।'

रावणदुर्वचांसि निशम्य सीता अति क्रोधान्विता आरक्तलोचना च भूत्वा रावणमनेकशो भर्त्सयन्ती आत्मानं मोचयितुं यावच्छक्यं प्रयतितवती—रामः सवंशं राक्षसान् विनाशयेत् इत्याद्यभिधाय भयं च दर्शयामास ।

श्रुतसीतापरुषवचनः महापराक्रमशाली रावणः क्रोधेन ओष्ठ- दंशनपरः वामहस्ते सीताकेशान्, दक्षिणहस्ते च ऊरुद्वयं गृहीत्वा तां

क्रोडीकृत्य च द्रुतगत्या पलायितः। सीतां अदूरस्थिते खरसंयोजिते मायामयरथे स्थापयित्वा आकाशमार्गेण गन्तुमुपचक्रमे।

## जटायुयुद्धम्

सीता भयेनात्यन्तमधीरा सती 'हा राम! हा लक्ष्मण! रक्ष माम्; मां हृत्वा रावणः प्रयाति; सत्वरं रक्ष माम्' इत्यार्त स्वरेणारोदीत्। सीताया हृदयविदारकमुच्चैः क्रन्दनमाकर्ण्य तीक्ष्णदृष्टिः पक्षीन्द्रो जटायुः शीघ्रं बहिरागतः 'अरे पापिन्! प्रतीक्षस्व क्षणम्। ममपुरतः शून्यवनात् सीतां हृत्वा नयसि?' इत्यभिधाय वेगेनाकाशे उड्डीय विशालपक्षौ विस्तार्य च रावणरथातिरोधनपरः पुरतः स्थितः। जटायुः प्रथमं सीतां परित्यक्तुं रावणं बहुविधं उपदिदेश—'रामस्त्वां सवंशं ध्वंसयेत्' इत्यपि तस्य भयमुत्पादयत्। किन्तु रावणेन तत्-किमपि नादृतम्। तदानीं जटायुरावणयोः तुमुलं युद्धमारभत। रावणः शतशः तीक्ष्णबाणैर्जटायुं जर्जरितमकरोत्—जटायुस्तदवमत्य स्वतीक्ष्ण-चञ्च्वा रावणस्य रथमभांक्षीत्। चरणप्रहारेण च रथं सारथिं धनूंषि च चूर्णीकृतवान्। तदानीं रावणः स क्रोधं घृनभीषणमूर्तिः सीतां क्रोडीकृत्य आकाशमार्गेण गन्तुं प्रवृत्तः। जटायुरपि रावणपृष्ठोपरि निपत्य चञ्चूनखाघातैस्तं जर्जरीकृतवान्। तदा रावणः सीतया सह भूममवतीर्य सीतां भूमौ निधाय च खड्गहस्तः जटायुं प्रतिधावितः।

तीक्ष्णखड्गप्रहारेण च जटायुषः पक्षतिं चरणौ च निकृत्य तं भूमावपातयत् ।

रावणहस्तादधिगतमुक्तिः सीता 'हा राम! हा लक्ष्मण! त्रायस्व त्रायस्व' इति भाषमाणा कस्यचित्तरोः पार्श्वमाश्रितवती। इतश्च रावणः जटायुं पराभूय द्रुतपदमेत्य बलादूधृतसीताकेशपाशः वायुवेगेनाकाशे उड्डीनः ।

सीता निरुपाया सती क्रन्दन्ती रावणं विविधप्रकारेण तिरस्कृतवती। आकाशमार्गेण गच्छन्ती कुत्रचित्पर्वतशृङ्गे वानरपञ्चकमवलोक्य 'ते रामाय मत्प्रवृत्तिं दास्यन्ति इत्याशया स्वकीयमुत्तरीयं गात्राभरणानि च तान् (वानरान्) लक्ष्यीकृत्यापातयत् *

---

* वाल्मीकिरामायणे पठ्यते सीता प्रयान्ती पर्वतशृङ्गोपविष्टः पञ्चवानरप्रधानानवलोक्य तत्र स्वकीयं सुवर्णप्रभमुत्तरीयकौशेयवस्त्रमुत्कृष्टानलङ्कारांश्च न्यक्षिपत् । तया निजाङ्गेभ्यः यानि वस्त्राभरणानि अवतार्य वानरानुद्दिश्य भूमौ क्षिप्तानि तद्विषये रावणः न किमप्यजानात् । तदानीं पिङ्गलनयनास्त एव वानरप्रधाना अनिमिषलोचनैर्विलापकारिणीं विशालाक्षीं सीतामवलोकयन् । अस्मन्मते रावणः सीतां क्रोडे कृत्वा न नीतवान् अपि तु रथोपरि । तेनैव गात्रेभ्य आभरणोत्तारणं सीताकृते सम्भवमासीत् ।

अनन्तरं आकाशमार्गेण धनुर्मुक्तबाण इव महता वेगेन अनेक-वनपर्वतनदीसरोवरजनपदानतिक्रम्य रावणः सीतां गृहीत्वा समुद्र-तीरमागतः। सागरमुत्तीर्य च लङ्कां प्रविवेश। (रावणः समुद्रं कथमुत्तीर्णः' इत्यस्य वाल्मीकि रामायणे नास्ति कोऽप्युल्लेखः)।

## रावणस्य लंकायां प्रवेशः

रावणः सीतामन्तःपुरे स्थापयित्वा घोररूपिणी राक्षसी-

---

जैनपुराणान्तर्गतजैनरामायणे—रावणः सीताहरणात्पूर्वमेव अजा-नात्—पतिव्रतासीतापहरणजन्यपापफलस्वरूपं तस्य योगजशक्ति-रूपा 'आकाशमार्गगमनविद्या' नश्येदिति ; अतः स सीताप-हरणार्थं रथमारुह्य गतोऽभूत्। अनुचराणां सहायेन च रथेनैव सीतामपहृत्यानीतवान्।

स्कन्दपुराणे व्यासदेवकृतवर्णनतः ज्ञायते यत् सीतामपहृत्य लंकागमनपर्यन्तं रावणस्य सप्तदशदिनात्मकः कालो व्यतीतः। एतेन रावणः स्थलपथं खरयोजितरथेनातिक्रम्य जलपथे नौकया लंकामागतः इति प्रतिभाति। केषुचिद्रामायणेषु 'रावणस्य शक्तिशालिनी नौसेनाप्यासीत्' इति दृश्यते। जटायुषा सार्धं युद्धचिह्नैः पश्चाद्घावि-घटनाभिश्च 'रावणः अनुचरैः सह रथमारुह्यैव सीतापहरणार्थं आगत आसीत्' इति विशदीभवति।

रादिशत्—'अस्मदनुमतिं विना कापि स्त्री पुरुषो वा सीतासमीपं नागच्छेत्, अनया मणिमुक्तासुवर्णालङ्कारादिषु यत्किमपि प्रार्थ्यते तत्सर्वमपि प्रदातव्यम्। तां प्रति दुर्व्यवहारकारिणे च प्राणदण्डो दास्यते' इति।

ततः रावणः दुर्धर्षानष्टराक्षसानादिदेश—'युष्माभिः अधुनैव सशस्त्रैः जनस्थानं गन्तव्यम् तत्र च रामकृतोद्योगप्रवृत्तिः मह्यं दातव्या।'

तेऽपि तदानीमेव रावणमभिवाद्य तिरस्करिणीविद्याप्रभावेण अदृश्याः सतः जनस्थानमागताः। अथ रावणः अन्तःपुरं प्रविश्य विवशां सीतां प्रति ऐश्वर्यविलासवैभवपूर्णानि रमणीयानि अन्तः-पुरस्थितविविधस्थानानि दर्शयित्वा निजबलविक्रमैश्वर्यं वर्णयन् स्वर्णमयसोपानयुक्तं दुन्दुभिनादितं स्वकीयप्रासादं सीतामानीय चोक्तवान्—'वरानने! मयि प्रसीद। अहं तु तवात्यन्तवशीभूतो दासः। मया राजमुकुटेन सार्धं स्वकीयं विश्ववन्दितं मस्तकं त्वच्चरणयोः स्थाप्यते। त्वमभिषेकसलिलेन धौतदेहा सती अस्मत्सङ्गता भवेः। मज्जीवनरक्षां च विधाय लङ्काराज्यपालनपरा स्याः।'

कामार्तरावणस्य वचनानि निशम्य वराङ्गना शोकमलिना विदेहनन्दिनी वस्त्राञ्चलेन मुखमाच्छादयन्ती रावणमात्मानं चान्तरा तृणमेकं निधाय सगर्वमुक्तवती,—'राक्षसाधम! देवासुरैरप्यवध्यस्य तव राजमुकुटालंकृतं मस्तकं रामबाणैः अचिरादेव भूलुण्ठितं भविष्यति।

 


रामस्यानुपस्थितौ त्वं मामपहृत्य पौरुषं दर्शयसि ! धिक् त्वाम् ! इक्ष्वाकुतिलकः धर्मात्मा वीर्यवान् देवो रामः मम स्वामि । जीवन्ती मां स्प्रष्टुं न समर्थस्त्वम् ।'

सीतापरुषवाक्यमाकर्ण्य रावणस्तां सन्त्रासयन्नुवाच—'भामिनि ! यदि संवत्सराभ्यन्तरं त्वं ममानुकूला न भवेस्तर्हि अस्मत्पाचका मम भोजनार्थं त्वां खण्डशः करिष्यन्ति ।'

अथ रावणः घोरदर्शना राक्षसीरुवाच—'यूयमेतां गर्वितां अशोकवनं नीत्वा कदापि विनयेन कदापि भयप्रदर्शनेन वा वशमानेतुं प्रयत्नो विधेयः ।' इत्थमादिश्य रावणः ततः प्रचलितः । सीता भयेन शोकेन च अचेतना अजनि ।

## रामलक्ष्मणयोः पर्णकुटीं प्रत्यागमनम्

मारीचवधानन्तरं रामचन्द्रः शङ्कितः अचिन्तयत्—'मारीचः मृत्युसमये मत्कण्ठस्वरमनुकृत्य आर्तनादं कृतवान् तन्निशम्य सीता प्रायः मम रक्षार्थं लक्ष्मणं प्रेषितवती । जनस्थान युद्धानन्तरं राक्षसानां मया सह वैरमजायत । सीता स कुशला भवेन्न वा इति न जाने ।'

## लक्ष्मणस्य तिरस्कारः

इत्थं विचारपरो रामः धनुर्बाणहस्तः त्वरितपदं कुटीं प्रत्यागन्तुं प्रचलितः । मार्गे स विषण्णं लक्ष्मणं दृष्टवान् । स्नेहेन लक्ष्मणस्य

दक्षिणहस्तमलम्ब्य रामः मृदुभर्त्सनस्वरेणोक्तवान्—'भ्रात! सीता मेकाकिनीं स्थापयित्वा इत्थं तवागमनं नाभूत्समीचीनम्। इदानीं मङ्गलमेव भूयात्! अस्मन्मानसं तु दोलायमानमिव—परितः दुर्लक्षणानि दृश्यन्ते! राक्षसैः अनेन समयेन सीताहत्या तु न कृता भवेत्? पर्णशालामेत्य सीतामनवलोकयाहं न जीविष्यामि।'

लक्ष्मणः कृताञ्जलिः क्रन्दमान एव सर्वावस्थां वर्णयन्नब्रवीत्—'नाहं स्वेच्छयाऽऽयातः। सीतादुर्वचनं सोढुमशक्नुवन् तथा बहिष्कृत इव इहागन्तुं बाधितोऽहम्। आगमनात् पूर्वं मन्त्रपूतां रक्षारेखां निर्माय सीतां तदभ्यन्तरे स्थातुमुपदिश्यागतोऽहम्। तादृशरेखाभ्यन्तरा-स्थितायास्तस्याः कोऽपि राक्षसः किमपि अनिष्टं कर्तुं न शक्नुयात्। धैर्यमवलम्बतु भवान्।'

श्रीरामः दुःखितमानसोऽब्रवीत्—'सौमित्रे! राक्षसा मम का-मपि क्षतिं न विधास्यन्ति इति त्वया ज्ञानमासीच्चेत् केवलं सीजन-वाक्यतः विचलितेन त्वया मदादेशोल्लंघनं नोचितम्। ध्रुवमनेन समयेन सीता राक्षसैर्भक्षिता भवेत्।' इत्थं भाषमाण एव रामः द्रुतपदं प्रत्यागत्य कुटीं सीताशून्यामद्राक्षीत्।

## सीताशोकेनाधीरो रामः

सीताशोकेनाधीरो रामः उन्मत्त इव सशिरस्ताडं नितान्तमसहाय इव क्रन्दितुं प्रवृत्तः। हा प्रिये! क्वासि त्वम्? अपि त्वं मया सह

छलनपरा सती कापि अन्तर्हितासि ? अहं तु आश्रमं प्रत्यावृत्तः त्वं स्मितवदना सती कुतो मां न भाषसे ? इत्यादि वदन् धनुर्बाणहस्तः कृतान्त इव वनपर्वतप्रस्रवणादि विविधस्थानेषु सीतान्वेषणपरः पक्षि-वृक्षलतादिकान् सकलान्प्रत्यपि सीताविषयकजिज्ञासां कुर्वन् अग्रतः प्रचालितः । अथ लक्ष्मणं जगाद—'सीताविरहेणाहं न जीविष्यामि। सा तु मुहूर्तमपि मामनीक्षमाणा स्थातुमसमर्था ! अत एव वनवासस्य शतशः कृच्छ्राण्यपि सहमाना सा मया सार्धमागता । अपि सा मां त्रासयितुं काप्यन्तर्हिता अथवा कमलाहरणार्थं सरोवरं गता ?'

## रावणजटायुयुद्धस्थले आगमनं रामस्य क्रोधश्च

इत्थमनेकत्रान्वेषणपरः एकस्मिन्स्थाने रामः राक्षसस्य सीतायाश्च पदचिह्नानि ददर्श । किञ्चिद्दूरे मणिमुक्तारवचितं बृहद् भग्नं धनुः खण्डितं, तूणीरद्वयम्, भिन्नो रथः, सीताभूषणानां स्वर्णखण्डानि विचित्रमाल्यानि, चतुर्दिक्षु रक्तबिन्दवः, विशीर्णं स्वर्णकवचम्, उत्तममाल्यशोभितं शतशलाकाविशिष्टं छत्रम्, युद्धविनष्टः भयंकररूपः महाकायः पिशाचवदनः खरसमूहः, धृतरश्मिः निहतसारथिः, काञ्चनभूषितं विनष्टत्राणकदम्बकं इत्यखिलमवलोक्य सविस्मयं लक्ष्मण-मुवाच—'ध्रुवं सीताऽस्मिन्महावनेऽपहृता वा निहता वा भक्षिता वा जाता ! एतदखिलमवलोक्य 'द्वौ राक्षसौ सीताकृते परस्परं युद्धयमानौ आस्ताम्—अथवा अत्र देवासुरसंग्रामोऽभूत्' इति तर्कयामि ।

किन्तु सीतायाः किमपि चिह्नं कथं नास्ति ? अपि धर्मस्तां न रक्षितवान् ? अपि वा देवताभिरस्मत्सहायं न विहितम् ? अहं मृदुस्वभावः नियतं लोकहितरतः करुणाशीलश्च ; अतः देवता अपि मां निर्वीर्यं मत्वा उपेक्षितवत्यः । लक्ष्मण ! अत एव प्राणिनः सर्वलोककर्तारं, परमदयालुं परमेश्वरमपि निन्दन्ति । अद्य राक्षसविनाशार्थं मम तेजः प्रदीप्तं भवेत् ! सौमित्रे ! यक्षगन्धर्वपिशाचराक्षसकिन्नरदानवेषु कोऽपि सुखोभवितुं न शक्नुयात् । अविलम्बेनैव मम शरजालैः नभोमण्डलं समाकीर्णं भवेत् । देवताः शीघ्रं सीतां न प्रत्यर्पयन्ति चेत् अहं शरसन्धानैः ताः त्रासयिष्यामि । न केवलमेतत् चराचरां समग्रां त्रिलोकीमपि त्रासयित्वा विनाशयिष्यामि ।' इत्थं भाषमाणः रामः क्रोधारक्तनयनः सन् अधरोष्ठदशनपरः वल्कलाजिनजटाभारमाबध्य लक्ष्मणहस्ताद्धनुर्गृहीत्वा तदुपरि विषधरसर्पतुल्यबाणं योदयत् दीर्घं निःश्वस्य प्रलयकालीनरुद्र इव विरराज ।

## लक्ष्मणस्य सान्त्वनम्

रामस्यादृष्टपूर्वं कोपमवलोक्य लक्ष्मणः कृताञ्जलिः शुष्कवदनोऽब्रवीत्—'आर्य ! भवान् सर्वभूतहिते रतः । इदानीं क्रोधवशेन निजस्वभावमत्याक्षीः । चन्द्रस्य लक्ष्मीः सूर्यस्य प्रभा, वायोः गतिः, पृथिव्याः क्षमा च एते सकलगुणाः अनुपमं यशश्च त्वयि सततं वर्तन्ते । अस्मिन्स्थाने घोरतरयुद्धलक्षणानि तु दृश्यन्ते किन्तु एकेनैव-

सार्धं युद्धमभूत् यतः अनेकेषां पदचिह्नानि न दृश्यन्ते। आवामद्य पुनरनुजौ महर्षिसहायतः समुद्रगिरिवनेषु, भयंकरगुहासु, सरोवरेषु, देवलोकगन्धर्वलोकयोः सम्यक्प्रयत्नैः अन्वेषणं करिष्यावः। तथापि यदि सीता न प्राप्येत तर्हि भवान् अवश्यमेव महेन्द्र इव वज्रतुल्य-सुदृढस्वर्णपुङ्खशरसमूहेन जगदुत्सन्नं कुर्यात्। कः खलु विपदा नाभि-भूयते? विपदि धैर्यावलम्बनमेव महतां लक्षणम्। भवांस्तु अलौकिक-शक्तिमान्। तादृशशक्तिप्रयोगेण सीतोद्धारः क्रियताम्।'

लक्ष्मणवचनमाकर्ण्य श्रीरामचन्द्रः शान्तः सन् धनुर्हस्तः अब्रवीत्—'भ्रातः इदानीं क्व गन्तव्यम्? किं कर्तव्यम्? केनोपायेन सीता प्रवृत्तिः प्राप्येत तत्कथय।'

लक्ष्मणः—आवामादौ राक्षससमाकीर्णसकलजनस्थानान्वेषणं करिष्यावः। आगम्यताम्!

श्रुतलक्ष्मणवचनः रामः धनुषि भयंकरनिशितशरं संयोज्य किंयद्दूरे गच्छन्नेव पुरतः रक्ताक्तदेहं पतितं पर्वतप्रमाण जटायुं दृष्ट्वागादीत्—'पश्य पश्य! अयमेव दुरात्मा सीतामभक्षयत्। निशाचरमिम अस्मिन्नेव क्षणे विनाशयिष्यामि।'

## आहतजटायुदर्शनम्

श्रुतश्रीरामचन्द्रवचनो जटायुः भीतः सन् रक्तवमनपरः क्षीण-स्वरेणोक्तवान्—'हे महाबाहो! मां सीतापहारको रावण एव

व्यनाशयत् त्वया पुनः वधः न कर्तव्यः। अबलां सीतामपहृत्य रावणः प्रयाति इत्यालोक्याहं तमन्वसरम्। तेन सार्धं युद्ध्वा तं रथेन सह भूमौ पातितवान्। मां श्रान्तमवलोक्य तेन खड्गाघातवशात् मम पक्षतिश्छिन्ना आकाशमार्गेण दक्षिणस्यां दिशि च प्रयातः। मम प्राणा अवरुद्धा इव। नाहमधिकं वक्तुं समर्थः। रावणः 'विन्दुलग्ने' सीतामपाहरत्। तस्मिँल्लग्नेऽपहृतधनस्य पुनर्लाभो भवति। त्वं युद्धे हतरावणः अचिरादेव सीतासङ्गतो भविष्यसि। अन्यत् किमपि वक्तुं नास्ति मम शक्तिः। इदानीं तव पुरत एव प्राणांस्त्यक्ष्यामि। हे अनघ! त्वं मायामनुष्यरूपधारी साक्षात्परमात्मा विष्णुः। सौभाग्यवशादेव मृत्युसमये तव दर्शनेन मुक्तो जातोऽहम्। त्वं मामेकवारं हस्तेन स्पृशेः। तेनैव तव परमं पदं प्राप्स्यामि।

## जटायुमृत्युः

श्रीरामेण स्पृष्ट एव जटायुः प्राणानत्याक्षीत्। मृतजटायुकृते बहुविधं विलप्य लक्ष्मणं काष्ठसंग्रहार्थमुपदिदेश। ततः प्रचुरकाष्ठान्येकीकृत्य रामलक्ष्मणौ चितां विरच्य जटायुदेहमग्निसादकुरुताम्। मृगवधं च कृत्वा मृगमांसपिण्डान् प्रदाय गृध्रांश्च भोजयित्वा द्वावपि गोदावरीं गत्वा पक्षिराजमुद्दिश्य जलदानपूर्वकं स्नानानन्तरं तर्पणं कृतवन्तौ।

## सीतान्वेषणम्

जटायुप्रेतकार्यादिकं समाप्य शस्त्रधारिणौ सीतान्वेषार्थं बहिर्निर्गतौ क्रमेण जनस्थानघनवनस्थलीमतिक्रम्य क्रौञ्चारण्यमागतौ; विविधस्थानेषु कृतविश्रामौ अग्रे पूर्वां दिशं प्रचलितौ। विविधहिंस्रजन्तुपूर्णाः बृहद्वृक्षसमाकीर्णाः अन्धकारमयगभीरगुहा, गिरिकन्दराणि च एतत्स्थानं भयंकरं चक्रुः।

## आयामुखीलाञ्छना

अग्रे गच्छन्तौ अतिसावधानौ रामलक्ष्मणौ कांचिल्लम्बोदरीं तीक्ष्णदशनां विकृताननां लोलजिह्वां राक्षसीं दृष्टवन्तौ। हरिणाहारं कुर्वन्ती सा राक्षसी लक्ष्मणसमीपमेत्य तमालिङ्ग्य जगाद—'त्वामवलोक्य विमुग्धाऽहम्; आयामुखीति ममाभिधानम्। एहि पुलिनं गत्वा आवां विहराव। राक्षसीवचनं निशम्य लक्ष्मणः सक्रोधं तस्याः कर्णनासिकमच्छिनत्। विकटचीत्कारपरा राक्षसी वनाभ्यन्तरेऽन्तर्हिता।

## कबन्धस्य मुक्तिः

रामलक्ष्मणौ अधिकतरं सावधानौ निबिडारण्येऽग्रसरावभूताम्। अस्मिन् एव समये केनापि विकटशब्देन वनस्थली कम्पितेव। खड्गहस्तो रामः अग्रेगतः कंचिन्महाकायं विचित्ररूपं राक्षसमवालोकयत्। अयं राक्षसः शिरोग्रीवाविहीनः। वक्षोऽञ्चले तस्य मुखं एकमेव च

चक्षुरासीत्। स तस्य योजनविस्तृतहस्तद्वयसञ्चालनेन अनेकसंख्याकान् भल्लूकहरिणादीनाकृष्याभक्षयत्। अयं राक्षसः सहसा रामलक्ष्मणपथावरोधं विधाय तौ सुदृढं धृतवन्तौ। भीतं लक्ष्मणमार्तनादपरं रामोऽब्रवीत्—'वीर! वृथैव मा भैषीः। शीघ्रमस्योभावपि हस्तौ निकृन्तस्व।' एवमुभावपि मिलित्वा रामः खड्गाघातेन राक्षसस्य दक्षिणहस्तं लक्ष्मणश्च वामहस्तमच्छिन्ताम्।

राक्षसोऽपि विकटगर्जनेन दिङ्मण्डलं प्रतिध्वनयन् रक्तप्लावितशरीरः भूमौ पतितः सन् अतिदीनस्वरेण जिज्ञासितवान्—'खड्गधरवृषस्कन्धयुवानौ कौ युवाम्?' लक्ष्मणः सविस्तरं निजपरिचयं दत्त्वोवाच—'कश्चिद्राक्षसः रामस्य पत्नीमहार्षीत्; आवां तस्या अन्वेषणपरौ; विकृतकबन्धरूपेण विचरणपरः कस्त्वम्?'

कबन्धः दीनस्वरेणाब्रवीत्,—'हे राम! अद्य भाग्यक्रमेणैव तव दर्शनं लब्धम्! अहं पुरा गन्धर्वराज आसम्। रूपयौवनमदमत्तश्च भूत्वा त्रिभुवनविचरणपरोऽभूवम। एकदा मम तपस्यया तुष्टो ब्रह्मा मह्यमवध्यत्ववरमयच्छत्। एकस्मिन्दिने महाप्रभमष्टावक्रमुनिमवलोक्याहमहसम्; स च क्रोधेन मामशपत—'रे दुर्मद! त्वं राक्षसो भूत्वा विचरणपरो भवेः मुनिवचनं निशम्य व्याकुलेन मया शापमुक्त्यर्थं प्रार्थितो मुनिः मामवोचत्—'त्रेतायुगे भगवान्नारायणः दाशरथिरूपेण स्वयमवतीर्य अत्रागमिष्यति। तेन च छिन्नहस्तद्वयः

दग्धश्च शापमुक्तो भविष्यसि ।'

'हे रघुनन्दन ! कदाचिदहं बलदर्पितः सन् इन्द्रेण सार्धं योद्धुं गतः । क्रुद्धेन तेन वज्राघातेन ममोरुद्वयं मस्तकं च शरीरे प्रवेशितम् । किन्तु ब्रह्मणः वरप्रभावेणाहं न मृतः । अहं देवराजं कातरस्वरेणोक्तवान् । 'मुखविहीनेन मया कथं जीवितव्यम् ?' तदा इन्द्रः मह्यं योजनदीर्घं बाहुद्वयं वक्षःस्थले तीक्ष्णदन्तयुक्तं मुखं च दत्तवान् । तदारभ्याहमस्मिन्विजने वने विचरणपरोऽस्मि । हे राम ! त्वया मम अग्निसंस्कारो विधेयः । अहमपि पुनः पूर्वरूपमासाद्य तुभ्यं सीताप्रवृत्तिं दास्यामि ।'

रामलक्ष्मणाभ्यां अविलम्बं प्रचुरकाष्ठानि समाहृत्य अग्निसात्कृतस्य राक्षसस्य शरीरात् कंदर्पसदृशः परमसुन्दरः सर्वाभरणभूषितः कश्चित्पुरुषः आविर्भूय रामं च प्रदक्षिणीकृत्य कृताञ्जलिरुवाच—'राम ! त्वं पम्पातीरवर्ति ऋष्यमूकपर्वतं गच्छेः । तत्र ऋक्षराजस्य क्षेत्रजः सूर्यस्यौरसश्च पुत्रः सुग्रीवनामा कोऽपि वानरराजः आस्ते । तेन सह अग्निसाक्षिकं सख्यं सम्पादय । सुग्रीवः तस्य भ्रात्रा इन्द्रपुत्रवालिना हृतराज्यः बहिष्कृतश्च चतुर्भिर्मन्त्रिभिः सह वनवासपरः आस्ते । सोऽपि त्वत्सदृश एव दुर्दशाग्रस्तः भाग्यच्युतश्च । तथापि स मायावी, कृतज्ञः, धीरः, सत्यप्रतिज्ञः दक्षश्च । सीतान्वेषणोद्धारकार्यद्वये स एव तव सहायकः मित्रश्च भवेत् ।

## कबन्धस्य परामर्शदानम्

'त्वमिदानीं पश्चिमदिग्यात्रापरो भूत्वा क्रमेण पम्पातीरमुपस्थितः स्याः। अस्मिन्सरोवरेऽनेके पक्षिणः सन्ति येषां मांसमतीव स्वादु। युवां घृतपिण्डतुल्यानामेतेषां स्थूलपक्षिणां आहारं कुरुतम्। पम्पाजले रक्तचक्षुषः उत्कृष्टरोहित मत्स्या अन्ये च बहुविधा मीनाः सन्ति। लक्ष्मणः शराघातेन तान् आविध्य शूलपक्वांश्च विधाय तुभ्यं समर्पयेत्।

अस्मिन्वने मातङ्गमुनिशिष्यगणोऽपि न्यवसत्। इदानीं ते स्वर्गं प्रयाताः। तेषां परिचारिका सन्यासिनी शबरी तत्र निवसति। एषा धर्मशीलाश्रमणा त्वद्दर्शनार्थं चिरात्तव प्रतीक्षापरा तिष्ठति। पम्पापश्चिमतीरे मतङ्गाश्रमः। समीपमेव ऋष्यमूकपर्वतः। अत्र गतमात्रस्त्वं सुग्रीवं द्रष्टुं शक्नुयाः। मङ्गलमस्तु तुभ्यम्। साधया-म्यहम्' इत्युक्त्वैव दिव्यरूपधारी कबन्धः * पुण्यलोकं प्रयातः।

---

* कबन्धविषये बिभिन्नरामायणेषु विविधं वर्णनं दृश्यते। वाल्मीकिरामायणे प्राप्यते—कबन्धः श्रीनाम्नः दानवस्य पुत्रो दनुः। तेन राक्षसरूपं धृत्वा वनवासि ऋषीणां भयमुत्पादितम्। कस्मिंश्चिद्दिने स्थूलशिरा नाम ऋषिः निजफलमूलादिकमपहरते तस्मै अभिशप्तवान् यत्फलस्वरूपं तेन ईदृशं कुत्सितरूपं प्राप्तम्। शापप्रायश्चित्तार्थं प्रार्थितेन ऋषिणोक्तमासीत्। 'यदा दाशरथी रामः तव बाहुद्वयं छित्वा

## शबर्यै दर्शनदानम्

इदमखिलमाकर्ण्य रघुनन्दनः लक्ष्मणेन सह तद्वयानकं वनं परित्यज्य कबन्धनिर्दिष्टमार्गेण गच्छन् शबरी-आश्रममुपस्थितः। भक्तिमती शबरी लक्ष्मणेन सहायान्तं रामचन्द्रमवलोक्य सानन्दं ताभ्यां स्वागतं व्याहृत्य श्रीरामचन्द्रचरणयोः पतिता सती सभक्तिकं राम-लक्ष्मणचरणौ प्रक्षाल्य पादोदकप्राशनपूर्वकं अवशिष्टोदकेन सर्वाङ्गमपि सिक्तवती। तया तपः प्रभावात् पूर्वत एव श्रीरामचन्द्रागमनं ज्ञात्वा यानि अमृततुल्यफलानि सञ्चितान्यासन् तानि भक्तिपूर्वकं ताभ्यां निवेद्य पाद्यार्घ्यादिभिः श्रीरामचन्द्रं सम्मानितं सन्तुष्टं च कृतवती। श्रीरामोऽपि वृद्धशवरीभक्त्या प्रसन्नः सन् लक्ष्मणेन सहासनग्रहणं कृतवान्; शबरी कृताञ्जलिरुवाच—'हे राम। अद्य त्वामवलोक्य मम जन्म-साफल्यं जातम्; गुरुसेवा च सार्थकीभूता। हे रघुश्रेष्ठ! त्वमेव प्रथमा देवता। तव पूजया मम सकलतपस्याफलस्वरूपोऽक्षयलोक-लाभो भवेत्। अहं गुरूपदेशानुसारं केवलं त्वद्ध्यानावलम्बा सती

---

त्वामग्नौ धक्ष्यति तदा त्वं पूर्वरूपं प्राप्स्यसि। श्रीरामचन्द्रः कबन्धाय मुक्तिं प्रददौ सीतोद्धारोपायमपि तस्मादज्ञासीत्। अन्यान्यरामायणेष्वपि एतज्जातीयका विविधघटना दृश्यन्ते याभ्यः इदमेव ज्ञायते यद्रामचन्द्रस्य वनवासः, सीताहरणं, रावणवधः एतत्सर्वं पूर्वनिर्धारितमेवासीत्— तासां सर्वासामलौकिकघटनानां [illegible] रामायणे वर्णितः।

 

तवागमनप्रतीक्षापरास्मि। सफलीभूतः इदानीं गुरूपदेशः। मम गुरुगणोऽपि त्वद्दर्शनवञ्चितोऽभूत्। हे अनघ! अहमति मूढा नीच कुलोद्भवा नारी तव दास्यायापि अयोग्या, अत एव तव दर्शनलाभः मदर्थमसम्भवः। किन्तु त्वयैव निजगुणैर्दयो विधाय मह्यं स्वदर्शन मददाः, तव कृपाविषये किमधिकं वक्तव्यम्! शबरी अश्रुपूर्ण-लोचना भक्तिस्तम्भितकण्ठा रामस्य स्तवं कर्तुमारभत।

## शबरीमुक्तिः

श्रीरामोऽब्रवीत्—'स्त्री जातिर्वा भवतु पुरुषजातिर्वा; उत्तमा-श्रमी अधमाश्रमी वा। भक्तौ सत्यामेव तस्योपरि प्रसन्नो भवेयम्। हे तापसि! भक्तिहीना व्यक्तिः केवलं यज्ञदानतपस्याभिः वेदविहित-कर्मानुष्ठानेन वा मद्दर्शनं न प्राप्नुयात्। हे शुभलक्षणे! तव भक्त्या तुष्टः सन्नेव तुभ्यं दर्शनं दत्तवानस्मि। ध्रुवं तव मुक्तिलाभो भवेत्। त्वं ममोचितसपर्यातत्परा, अहमपि त्वयि प्रसन्नोऽस्मि। इदानीं सानन्दं अभिलषितलोकं गच्छेः।'

* शबरी आनन्दाश्रुजलेन सिक्ता श्रीरामं असकृत प्रदक्षिणं

---

* एतस्याखिलस्योपाख्यानस्य रहस्यं परामृश्येदमेव मनसि भवति यत् श्रीरामचन्द्रस्य वनगमनं, सीताहरणं, रावणवधः इत्यादि

प्रणामं च कृत्वा तत्पुरत एव अग्निप्रवेशपूर्वकं दुर्लभमुक्तिलाभं कृतवती

इति दिव्यरामायणेऽरण्यकाण्डम्

समाप्तम् ।

---

सर्वमेव विधातृनिर्धारितं 'लीलामात्रं' वा । यद्यपि आसीत् तत्सर्वं पूर्वत एव निश्चितमासीत् । रावणः विधातुरिच्छाया साधनमात्रमभूत । अत एव एतत्कार्ये सदसद्विचारस्य प्रश्न एव नोद्भवति । रामचन्द्रः वनवाससमये अनेकेषां भक्तयक्षदानवराक्षसमानवानां मुक्तिविधानं चकार । सर्वमपीदं तस्यावतारलीलायाः अंशविशेषः विधातुरिच्छया अङ्गीकृतं दायित्वम् । श्रीरामचन्द्रद्वारा मुक्तिलाभः—तेषां पूर्वं कृतसुकृतेः फलस्वरूपः सौभाग्यविशेषः । केऽपि रामध्यानेन मुक्तिमलभन्त ; केचन तां प्राप्नुवन् शत्रुभावेन रामचिन्तनपरा—रामेणसार्धं शत्रुताचरणं विधाय ; किन्तु उभयक्षेत्रेऽपि फलं मुक्तिरेव । एतं दृष्टिकोणं विचारभङ्गीं अनुसृत्य 'सर्वास्वप्येतासु घटनासु अधिकतर-सामञ्जस्य'मेव प्रतिभाति । मङ्गलमयविधातुः मङ्गलमयविराट् कल्पनायाः अस्पष्टाभासोऽपि स्फुटीभवति । सर्वेऽपि स्वस्वकर्माण्येवोपभुञ्जन्ति । विभिन्नपरिस्थित्यनुसारं भगवान् केवलं कर्मफलदाता । स तु निजावतारलीला सहायेनैव जीवस्य कर्मफलदाने समर्थः । स तु लीलामयः—दृष्टमात्रः, न दायी नापि आसक्तः ।

रामचन्द्रस्य विच्छिन्न घटना अपि विचित्रपरिस्थितिषु तस्य विराट् लीलायाः परिकल्पनामेव सूचयति ।

# किष्किन्धाकाण्डम् *

## ऋष्यमूकाभिमुखी-यात्रा

शबर्याः स्वर्गारोहणानन्तरं नरपती रामः लक्ष्मणेन सह आश्रमान्निर्गत्य पम्पासरः प्रदेशाभिमुखं प्रस्थितः। अनुपमासीदत्रत्य वनस्य शोभा। शतशो मयूरादिनानाविधविहगानां मधुरगानैश्चतुर्दिशो मुखरिता आसन्। विविधशैवालपद्मकुमुदकह्लारशोभितं सरःसलिलम्, रमणीयवसन्तशोभान्वितवनस्थली, तिलकाशोकवटबीजपूरलोध्रैः, पुष्पितकरवीरपुंनागमाधवीमालतीलताभिः, कुन्दभाण्डीरी निचुलसप्तपर्णकेतकप्रभृतिविविधवृक्षलताभिः विशोभितां परितः रमणीयां पम्पामवलोक्य रामचन्द्रः सीताविरहेण मुह्यमानः लक्ष्मणमब्रवीत् :— 'सीताविरहेण कथं जीविष्यामि? अहा! अत्रोपास्थिता सीता कीदृशी प्रमुदिता स्यात्!' सीतागतप्राणः रामः बहुविधं शोकप्रकाशमकरोत्।

राममवशं शोकान्वितं चावलोक्य लक्ष्मणः उवाच,—'आर्य! उत्साह एव श्रेष्ठं बलम्। आवां केवलमुत्साहमवलम्ब्यैव जनकनन्दिनीं पुनरपि लप्स्यावहे इदानीं विरहजनितं चित्तवैक्लव्यं दूरीकर्तव्यम्।

लक्ष्मणस्य समयोचितसान्त्वनावचनेन श्रीरामः प्रकृतिस्थः सन् सौमित्रिणा सह पम्पाप्रदेशमतिक्रम्य ऋष्यमूकपर्वतदिशि अग्रेसरोऽभूत्।

---

* एतत्काण्डस्य प्रधानघटनाः प्रायः वाल्मीकिरामायणादस्वीकृताः सन्ति।

अस्मिन्समये वानरराजः सुग्रीवः दूरतः वनमध्ये महावीर्यवन्तौ धनुर्धारिणौ रामलक्ष्मणाववलोक्य तौ वालिप्रेरितचराविति मत्वा भयेन मन्त्रिभिः सह किष्किन्धिरापत्स्थानं प्रयातः। सुग्रीवः उद्विग्नचित्तः भीतश्च सन् स्वकीयसहचरावब्रवीत्—'एतौ ध्रुवं वालिनश्चरौ**। सशस्त्रौ अस्मदन्वेषणाय एतद्वनमुपस्थितौ।

## हनूमतः दौत्यम्

हनुमान् सुग्रीवं भीतमिवावलोक्याब्रवीत्,—'वीरश्रेष्ठ! मा भैषीः। अस्मिन्मलयपर्वते वालिनः नास्ति किमपि भयम्, इंगितेन तदभिप्रायमधिगम्यैव कर्तव्यनिश्चयः समुचितः।'

सुग्रीवोऽब्रवीत्,—'सम्यगुक्तं त्वया। तयोः परिचयज्ञानमावश्यकम्। छद्मवेशेन त्वं दूतरूपेण तत्समीपं गत्वा विचक्षणतया ताभ्यां सार्धं विविधवार्ताभिः मम प्रशंसापरः सन् किमर्थं ताविहागतौ इति ज्ञात्वा आगच्छेः।'

---

** प्रायः सर्वेष्वपि रामायणेषु 'वाली' 'हनुमांश्च' (वालि-ह्रस्व 'इ'कारान्तः हनु-ह्रस्व 'उ'कारान्तः) इत्येव वर्णविन्यासौ व्यवहृतौ। किन्तु प्रकृतिप्रत्ययविचारपूर्वकं इत्थं न प्रतिभाति। अस्माभिरपि 'वाली' 'हनूमान्' इत्येव (वालिन्—इन्नन्तः, हनू—दीर्घ उकारान्तः) वर्णविन्यासौ स्वीकृतौ।

सुग्रीवेच्छानुसारं मायावी हनूमान् * भिक्षुवेशं धृत्वा राम-लक्ष्मणसमीपं गतः। अधिकतरं सम्मानं च दर्शयित्वा सविनयं मधुर-वचनमब्रवीत्—'कौ भवन्तौ ? किमर्थं चास्मिन्विजने वने समागतौ ? भवन्तौ सशङ्कावलोक्य मृगादयो वनचरास्त्रस्ताः। भवदवलोकनेन बलवीर्यसम्पन्नौ कावपि राजर्षी भवन्तौ इति तर्कयामि—अपरं च शिरसि जटाभारः; हस्तयोरिन्द्रधनुस्तुल्यं विचित्रं शरासनं, अक्षय-तूणीरौ, सुतीक्ष्णौ खड्गौ वृत्ताकाराजानुलम्बिनौ बाहू निराभरणशरीरं च पश्यामि। भवन्तौ तु ससागरां पृथ्वीमपि शासितुं समर्थौ। छद्मरूपेणा-स्मिन्वने किमर्थं समागतौ ? अत्र सुग्रीवनामा कश्चिद्बलशाली धार्मिकः किष्किन्धाराजो निवसति। स भ्रात्रा हृतराज्यस्त्रीकः बहिष्कृतश्च ; राज्योद्धारस्य नास्ति कोऽप्युपायः इति दुःखितमानसस्तिष्ठति। अहं सुग्रीवस्य मन्त्री वायोरौरसपुत्रः। अहं मायावी कामगामी च। सुग्रीवादेशेन भवत्सकाशमागतोऽहम्।'

---

* जैनरामायणानुसारं सुग्रीवः हनुमांश्च विद्याधरौ कामरूपिणौ चास्ताम्। न तु वानरौ। विद्याधरो हनूमान् मक्षिकारूपं धृत्वा प्रच्छन्नभावेन सीतान्वेषणार्थं लंकां प्रयातः। वानररूपेण च सीतायाः पुरतो दृश्यते। जैनपुराणानुसारं जैनमतावलम्बिभिः हनूमान् विंशति-कामदेवरूपेण पूज्यते। मकरकेतुरिति तस्यान्यन्नाम। रामदूतरूपेण पूजनात्पूर्वमेव 'कामदेवरूपि हनूमतः पूजा भारते प्रचलिता आसीत्।

## हनूमता सार्धं वार्तया रामस्य विस्मयः

हनूमतः वचनेन रामः अतिप्रीतः सन् लक्ष्मणमब्रवीत्—'सौमित्रे। आवामिह सुग्रीवेण सख्यस्थापनार्थमागतौ; तस्यैव सुग्रीवस्यायं प्रियसचिवः। अनेन वाग्मिदूतेन यादृशं वचनमुक्तं तेन मन्येऽयं वेदज्ञः अनेकशश्च कृतव्याकरणशास्त्रपरिशीलनः। तेनानेकवाक्यान्युक्तानि किन्तु नैकोऽप्यपशब्दः प्रयुक्तः। यस्य राज्ञः एवं विधविचित्रगुणशालिदूतः तस्य सर्वाण्यपि कार्याणि सिद्ध्यन्ति तेन सह त्वया बन्धुनेवालापः कर्तव्यः।'

रामस्य निर्देशेन लक्ष्मणो अभाषत,—'हे वाग्मिवर! तव वचनेनावामतीव प्रीतौ। सुग्रीवस्य परिस्थितिं गुणांश्चावां जानीवः। तस्यैवान्वेषणे आवामत्रागतौ तेन सह च परिचयमिच्छावः।'

हनूमान् प्रीतः सन्नुवाच—'कौ भवन्तौ? केन हेतुना अस्मिन्विजने वने निराश्रयाविव भ्रममाणौ स्तः?

लक्ष्मणः निजपरिचयं दत्वा सीताहरणेतिहासं कबन्धराक्षसस्योपदेशं च ज्ञापयित्वा असहाय इव गद्गदस्वरमुक्तवान्—'आवाम् विशेषविपन्नौ सुग्रीवस्य शरणापन्नौ स्वः। त्रिलोकविख्यातदशरथपुत्रः रामः अद्य अनाथ इव सुग्रीवप्रसादप्रार्थी जातः।'

लक्ष्मणस्य मर्मस्पर्शि वचनं निशम्य हनूमानब्रवीत्—'भवद्सदृशौ महापुरुषौ तस्य [illegible] इति सुग्रीवस्य परमसौभाग्यम्।

 

सुग्रीवः तस्य भ्रात्रा राज्याच्च्यावितः हृतदारः विपन्नश्च ; तथापि स सीतान्वेषणोद्धारयोः ध्रुवं तव यथाशक्ति सहायं करिष्यति। इदानीं भवन्तौ सुग्रीवसाक्षात्कारार्थमागच्छताम्।'

हनूमतः समयोचितप्रस्तावेन रामः तस्य प्रार्थनां सानन्दं अनुमेने। मायावी हनूमांश्च भिक्षुरूपं परित्यज्य स्वकीयं विशालं वानररूपं धृत्वा रामलक्ष्मणौ स्वकीयस्कन्धद्वयमारोप्य ऋष्यमूकपर्वते सुग्रीवसमीपं नीतवान्।

## रामसुग्रीवसख्यस्थापनम्

अनन्तरं हनूमान् रामलक्ष्मणौ सुखासनयोरुपवेश्य सुग्रीवसमीपं दशरथपुत्ररामलक्ष्मणयोः परिचयं, वनागमनम्, सीतापहरणवृत्तान्तं सविस्तरं निगद्योक्तवान्,—'एताविदानीं सहायप्रार्थिनौ सन्तौ भवता सह सख्यमिच्छतः। सम्मानयतु भवानेतौ।'

हनूमद्वचनमाकर्ण्य सुग्रीवः धृतसुवेशः रामसमीपमागत्य स्मितपूर्वमुवाच—'हे रघुनन्दन! त्वं धार्मिकः तेजस्वी च। वायुपुत्रहनूमत्सकाशात् तव परिचयमधिगम्य प्रीतोऽस्मि। यत् त्वं मया सार्धं सख्यस्थापनमिच्छसि तन्मम परमगौरवकारणम्। अस्मत्सख्यं प्रीतिकरं मन्यसे चेत्तर्हि मम प्रसारितहस्तग्रहणपूर्वकं अक्षयप्रीतिः स्थाप्यताम्।'

रामः प्रीतः सन् कृतसुग्रीवकरग्रहणः तं गाढमालिङ्गनपाशबद्धमकार्षीत्। ततः हनूमान् काष्ठद्वयघर्षणेन अग्निं प्रज्ज्वाल्य पुष्पैः

सम्पूज्य च तमग्निं द्वयोर्मध्ये स्थापितवान् । रामसुग्रीवौ गृहीतान्योन्य-करौ अग्निं प्रदक्षिणीकृत्य सप्रेम परस्परमवलोकयामासतुः । अनन्तरं महाबलो रामः प्रीतः सन् सुग्रीवमुक्तवान्—'अद्य प्रभृति त्वं मम प्रियमित्रमभूः । समानं च जातमावयोः सुखदुःखम् ।'

सकलेष्वपि उपविष्टेषु सुग्रीवोऽगादीत्—'अहमस्मि विशेषेण विपन्नः । मम बलशाली ज्येष्ठभ्राता अतितुच्छकारणतः मम स्त्री बलादगृहीत्वा मां राज्याद्बहिष्कृतवान । अहं तु निराश्रयः भीतश्च सन् अत्र गिरिगुहाश्रयं कर्तुं बाधितोऽस्मि । रक्षस्व माम् ।'

## वालिवधस्य प्रतिज्ञा

अरिन्दमः रामः सस्मितमगादीत्,—'बन्धो ! मित्रोपकारार्थं यत्कर्तव्यं तदहं विशेषरूपेण जाने । अचिरादेव तव दुःखं दूरीकरिष्यामि । तीक्ष्णशराघातेन वालिनं भूपतितं विधाय तव राज्यं स्त्रियं चोद्धरिष्यामि । त्वया अव्याकुलेन भाव्यम् ।'

आनन्दितः सन् सुग्रीवोऽब्रवीत्—'सखे ! तव सहायेनाहं हृतं राज्यं स्त्रियं च प्राप्स्यामित्याशासे ।' क्षणं तूष्णीं स्थित्वा सुग्रीवः पुनरुवाच,—'हे राजेन्द्र ! त्वमप्याश्वस्तो भवेः । तव पत्न्या उद्धरार्थं मया प्राणपणः कृतः । सर्वामपि घटनां निशम्य मन्ये मया तव स्त्री दृष्टपूर्वा । कतिपयदिवसेभ्यः पूर्वं कश्चिद्भीमकर्मा राक्षसः

कामपि रमणीमपहृत्य रथमारोप्य च आकाशमार्गेण प्रचलितः। तदानीं तया 'हा राम! हा लक्ष्मण!' इत्यार्तनादः कृतः। वयं पर्वत-शिखरे उपविष्टाः अभूवम्। अस्मान्विलोक्य सा रमणी उत्तरीयामा-भरणानि च पातितवती। अस्माभिश्च तदखिलं रक्षितमास्ते। त्वमव-लोक्य परिचेष्यसीति मन्ये।

रामस्तदाकर्ण्यागादीत्—'सखे! शीघ्रं तदखिलं दर्शय।' सुग्रीवस्तत्क्षणमेव पर्वतगुहासकाशात् वस्त्रालङ्कारानानीतवान्। तान्दृष्ट्वैव रामः अश्रुपूर्णलोचनः तान्स्ववक्षसि गाढं 'धृत्वा हा प्रिये!' इत्युक्त्वा शोकार्तः रामचन्द्रः भूलुण्ठितः सन् क्रन्दमानः त्यक्तदीर्घ निश्वासः अतिकरुणं लक्ष्मणमब्रवीत्—'भ्रातः पश्य वैदेहीवस्त्रालं-कारान्। तामपहृत्य यदा राक्षसः प्रयातः तदैव सा एतान् भूमौ पातितवती।' लक्ष्मणोऽब्रवीत्—

'नाहं जानामि केयूरे नाहं जानामि कुण्डले।
नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात्॥

(षष्ठःसर्गः२२-१३वा.रा.)

## वालिसुग्रीवयोः शत्रुतेतिहासः

लक्ष्मणः राममतिशोकान्वितमवलोक्योक्तवान् — 'त्वया शोको न कार्यः। आवां सुग्रीवस्य सहायेन अविलम्बमेव कल्याणीं जानकीमुद्धरिष्यावः।' सुग्रीवोऽपि रामं सान्त्वयित्वा आश्वस्तं च

विधाय जगाद,—'बन्धो ! मया तव पुरतः प्रतिज्ञा क्रियते यत् तं राक्षसं हत्वा सीतायाः उद्धारं विधास्यामि ।'

तदानीं रामः उक्तवान्—'सखे ! त्वत्कृतसान्त्वनयाहं प्रकृतिस्थो जातः । सम्प्रति मयापि किं तव प्रियकार्यं कर्तव्यं तदपि उच्यताम् । अहं सत्यप्रतिज्ञः ; पूर्वं कदाप्यसत्यं नाभाषे ; भविष्यत्यपि कदापि मिथ्यावादी न स्याम् । तवाभ्यर्थनां पूरयिष्यामि ।' सुग्रीव उवाच,—'अहं बालिनः अतिभीतः अतः त्वया तस्य वधेन भयान्मोचयितव्यः' । रामः अति व्यथितचित्तेनोक्तवान्—'वयस्य ! त्वया शोकस्त्यक्तव्यः अद्यैवाहं तव परमशत्रुं बालिनं हत्वा त्वां भयमुक्तं विधास्यामि' ॥

अनन्तरं सुग्रीवः आनन्दितः सन् प्रणयवशतः रामं व्याहर्तुमारब्धः,—'बाली मां राज्याद्बहिष्कृत्य मम प्रियमपि बलान्निगृहीतवान् । बालिनं प्रति मम शत्रुतेतिहासं त्वां प्रति संक्षेपतः वर्णयामि । मयदानवस्य महापराक्रमिणौ द्वौ पुत्रौ—दुन्दुभिः मायावी च । एकस्मिन्नहनि दुन्दुभिः बलदर्पितः सन् भूत भयंकरमहिषस्वरूपः किष्किन्धाद्वारदेशमागत्य बालिनं युद्धार्थमाह्वयत् । भीषणं युद्धमजनि—बाली लीलया अचिरादेव दुन्दुभिं हत्वा तस्य रुधिराक्तं विराट् मस्तकं पदाघातेन मतङ्गमुनेराश्रमसन्निधौ क्षिप्तवान् । मृतदैत्यस्य शोणितं वायुचालितं सत् मतङ्गमुनेराश्रममदूषयत् । तदैव स मुनिः 'यः ममाश्रमं

दैत्यशोणितेन कलुषीकृतवान् स चेदाश्रमस्यैकयोजनाभ्यन्तरमागमिष्यति तर्हि तस्य मृत्यु र्ध्रुवः ।' इति शापं दत्तवान् । एनमभिशापं निशम्यैव वाली भयेन ऋष्यमूकपर्वतसमीपं गन्तुमसमर्थः । तस्मादहमपि पलायित्वा अत्रागत्यात्मरक्षापरो जातः ।

## वालिनः बलविक्रमस्य परिचयः

दुन्दुभौ वालिना निहते भ्रातृवधपरिशोधार्थं मायावी कस्यां चित् रजन्यां किष्किन्धामाक्रम्य वालिनं युद्धार्थमाहूतवान् । अहमपि भ्रातृप्रेमवशतः तमन्वसरम् । वाली एकेनैव मुष्टिप्रहारेण मायाविनं धराशायिनमकार्षीत् । तेन मायावी भीतः द्रुतवेगेन पलाय्य तृणावृतमेकं भूगर्तं प्रविष्टः । वाली मामुक्तवान्—'यावदहं शत्रुवधात् प्रतिनिवृत्तः तावन्मामत्रैव प्रतीक्षस्व ।' इत्यभिधाय वाली तमेव गर्तं प्राविशत् । एकवत्सरपर्यन्तं तत्राहं प्रतीक्षापर आसम्—परं वाली न प्रतिनिवृत्तः । तदा 'वालिनः मृत्युर्जात' इति निश्चित्य महान्तमेकं पाषाणखण्डं गर्तोपरि निधाय विवरं पिधाय च शोकार्तचित्तस्तत्तर्पणादिः किष्किन्धां प्रतिनिवृत्तः । सर्वे मन्त्रिगणा एतदखिलं निशम्य अनिच्छन्तमपि मां राजपदेऽभिषिक्तवन्तः । इयमतीतेषु केषुचिद्दिवसेषु वाली कृतदानववधः एकस्मिन्दिने सहसा प्रत्यागतः मां च राजपदारूढमवलोक्य क्रोधेन मन्त्रिणो बन्दिभावं गृहीतवान्, मां च तिरस्कृत्योक्तवान्—'त्वं भ्रातृद्रोही, त्वां प्रतीक्षार्थं गुहाद्वारे नियुज्याहं

शत्रुवधार्थं प्रयातः । किन्तु त्वं तस्यामेव गुहायां मामवरुध्य मम हत्यार्थं त्वया गुहाद्वारं महताप्रस्तरखण्डेनाच्छादितम् ; अत्रागत्य च राजपदमासादितम् । एवं संवत्सरानन्तरं शत्रोरभिज्ञानमुपलभ्य तं सवंशं च नाशयित्वा प्रत्यायातः गुहाद्वारं पिहितमित्यद्राक्षम् । अतिकष्टेन पदाघातैः शिलामपसार्य गह्वराद्बहिरेत्यात्रागतोऽहम् । त्वया राज्यलोभिना मां नाशयितुं छलप्रबन्धो विहितः । त्वामहं हनिष्यामि ।'

अहं राजमुकुटेन सार्धं प्रणतः सन् क्षमामभ्यर्थ्योक्तवान्—'त्वं न्यायात् भ्राता सुखं प्रत्यागत इत्यानन्दितोऽहम् । इदं छत्रचामर-मङ्गीकृत्य राज्यशासनपरो भवेः । अहं तु तव सेवको भूत्वा स्थास्यामि । किन्तु कस्मिन्नपि अविश्वस्तोऽपभाषमाणः एकवाससमेव मां निष्कासि-तवान् । ततः प्रभृत्यहं निराश्रय इव स्थानात्स्थानं भ्रममाणः भयार्तः सन् इममेव ऋष्यमूकपर्वतमाश्रित्यात्मरक्षां विदधामि । वाली एव मम परमशत्रुः । तस्मिन्निहते एव अस्मदापदोऽवसानं मेष्यन्ति । किन्तु वली युद्धेऽप्रतिद्वन्द्वी अमितबलशाली च । एतान् पुरतः स्थितान् सप्तशाखापत्रसमन्वितान् विशालसालवृक्षान् वाली कम्पयि-त्वा निष्पत्रान्कर्तुमलम् । अदूरत एव वालिनिहत दुंदुभेः पर्वतप्रायो-ऽस्थिराशिर्दृश्यते । वाली प्रतिदिनं सूर्योदयात्पूर्वमेव अनायासेन सप्तसमुद्रपरिभ्रमणपूर्वकं गिरिशि[illegible] शिलाखण्डानुत्पाटयति

 

मदमत्तश्च सन् संसारवृक्षानुन्मूलयति। हे राम! वालिना सह अस्मद्विरोधस्य कारणं तस्यचासाधारणशौर्यवीर्यपरिचयं च दत्तवानहम्। एतादृशदुर्धर्षवालिनं त्वमेकाकी कथं हन्तुं समर्थो भवेः!'

## रामस्य शक्तिपरीक्षा

लक्ष्मणः सहास्यमुवाच—'सखे! राघवस्य बलपराक्रमविषयेऽजानन्नेव त्वमेवंविधं भाषसे। केन त्वयि विश्वासमुत्पादयिष्यामि कथ्यताम्?'

ततः सुग्रीवः लक्ष्मणमुक्तवान्—'रामः यदि दुन्दुभि-:अस्थिराशिं एकेनैव चरणाघातेन शतद्वयधनुःपरिमितमन्तरं प्रक्षिपेत् तर्हि वालिवधेऽयं समर्थः इति ज्ञास्यामि।'

रामः सस्मितं पादाङ्गुष्ठाहत्या एव दुन्दुभिकंकालं दशयोजनदूरपर्यन्तमपसारयांचकार। अनेनाप्यसन्तुष्टः सुग्रीवोऽगादीत्—'दुन्दुभिदेहकंकालमिदानीं शुष्कं लघुतरं च संवृत्तम्। दुन्दुभिप्रक्षेपणसमये वाली युद्धक्लान्तः दैत्यदेहस्य च भारः कतिगुणोऽधिकतर आसीत्। अतः एतेन बलतुलना कर्तुं न शक्यते। राम! त्वां मित्ररूपेण प्राप्य मया तु महानाश्रयः समासादितः। वालिनः बलविक्रमपरिचयदानेन नाहं तवावमाननापरः नापि मया किमपि भयं दर्शितम्।

बालिनः अमितवीर्यस्मरणेन स्वयमेवातिभीतोऽहम्। पुरतः य एते सप्तशाखसालवृक्षा अवलोक्यन्तेताननेकवारं बाली एकैकशो मर्दितवान्। त्वयापि एतेषां सप्त सालानामन्यतमस्य भेदो विधेयः येन तव शक्तेः परिचयं लभे।

## सप्ततालभेदः

सुग्रीववचनेन रामः स्मयमानः धनुषि भयानकमेकं शरं नियुज्य आकर्णाकृष्टगुणः तं शरममुञ्चत्। अयं च शरः साश्चर्यं सप्तसालवृक्षभेदपूर्वकं पर्वतमपि विदीर्य भूमिं प्रविष्टः, तत्क्षणमेव च राम तूणीरमनुप्राप्तः। तदवलोक्य विस्मितः सुग्रीवः रामचन्द्रं प्रणम्योवाच—सखे! बाली तु सामान्यव्यक्तिः। त्वं तु इन्द्रादिदेवगणानपि हन्तुं समर्थः! त्वां मित्ररूपेण प्राप्य अस्मदान्तरं भयशून्यं जातम्। त्वमद्यैव वालिनं हत्वा मामुपकृतं कुरुष्व।' ततः रामः सुग्रीवमालिङ्ग्योक्तवान्—'तथास्तु'। अधुना वयं किष्किन्धां गच्छेम। त्वं वालिनं युद्धार्थमाह्वय।'

## किष्किन्धां प्रति गमनं वालिसुग्रीवयोर्युद्धं च

सुग्रीवं पुरस्कृत्य सर्वे किष्किन्धानगरीसमीपं निबिडारण्ये वृक्षपार्श्वेत प्रच्छन्नाःस्थिताः। सुग्रीवः बद्धपरिकरः तडिद्वेगेनोपगम्य स्पर्धया स्वीयगर्जनं वालिनं युद्धार्थमाहूतवान्। वाली क्रुद्धः

 

सन् प्रासादाद्बहिरागतः। भ्रात्रोस्तुमुलं युद्धमारभत। तयोराकृतिं अश्विनीकुमारद्वयमिव तुल्यामालोक्य रामः विस्मितः, को वाली कश्च सुग्रीवः इति दूरात् ज्ञातुमशक्नुवन् सुग्रीव वधाशंकया नाकरोच्छर-निक्षेपम्। अनन्तरं सुग्रीवः परास्तः सन् रक्तवमनपरः ऋष्यमूकपर्वत-दिशा सवेग पलायितः।

## सुग्रीवस्य पराजयः द्वितीयवारं युद्धं च

हनूमान् रामलक्ष्मणौ गृहीत्वा सुग्रीवसमीपं गतः। सुग्रीवश्च अधोमुखः कातरस्वरेणाब्रवीत्—'सखे! शत्रुरूपिवालीद्वारा मां किमर्थमित्थं लाञ्छितं कृतवानसि? 'वालिनं न हनिष्यामि' इत्येव यदि तवाभिप्रायः तर्हि पूर्वमेव वक्तुमुचितमासीत्।'

सुग्रीववचनमाकर्ण्य रामः साश्रुनयनः तमालिङ्गयोक्तवान्—'वयस्य मा भैषीः। युवयोर्द्वयोरपि समानामेवाकृतिं विलोक्य मित्र-वधशङ्कया मया शरो न मुक्तः। त्वां येनाहं ज्ञास्यामि एतादृशं किमप्यभिज्ञानं धारयित्वा पुनरपि वालिना युद्धमारभस्व—एकेनैव शरेण स धरातलशायी भवेदिति द्रक्ष्यसि।'

रामस्यादेशेन लक्ष्मणः सुग्रीवस्य कण्ठे गजपुष्पीलतामानीय बबन्ध; सर्वे च ते पुनरपि किष्किन्धानगरं प्रति प्रस्थिताः। हनूमान्, नलः नीलः इत्यादयः यूथपतिगणा अपि सहैव प्रचलिताः।

किष्किन्धामेत्य सर्वे वृक्षान्तरालेऽन्तर्हिताः । सुग्रीवः पुरतो गत्वा प्रचण्डनिनादं कृत्वा वालिनं पुनरपि युद्धार्थमाकारयामास ।

श्रुतसुग्रीवाह्वानः वाली कोपेन अधीर इव युद्धार्थं प्रस्तुतः। इदमालोक्य तारा गृहीत स्वामिचरणा क्रन्दन्ती उक्तवती—'हे नाथ! त्वया अद्य युद्धार्थं न गन्तव्यम् । मम तु महान्सदेहो जायते—मया दुर्लक्षणानि दृष्टानि । सुग्रीवः अस्मिन्नेव युद्धे परास्तःसन् पलायितः पुनः कुतो युद्धार्थमागतः ? ध्रुवमनेन कोऽपि प्रबलः सहायकः प्राप्तः। पुत्रः अङ्गदः मृगयार्थं गतः चारमुखेन ज्ञातवान्—' अयोध्यावासी दशरथात्मजौ रामः लक्ष्मणश्च अस्मिन्वने समागतौ । रामः हृतपत्नी उद्धारार्थं सुग्रीवेण सार्धं अग्निसाक्षिकं मित्रत्वं कृतवान । सुग्रीवः सीतोद्धारे सहायं विधास्यति रामश्च त्वां हत्वा सुग्रीवाय राज्यं समर्पयेत् । श्रूयतां मम वचनम्—भ्रात्रा सह शत्रुतां परित्यज्य सुग्रीवो यौवराज्येऽभिषेक्तव्यः । श्रीरामश्च शरणं गन्तव्यः। हे वीर! इत्थं अङ्गदः राज्यं वंशः अस्माकं जीवनं च रक्षितं भवेत । श्रूयता-मस्मद्वचनम्—सुग्रीवस्तव स्नेहपात्रम् ।

ताराविलापमाकर्ण्य वाली तामालिङ्ग्याब्रवीत्—'प्रिये त्वं स्त्रीस्वभावेन भीतासि । रामः यदि आगतो भवेत् तर्हि केन हेतुना मया सह शत्रुतां कुर्यात् ? मया श्रुतम्—रामः धर्मज्ञः सत्यव्रतः एवं अखिलब्रह्माण्डपतिर्नारायणः । न तस्य कोऽपि सपक्षो विपक्षो वा ।

नायं सुग्रीवस्य प्रादानस्य समयः। स खलु सगर्जनं मां युद्धार्थमाकारयति ; अहं च वीरो भूत्वाऽपि कथं सहिष्ये ? एतेन तु मम यशो ग्लानिमापत्स्यते ! त्वं निवर्तस्व। नाहं सुग्रीवप्राणानपहरिष्यामि— तस्य दर्पमर्दनं विधाय क्षणादेव निवर्ते मा दुःखिता भूः।'

## वालिवधस्यायोजनम्

वाली सगर्जनम् पुनर्निर्गतः— सुग्रीवोऽपि उत्प्लुत्य वालिनमाचक्राम। द्वयोरपि रोमहर्षणं युद्धमारब्धम्। द्वावपि शोणिताक्तदेहौ शिलाजानुपदमुष्टिभिः परस्परमाहतवन्तौ। सुग्रीवः क्रमशः हीनबलः सन् युद्धस्थलादसकृद्रामं प्रत्यवालोकयत्। श्रीरामचन्द्रः सुग्रीवं भीतमिवावलोक्य तूणीरादैन्द्रं बाणमेकमुद्धृत्य धनुषि योजयित्वा च वृक्षान्तरालतः वालिनः वक्षःस्थलं लक्ष्यीकृत्य तं वज्रतुल्यं बाणममुञ्चत्, यः वालिहृदयमभेत्सीत्। वाली कृतमहाशब्दः उत्पत्य अचेतनः भूमौ पतितः।'

## वालिनस्तिरस्कारः

वालिनं भूतले पतितमवलोक्य रामलक्ष्मणौ तत्समीपमागतौ। लब्धसंज्ञः सन् रामलक्ष्मणौ पुरतो विलोक्य वाली गर्वितस्वरेण तौ तिरस्कृत्योक्तवान्— 'हे राम ! सर्वेऽपि ब्रुवन्ति - रामः महाकुलजातः, धार्मिकः सत्यव्रतश्चेति' इत्यवधार्य तारानिषेधवचनं तिरस्कृत्य

सुग्रीवेण सार्धं योद्धुमागतः। ज्ञातमिदानीं मया — त्वं दुरात्मा, धर्मद्रोही, अधार्मिकः, साधुवेशी, पापाचारी ; विनापराधं चोर इव शराघातेन मां हतवानसि* त्वं साधुसमाजे कथं मुखं दर्शयिष्यसि ? त्वं यदि प्रकाशं मया सह अयोत्स्यथाः तर्हि अद्यैव मम हस्तात् तव मृत्युरभविष्यत्। त्वं तु सुग्रीवहितकाम्यया सीतोद्धारार्थं मां हतवानसि किन्तु चेत्त्वं मामवदिष्यः तर्हि एकस्मिन्नेव दिने अहं सीतोद्धारं विधाय दुरात्मानं रावणं जीवितावस्थायामेव तव पुरतः समानेष्यम्। मम मृत्युना ध्रुवं सुग्रीवो राज्यं प्राप्स्यसि परंतु तवैतत्कर्म एकान्तं गर्हणीयमास्ते।

## रामस्य वचनम्

रामः वालिनमब्रवीत्। त्वं राजधर्मस्य लोकाचारस्य ज्ञानं विना मां निन्दसि। अयं सर्वोऽपि देशः इक्ष्वाकुगणैरधिकृतः। धर्मात्मा भरतः, अस्य शासनकर्ता। अहं धर्मप्रसारकामनया तदाज्ञानुसारं सर्वत्र संचरणशीलः। त्वं तु कामाचारी राजधर्मविमुखः। तव

---

* कम्बरामायणमते वाली निजहस्तेनैव शल्योद्धारं कृतवान्। जैनरामायणमतेन लक्ष्मणः वालिना सार्धमयुद्ध्यत समरे च तं सम्मुखं हत्वा सुग्रीवं राजानमकार्षीत्। पुनः कस्मिन्नपि रामायणे दृश्यते— रामः सुग्रीवेण सह मल्लयुद्धभूमिमागतः—वाली प्रासादान्निर्गत्य युद्धभूमिमागच्छन्पथि रामेण हतः।

पापाचारेण कदाचरणेन च धर्मः पीडितो जातः कनीयोभ्रातृपत्नी पुत्रवधूस्थानीया । कामासक्तेन त्वया भ्रातृपत्नी निगृहीता । अहं पुनः सुग्रीवेण सह सख्यस्थापनपूर्वकं प्रतिज्ञां कृतवान् 'त्वच्छत्रुवधं विधाय पत्न्या राज्यस्य चोद्धारं विधास्यामि' इति । तां प्रतिज्ञां कथमुल्लङ्घयेयम् ! मनुना उक्तम्—'पापी दण्डभोगेन निष्पापः सन् स्वर्गं प्रयाति किन्तु पापिनः शासनं विना राजा स्वयमेव पापग्रस्तो भवेत् ।' राजा तु देवतास्वरूपः । स प्रजानां धर्मप्राणोभयरक्षां कुर्वन् शुभसाधनं चिन्तयेत् । तस्य हिंसा निन्दा वा नोचिता । त्वं धर्मशास्त्रज्ञानं विनैव ममाक्रोशपरोऽसि ॥

## वालिनः मृत्युः

रामस्य धर्मसङ्गतवचनं निशम्य वाली दुःखितमानसोऽब्रवीत्— 'हे रघुवर ! मया प्रमादवशतः भवन्तं प्रति अप्रियवाक्यव्यवहारः कृतः । तदर्थमहं क्षन्तव्यः । सुग्रीवः अंगदश्च विद्येते तयोः स्निग्धो भवतु भवान्, येन दुःखिनीं तारां सुग्रीवो नाव मन्येत । भवांस्तु त्रिलोकपालकः एतौ प्रतिपालयतु स्वहस्तेनैव भवता मम शल्योद्धारो विधातव्यः भवतः स्पर्शेनाहं पापमुक्तो भूत्वा भवद्दर्शनं कुर्वन् त्यक्तप्राणः वैकुण्ठधाम प्राप्नुयाम् । भवता कैवल्यमुक्तिप्रदानार्थमेव शराघातेन अहं हतः ।'

मुमूर्षुर्वाली सुग्रीवं सस्नेहमुक्तवान्,—'मोहवशतः मयात्व-मुत्पीडितोऽभूः। विविधप्रकारैः दुःखं च प्रदत्तम्। क्षमस्व माम्। त्वमद्यैव राजा भूत्वा मम प्राणाधिकस्य अङ्गदस्य पिता रक्षकश्च भवेः। सुषेणदुहितुर्बुद्धिमत्यास्ताराया उपदेशपालनं असंशयं विधेयम्। निःशङ्कचित्तेन रामस्य प्रियकार्यं करिष्यसि। ममेमां दिव्यकाञ्चनीं मालां धारय।'

वालिनः कातरोक्तिमाकर्ण्य रामः साश्रुनयनस्तमस्पृशत्। तस्य च वक्षसः शल्योद्धारं कृतवान्। तेनैव सार्धं वाली रुधिरवमन-पूर्वकं अन्तिमनिःश्वासपरित्यागं कृतवान्।

सुग्रीवः वक्षसि कृतकराघातः असहाय इव क्रन्दमान राम-मुक्तवान्—'सखे! अचिन्तनीयं खलु मम पापम्। अहं महानुभावस्य भ्रातुः हत्यायाः कारणं जातः। अग्निप्रवेशेन भ्रात्रा सार्कं युक्तः स्याम्। मम वधः नासीद्वालिनः उद्देश्यम्। महाक्रूरोऽहम् शठश्च—न शक्नोमीदं धिक्कृतं जीवितं धारयितुम्।'

## तारायाः शोकः

वालिनः मृत्युसंवादं श्रुत्वा अनुचरास्तारामूचुः—'हे मन्दभाग्ये! राजा निहतः। भवत्या इदानीं कुमारोऽङ्गदो रक्षणीयः। मन्त्रिणामादेशः पालनीयः वयं चतुर्द्वारकपाटपिधानपूर्वकं नगररक्षापरा भवेम। भवत्या अधुना कुमारोऽङ्गदः राज्यपदे नियोज्यः।

बालिनः मृत्युसंवादेन तारा शोकेन मूर्च्छिता सती शिरः वक्षश्च कराघातेन पुनः पुनः ताडयन्ती उवाच—'अङ्गदेन, राज्येन, धनेन, नगरेण वा किं मम प्रयोजनम्? इदानीमेव पत्या सहगमनं करिष्ये। इत्युक्त्वा आमुक्तकेशा क्रन्दन्ती शोकाकुला तारा शोणितसिक्तगात्रो वाली यत्र पतित आसीत् तत्र गता 'हा नाथ! हा नाथ! इत्यार्तनादपरा बालिचरणयोः निपतिता च। रघुनन्दनं समीपमवलोक्य करुणस्वरेणोक्तवती—'राम! येन बाणेन भवता मम स्वामी व्यापादितः तेनैव मामपि जहि। अहं शीघ्रमेव पत्युः समीपं गच्छामि। स्वामी मामभिलषति। हे राघव! मां हित्वा स्वर्गेऽपि स सुखी न भविष्यति! हे अनघ! मां हत्वा न त्वां स्त्रीहत्याजनितः दोषः स्पृशेत्। यतोऽहं स्वामिन एवात्मा। त्वं स्त्रीवियोगदुःखं सम्यगनुभवसि। शीघ्र मां पतिसन्निधौ प्रापय। तेन त्वं पत्नीदानजनितमक्षयसुखं लप्स्यसे*। अनन्तरं तारा सुग्रीवमगादीत्—'त्वं निजभ्रातृवधकारी। तेन लब्धं निष्कण्टकं राज्यं पत्नीं च प्राप्य सुखोपभोगं कुरुष्व।' मृतस्वामिनमालिङ्ग्य तारा विललाप—'हे वीर। किमर्थं न भाषसे? उत्तिष्ठ,

---

*तुलसीदासमतेन रामेण सह सुग्रीव-वालि-तारा-प्रभृतीनां वार्तालापसमये हनूमान् द्विभाषिकार्यमकार्षीत्। एतेन हनूमद्व्रजं न कोऽपि रामचन्द्रस्य भाषां अर्थात् संस्कृत-मजानात् इति भाति।

राज्ञां कृते भूमिशय्या नोचिता। स्वामिन् ! त्वं प्रवासार्थी पुत्रमस्तक-मवघ्राय तमाशिषा संयोजय। हे हृदयेश्वर ! अहं तव प्रिया धृतत्वच्चरणा क्रन्दामि ; किमर्थं नाभिभाषसे ? पुत्र ! तव जनकः परलोकं प्रस्थितः, प्रणमैनम् **

अङ्गदः भूतलादुत्थाय हस्तद्वयेन पितृचरणौ गृहीत्वा मात्रा सह साश्रुपातं क्रन्दितुमारब्धः।

तारां सान्त्वयन् रामः उक्तवान्—'वीरपत्नि ! शोकः परित्याज्यः विधातृविधानानुसारं प्राणिमात्रं सुखदुःखाधीनम्। स्वीयकर्मफलं न कोऽप्यतिक्रमितुं समर्थः। सुखदुःखानि चक्रवत् परिवर्तन्ते। ईश्वरेच्छया त्वं पुनः सुखिनी भविता तव पुत्रश्च राज्यलाभं करिष्यति।'

---

** श्रीरामचन्द्रेण सह वालिताराप्रभृतीनां राजनीति-धर्मनीति युद्धनीति-राजधर्म पातिव्रत्यधर्मादिविषये परस्परालापः सुसभ्यजाते-र्विशिष्टनागरिकाणां सम्भाषणमिव प्रतिभाति ; तथैव वानरराजो वाली तारा च धर्मशास्त्रज्ञौ धार्मिकजीवनयापनपरौ चास्तामित्यपि सूच्यते। पुनः वाल्मीकिकविः तान् यथा चतुष्पाज्जन्तुविशेषरूपेण वर्णयामास तथा एतादृशधर्मज्ञानं चतुष्पाज्जातौ कथं सम्भवमासीत् इदं तु विशेषेण अनुसन्धानयोग्यम्। अस्माभिरस्मिन्ग्रन्थेऽन्यत्र हनूमद्विषये कोऽपि विचारः कृतः।

अनन्तरं रामः शोकार्तं सुग्रीवं तारामङ्गदं च सम्बोध्योक्तवान्—'शोकः मृतव्यक्तेरात्मनोऽमङ्गलकरः भवति। वाली युद्धे प्राणत्यागेन अभीष्टस्वर्गलोकं प्राप्तवान्। इदानीं शोकं परित्यज्य तस्यौर्ध्वदैहिकक्रियादिकं यथाविधि सम्पादनीयम्। तेनैव तदात्मनः शान्तिः तं प्रति च श्रेष्ठकर्तव्यपालनं च भवेत्।'

---

प्राचीनयुगे दक्षिणस्यां वानरोपासना प्रचलिता आसीत् इत्यस्मिन्विषयेऽनेकानि प्रमाणान्युपलभ्यन्ते। तदानीमपि आर्यावर्ते वानरोपासना प्रचलिता नासीत्। भारतस्य प्राचीनतमग्रन्थे ऋग्वेदे वानरप्रतीकोपमनोल्लेखो दृश्यते। वानरस्तत्र 'वृषाकपिः' रुद्रप्रतीकवानररूपेण उपासितोऽभूत्। वैदिकवृषाकपिरूपधारिरुद्रस्योपासकगणः दक्षिणभारते वानरोपासके परिणतः इत्यधिकतरं सम्भाव्यते। हनूमतः जन्मवृत्तान्तेनापि इयं कल्पना समर्थ्यते। यतः हनूमान् रुद्रस्य अन्यतमरूपेण मरुतः सन्तानम्। अतः स मारुतिः।

श्रीरामचन्द्रस्य आगमनात्परं आर्यावर्ते 'वानरयूथमुख्य' हनुमतः उपासना नूतनरूपेण प्रचलिता इति प्रतिभाति। प्रतिभाति। इदानीं दाक्षिणात्यापेक्षया आर्यावर्ते एव हनुमदुपासना आधिक्येन प्रचलिता। एतेन वाल्मीकिकविवर्णितवानरा न खलु चतुष्पाजन्तव एव अपितु ते सुसभ्यमानवानां वंशजाः।

ततः लक्ष्मणनिर्देशेन अङ्गदप्रभृतिरात्मीयवर्गः वालिदेहं नववस्त्रैः विविधमणिमुक्ताभरणैः, हारैः मालागन्धिपुष्पादिभिश्च भूषयित्वा राजार्ह सुसज्जित-विचित्रबृहच्छिबिकोपरि आरोप्य नदी तीरमनैषिषुः। सुग्रीवताराप्रभृतिविशिष्टात्मीयवृन्दं पुरवासिनः पुरनार्यश्च क्रन्दन्त्यः बालिनोऽनुगमनमकार्षुः। मान्त्रगणश्च नानाविधरत्नवितरणपरा अग्रतः प्रचलिताः।

दीर्घ शोकोच्छ्वासरोदनध्वनिभिःसह नदीतीरे चन्दनकाष्ठैः विराट् चिता निरमीयत। अङ्गदः सुग्रीवेण सह क्रन्दमानः पितरं चितायामारोप्य मृतपितृदेहाय शास्त्रानुसारमग्निप्रदानं कृत्वा चितां प्रदक्षिणीचकार। इत्थं बालिनः सत्कारकार्यं समाप्य सुग्रीवताराप्रभृतयः अङ्गदं पुरस्कृत्य तर्पणजलदानादिक्रियात्मकप्रेतकार्यं सम्पादयामासुः ※

---

हनूमान् अणिमालघिमादि विभूति सम्पन्नः एकः श्रेष्ठयोगि अभूत् अत एव तस्य समुद्रोल्लंघन लंकाप्रवेशश्च सम्भवो जातः। लंकां गत्वा सः कदापि मार्जारप्रमाणः, कदापि शतयोजनविस्तृतदेहधारी च जातः एतस्योल्लेखः वाल्मीकिरामायणे प्राप्यते।

※ वाल्मीकिरामायण वर्णितबालिनः और्ध्वदैहिकक्रियादिकं पूर्णतया सुसम्पन्नजातेरनुरूपं दृश्यते।

## सुग्रीवस्य राज्यलाभः

अथ हनूमान् अमात्यवृन्देन विशिष्टनागरिकगणेन च परिवृतः सुग्रीवं पुरस्कृत्य रामचन्द्रचरणवन्दनपूर्वकं कृताञ्जलिरुवाच—'प्रभो! काकुत्स्थ! भवतः प्रसादेनैव महात्मा सुग्रीवः पैतृकराज्याधिपत्यं प्राप्तवान्। इदानीं भवदनुमत्यैव अयं नगरप्रवेशं कृत्वा विविधगन्ध-द्रव्यौषधिमाल्यरत्नादिभिः भवदर्चनां विधास्यति। भवान् रमणीय-राजधानीमागत्य सुग्रीवाय राज्यभारप्रदानेनास्मानानन्दयतु।

रामोऽब्रवीत्—'हनूमन्! अनतीतेषु चतुर्दशवर्षेषु ग्रामं नगरं वा न प्रवेशयेयम्। युष्माभिः सुग्रीवं नीत्वा तस्याभिषेकक्रियादिकं यथाविधि सम्पादनीयम्।' ततः सः सुग्रीवमवादीत्—'सखे! त्वं राज्याभिषिक्तः सन् महाबलाङ्गदस्य यौवराज्याभिषेकं कुरुष्व। वर्षाकालोऽयमारब्धः—इतः प्रभृति मासचतुष्टयपर्यन्तं सीतोद्धारस्य नायं समयः। अत एव त्वया राजधानीं प्रति गन्तव्यम्। अहमपि लक्ष्मणेन सह निकटस्थसुरम्यवायुप्रवाहयुक्तां बृहद्गिरिगुहामाश्रये। वर्षासुव्यतीतासु कार्तिके मासे त्वं सीतोद्धारार्थं समुद्योगं विधास्यसि। इदानीं राज्याभिषेकेन त्वया सुहृद्वृन्दः आनन्दयितव्यः।'

रामाज्ञामधिगम्य सुग्रीवः सहस्रशः प्रजानां अमात्यानां पुरवासिगणानां च आनन्दध्वनिभिः सार्धं किष्किन्धानगरीं प्रविवेश।

प्रजागणाः समाहितचित्ता अवनतमस्तकाश्च भूमौ साष्टांगपातं प्रणम्य तं सम्मानितवन्तः। सुग्रीवः प्रजावृन्दं सम्भाषणपूर्वकमुत्थाप्य भ्रातुः रमणीयं प्रासादं प्राविशत्।

## सुग्रीवस्य राज्याभिषेकः

देवगणाः यथा पाकशासनमभिषिषिचुः तथैव सुहृद्वृन्दं भीमविक्रमं सुग्रीवमभिषेक्तुमुद्यमशीला बभूवुः। स्वर्णपत्रं पाण्डुवर्णं छत्रं, हेमदण्डयुक्तं दर्शनीयं बहुमूल्यं व्यजनद्वयम्, विविधानि रत्नानि, महौषधयः, वटवृक्षस्याधः स्थलीयजटाः, पुष्पाणि मूल्यवन्ति वस्त्राणि, श्वेतमनुलेपनम्, सुगन्धिवनमाल्यानि, स्थलजलपद्मानि, दिव्यचन्दनम्, प्रचुराणि विविधगन्धद्रव्याणि, अक्षताः, काञ्चनम्, प्रियङ्गूः, मधुघृतदधीनि, व्याघ्रचर्मम्, मूल्यवत् पादुकायुगलम् इत्यादि द्रव्याणि अभिषेकार्थं समाहृतानि। षोडशसंख्याकाः परमसुंदरकन्याः प्रीतिपूर्वकं अनुलेपनद्रव्याणि, गोरोचनां, मनः शिलां च गृहीत्वा तत्रोपस्थिताः। रत्नवस्त्रैः विविधभोज्यैश्च ब्राह्मणाः तृप्त्यनन्तरं मन्त्रज्ञागणैः आस्तीर्णकुशे ज्वलदग्नौ मन्त्रपूतघृतेन आहुतयः प्रदत्ताः। ततः गय-गवाक्ष-गवय-शरभ गन्धमादन - मैन्द - द्विविद - हनूमज्जाम्बवत्प्रभृति मित्रगणः सुग्रीवं मनोरमविचित्रमाल्यशोभितप्रासादोपरि रमणीयास्तरणावृत स्वर्णसिंहासने पूर्वाभिमुखमुपवेश्य यथाविधि मन्त्रोच्चारणपूर्वकं विविधनदनदीसागरेभ्यः समानीतनिर्मलजलैः हेमकुम्भान् वृषशृङ्गांश्च

प्रयित्वा महर्षि विहितशास्त्रविध्यनुसारं तादृशनिर्मलसुवासिततीर्थजलेन तस्य (सुग्रीवस्य) अभिषेकक्रियां सम्पादयामासुः। * चतुर्दिक्षु हर्षध्वनौ सुग्रीवः अङ्गदमालिङ्ग्य तं यौवराज्याभिषिक्तं चकार।

## रामस्य प्रस्रवणगिरौ वासः

सुग्रीवः कृतज्ञहृदयः अभिषेकसंवादं रामं प्रति प्रेषितवान्। अनेन संवादेन हृष्टचित्तः रामः लक्ष्मणेन सह रमणीयं वृक्षलतागुल्मसमन्वितं मृगादिपशुबहुलं प्रस्रवणगिरिं गत्वा कस्यांचिन्मनोरमबृहद्गुहायां वर्षायापनार्थमाश्रयं जग्राह। किन्तु वर्षागमे मनोरमस्थाने निवसन्नपि सुखि न बभूव। स तु सीताशोकेनाभिभूतः सन् शोकेन दुःखेन च समयं यापयामास। लक्ष्मणस्तं सान्त्वयन्नुवाच। भवता

---

* सुग्रीवराज्याभिषेकविवरणं पूर्णतया वाल्मीकिरामायणादेव गृहीतम्। इदं च विवरण पूर्णतया वाल्मीकिरामायणस्थं अयोध्यायां रामचन्द्रस्य राज्याभिषेकवर्णनमेव स्मारयति। असभ्यचतुष्पाद वानरजाति नृपस्यायं राज्याभिषेकः सुसभ्यार्यजातौ प्रचलितेन अनुष्ठितेन च राज्याभिषेकेनैव तुल्यः। वानरेषु मन्त्रज्ञाः यागयज्ञकुशला ब्राह्मणा अपि आसन्। एतेन 'किष्किन्धा असभ्यानां राजधानी' तथा 'वाली सुग्रीवः हनूमत्प्रभृतयः चतुष्पाद्वानरविशेषा' इति विधानेऽस्माकं संकोचः भवति।

 

धैर्येण शरत्कालापेक्षा कर्तव्या—ततः सुग्रीवसहायेन रावणं सवंशं नाशयित्वा सीतोद्धारं करिष्यावः।' रामः दीनस्वरेणोक्तवान्—अहं शरदृतुप्रतीक्षापरः भवेयम्।'

## सैन्य संग्रहस्यायोजनम्

शरत्कालागमनं वीक्ष्य हनूमान् सुग्रीवं सैन्यसंग्रहार्थं तत्परः भवितुमुपादिशत्। तदानीं सुग्रीवः नीलमादिशत्—'चतुर्दिग्भ्यः सम्पूर्णं सैन्यं यूथपतिगणाश्च एकत्रीकर्तव्याः। पक्षमितकालाभ्यन्तरएव ते न समागताश्चेत्तेषां प्राणदण्डोभवेत्। अङ्गदं गृहीत्वा कुशलयोद्धॄन् आनेतुं यूयम् गच्छत।' इत्थं सुग्रीवस्यादेशेन सैन्यसंग्रहकार्यं समारब्धम्।

## रामस्य खेदोक्तिः

अस्मिन्समये एकस्मिन्दिने लक्ष्मणः खाद्याहरणात्प्रत्यावृत्य रामं शोकेन मुह्यमानमवलोक्य कातरस्वरेणाब्रवीत्—'आर्य! मा भवान् विरहशोकाभिभूतो भूः। पौरुषमवलम्बस्व। यस्या भवान् पतिः तां जानकीं प्राप्तुमपरे न समर्थाः; ज्वलन्तमग्निं स्पृष्ट्वा के न दह्यन्ते?'

रामः शुष्कमुखेनोक्तवान्—'तव वचनं हितकरं नीतिधर्म संगतं च। किन्तु कथं जानक्या उद्धारो भवेत् इति उच्यताम्।

अस्मिन्समये राजानः शत्रुजयार्थं यात्रां कुर्वन्ति ; किन्तु सुग्रीवस्य न कोऽपि उद्योगोऽवलोक्यते। अहमिदानीं राज्यच्युतः ; रावणेनापमानितः, आश्रयहीनः दीनो दरिद्रश्च। एतेन मन्ये सुग्रीवः निजप्रतिज्ञां अवमन्य मामवहेलयति। लक्ष्मण! त्वं किष्कन्धामभ्येत्य सुग्रीवं पूर्वप्रतिश्रुतिं श्रावयित्वा च वक्तव्यम्—'अहं तस्य निश्चेष्टतया अतिशोकार्तः क्रुद्धश्चास्मि। तं ब्रवीमि च—वाली निहतः सन् येन पथा प्रयातः स पन्था न निरुद्धः। सुग्रीव! त्वया प्रतिज्ञापालनं कर्तव्यम् ; बालिपथः नानुसर्तव्यः। मम शरः न केवलं वालिवधे समर्थः किन्तु त्वं चेत्सत्यभ्रष्टो भवेस्तर्हि सबान्धवस्य तव वधं करिष्यामि।'

## लक्ष्मणस्य क्रोधः किष्किन्धागमनं च

अतरामव्याहारः लक्ष्मणः क्रुद्धोजगाद—'क्रोधं संहर्तुमसमर्थोऽहम्। मिथ्याचारिणं प्रत्युपकारविमुखं सुग्रीवमद्यैव हनिष्यामि, वालिनः पुत्रमङ्गदमन्यवानरसेनां च गृहीत्वा सीतान्वेषणं विधास्यामि।'

रामोऽब्रवीत्—'भ्रातः! त्वत्सदृशैः एतादृशं पापकार्यं कर्तुमनुचितम्। क्रोधस्त्वया परित्यक्तव्यः। केवलं 'समयोऽतिक्रान्त' इत्येव सुग्रीवं स्मारय।'

रामस्योक्त्या लक्ष्मणः मनसि लज्जितः तत्क्षणमेव गृहीत भीषणधनुः सुग्रीवं द्रष्टुं प्रचलितः। किष्किन्धां समागतं लक्ष्मणं वीक्ष्य

द्वाररक्षिगण: सुग्रीवाय न्यवेदयन् । स तदानीं विश्रामागारेऽभूत् । समीपमागतं भीतमङ्गदं लक्ष्मणोऽब्रवीत्—'वत्स ! त्वया सुग्रीवो वक्तव्यः—'अहं रामदुःखेन पीडितः द्वारदेशे प्रतीक्षा परोऽस्मि' इति । यदि रोचते सुग्रीवोऽस्मत्कथां श्रोष्यति ।'

तत्क्षणमेव मन्त्रिद्वयं सुग्रीवसमीपं क्रोधान्वितलक्ष्मणागमनवार्तां निवेदयामासुः । सोऽब्रवीत्—'मया तु न कश्चिदप्यपराधः कृतः; भ्रूवं लक्ष्मणसमीपं कोऽपि शत्रुरस्मद्विरुद्धं किमप्यभाषत । भवता तन्मनोभावं ज्ञात्वा आगन्तव्यम् ।' तदा हनूमानुवाच—'रामः त्वदर्थमेव वालिवधं विहितवान् । भवताप्रत्युपकारस्य कोऽपि प्रयत्नः न विहितः इति मत्वा स कुपितः इति मन्ये । राघवस्य परुषवाक्यं तु त्वया सोढव्यमेव । इदानीं लक्षमणमवलोक्य तं प्रसादयतु भवान् ।

## किष्किन्धावर्णनम्

लक्ष्मणः अंगदमुखात सुग्रीवसाक्षात्कारविषये प्रत्युत्तरं प्राप्य तेन (अङ्गदेन) सह परमरमणीयं किष्किन्धानगरं प्राविशत् । महाबलाः बृहत्कायाः द्वाररक्षिणः तमवलोक्य कृताञ्जलयः अभ्यवादयन् । ततः श्रीमान् लक्ष्मणः रत्नमय कुसुमितं काननसमन्वितं विशालं नगरं प्रविश्य दृष्टवान—एषा राजपुरी परस्परविकटवर्ति हर्म्यप्रासादसमूह-सुसज्जिता, नानारत्नसुशोभिता, विविधाभिलषितफलप्रदपुष्पितवृक्षराजि-विराजिता, दिव्यमाल्यधारिभिः प्रियदर्शनैः देवगन्धर्वौरसजात-

मायाविप्रियदर्शनरक्षिगणैः सुरक्षिता, चन्दनागरुपद्मगन्धसुवासिता-चाभूत् । तस्यागमनमार्गा अपि विशेषरूपेण मैरेयमधुगन्धामोदिता आसन् ।

रघुकुलतिलकः लक्ष्मणः राजपुरीसौन्दर्येण विस्मितः तत्र विन्ध्यमेरुतुल्याननेकोच्चप्रासादान्, गिरिनदीश्च पश्यन् राजमार्गे अङ्गद-मैन्द्र-द्विविद-गवय-गवाक्ष-गजशरभाणां विद्युन्मालि सम्पाति सूर्याक्ष हनूमद्विरबाहुसुबाहूनां, नलकुमुदसुषेण-तारजम्बवत - दधिवक्त्र नील सुनेत्र सुपाटलप्रभृतीनां महातेजसां यूथप्रधानानां पाण्डुरवर्णान्, मेघप्रभान्वितान्, गन्धमाल्ययुतान्, प्रचुरधनरत्नशालिनः, स्त्रीरत्न-सुशोभितान रमणीयान् प्रासादान् अद्राक्षीत् । ततः धर्मात्मा लक्ष्मणः विविधवर्णस्फटिकमयप्राचीरपरिवेष्टितम्, इन्द्रपुरीतुल्यम्, कैलास शिखरसमशुभ्रवर्णम्, सुविन्यस्तहर्म्यशिखरैः सुशोभितम्, अखिल-वाञ्छितफलप्रदैः पुष्पितैः नीलमेघसमसौदर्यशालिभिः रमणीयपुष्पफल-समन्वितैः देवराजप्रदत्तकल्पवृक्षसमूहैः परिव्याप्तं, शीतलछायायुक्तं च, —द्वारदेशे अस्त्रधारिभिः महाबलवीरगणसुरक्षितं, दिव्यमालासुशोभितं, तप्तकाञ्चनमयं तोरणसमन्वितम् सुग्रीवस्य प्रासादगृहम्.—महामेघ-प्रविष्टदिवाकर इव अप्रतिबन्धं प्रविवेश । ततो लक्ष्मणः आसनसमावृत-सप्तकक्षा अतिक्रम्य सुवर्णरजतनिर्मितमहामूल्यपर्यङ्कैः उत्कृष्टासनादि-भिश्च परिवृतं सुग्रीवस्य एकान्तगुप्तमन्तः पुरं दृष्टवान् ।

अन्तःपुरे प्रविष्टमात्रो लक्ष्मणः समतालपदाक्षरसमन्वितं सतन्त्रीगीत सुमधुरध्वनिमश्रृणोत्। तत्र च विविधवेशसज्जिता रूपयौवनगर्विता सुन्दरललना अवलोक्य स विस्मितोजातः। ततश्च सुमित्रानन्दनः श्रुतनूपुरकाञ्चीरवः लज्जितः सन् अत्यन्तकुपितः धनुष्टंकारेण सकला अपि दिशः अकम्पयत्।* अस्माद्भीषणटंकारात् भीतः सुग्रीवः तारामुवाच—'त्वं लक्ष्मणमवलोक्य प्रसादय।'

तारा स्मितवदना सती लक्ष्मणसम्मुखमुपस्थिता। लक्ष्मणः तामवलोक्य नतमस्तकोऽवास्थात्। तारा उवाच—'राजपुत्र! त्वया कोपः किमर्थं क्रियते? केन त्वमवमानितः? लक्ष्मणः उन्नमितशिरा

---

* किष्किन्धावर्णनस्यांशः सर्वोऽपि बाल्मीकिरामायणात्स्वीकृतः। केवलं केषुचित्स्थलेषु मया वानरशब्दप्रयोगः परित्यक्तः।

कविवाल्मीकीवर्णिता किष्किन्धाया वास्तुविद्या ऐश्वर्यप्राचुर्यशोभायामयोध्यामपि ग्लानिमापादयति .... । तेषु दिनेषु केवलं सभ्यार्यजातेरेव एतादृशी उन्नता वास्तुविद्या, रुचिः सभ्यता च सम्भवा। सभ्यता, संस्कृतिः वास्तुविद्या इत्यादयः सभ्यतायाः मानदण्डः। सर्वं चैतत् एकस्मिन्नेव दिने पूर्णतां न याति। वनवासिनां वनचारिणां नग्नकुत्सिताचाराणां धर्मनीति ज्ञानविहीनवानराणां कृते एतादृशं सुनियन्त्रितं राष्ट्रं उन्नता सभ्यता च कदाचित् सम्भवमजायत।

 

उवाच—'कुतः, सुग्रीवेण अवमानितः। प्रतिज्ञापालने न तस्येदानीमाग्रहः। शरत्काले उपस्थितेऽपि स सीतोद्धारविषये निश्चेष्टः।' तारा स्मयमाना अभाषत—'अत एव त्वं कुपितोऽसि इति मन्ये। सुग्रीवस्तव भ्राता। स्वजनस्योपरि क्रोधोऽनुचितः। रामकार्यसाधनस्य कथा न तेन विस्मृता। तेन नानास्थानेभ्यः असंख्यसैन्यसंग्रहस्यादेशो दत्तः। महा बाहो! मया सहान्तःपुरमागम्यताम्।'

## लक्ष्मणस्यान्तःपुरप्रवेशः

लक्ष्मणः तन्मनोहरमन्तःपुरं प्रविश्याद्राक्षीत्। प्रमदागणपरिवृतः सुग्रीवः स्वर्णसिंहासनोपविष्टः। लक्ष्मणे प्रविष्टे एव सुग्रीवः सिंहासनं विहाय इन्द्रध्वजं इव उत्थितः, कृताञ्जलिः सन् तमभ्यवादयत्। सुग्रीवमवलोक्य लक्ष्मणः सक्रोधमुक्तवान्—'कृतप्रतिश्रुतिर्यः प्रतिज्ञाभङ्ग कुरुते स आत्महत्यायाः स्वजनवधस्य च दोषेणापराधी भवति।

---

वयं तु मन्यामहे वर्तमानसमये यथा विभिन्नदेशवासिजनान् वय आंग्लाः, पारसिकाः, बंगवासिनः, उडियाजातीयाः, तिब्बतीयाः, चीनदेशीयाः, तुर्कीयाः इत्यादिनामभिः अभिजानीमः तथैव पुराकालेऽपि विभिन्नदेशभाषाकृतिवेशाचारविशिष्टान् मनुष्यानेव आर्यकविगणा गन्धर्वकिन्नरयक्षराक्षसवानरनागेत्यादिनामभिः सम्बोधितवन्तः ते च सर्वे मनुवंशीयार्या इव मानवा आसन्।

यः पूर्वकृतोपकारं विस्मृत्य प्रत्युपकारविमुखः भवेत् तस्य कृतघ्नस्य वधं एवोचितः। त्वमनार्यः मिथ्यावादी कृतघ्नश्च। रामेणोक्तम् 'बाली निहतः सन् येन मार्गेण गतः स पन्था अद्यापि नावरुद्धः। त्वया प्रतिज्ञापालनं कर्तव्यम् बालिमार्गेण न गन्तव्यम्। अग्निसाक्षिकं यत्सख्यस्थापनं कृतम् तदतिक्रमणपरो माभूः।'

लक्ष्मणस्य कठोरवचनं निशम्य तारा उक्तवती—'लक्ष्मण! राजानं सुग्रीवं प्रति तवेदृशं कठोर वचनं नोचितम्। अनेन रामस्योपकारः न विस्मृतः नापि स प्रतिज्ञापालने उदासीनः। अनेन पूर्वमेव रावणसैन्यापेक्षया अनेकगुणाधिकसैन्यसंग्रहव्यवस्था कृतास्ते। अद्यैव समग्रसैन्यमिह समवेतं स्यात्।'

धर्मसम्मतं विनयपूर्णं च तारावचनं निशम्य लक्ष्मणः शान्तोऽभूत्। सुग्रीवो लज्जया कण्ठगतं विचित्रमाल्यं छिन्दन् आवेगेनोक्तवान्,—'राजकुमार! रामकृपया राज्यलाभं कृत्वा तस्योपकारं विस्मरेयं किमु? सतु निजशक्त्यैव सीतोद्धारकार्ये समर्थः। अहं तु उपलक्षमात्रम्। सर्वथा तदाज्ञाकारी अहम्। यदि कश्चिदपराधो जातस्तर्हि क्षन्तव्यः।'

लक्ष्मणः प्रीतः सन् गद्गदस्वरेणाब्रवीत्—'सखे! अहं राम दुःखेनविचलितः सन् त्वां प्रति एतादृशं कटुवचनमुक्तवान् तेनाहं

विशेषेण लज्जितोऽस्मि। तव सहायेन सोऽचिरादेव रावणवधं करिष्यति। त्वं विक्रमेऽपि रामेण सदृशोऽसि। देवेच्छया एव वयं त्वां मित्ररूपेण प्राप्तवन्तः।'

## सुग्रीवस्य सैन्यसंग्रहः

पूर्वं सैन्यसंग्रहार्थं चतुर्दिक्षु प्रेरिताः सुदक्षा दूताः किष्किन्धां प्रत्यागताः सुग्रीवाय विविधौषधीः फलमूलानि च उपहारीकृत्योक्तवन्तः —'भवदादेशानुसारं सैन्यसंग्रहकार्यं सम्पन्नम्। ते च सर्वे अद्यैव आगत्य भवच्चरणवन्दनं करिष्यन्ति।' एतन्निशम्य सुग्रीवः प्रीतः-सन् सैन्यं रामसमीपं गन्तुमादिश्य लक्ष्मणेन सह एकामुज्ज्वल-स्वर्णमयशिबिकामारुह्य अस्त्रधारिभिरनेकसैनिकैः सह रामसमीपं प्रयातः।

रामः लक्ष्मणेन सह सुग्रीवमवलोक्य प्रमुदितः। प्रणतसुग्रीव-मुत्थाप्यालिङ्ग्य चाब्रवीत्—'यः समयविभागपूर्वकं धर्मार्थकामचर्या-परः स एव यथार्थराजा। इदानीमस्माकं युद्धोद्योगसमय उपस्थितः त्वया मन्त्रिभिः सह कृतपरामर्शेन तदर्थं उद्यतेन भवितव्यम्।'

सुग्रीवोऽब्रवीत्—'मया त्वत्प्रसादेनैव ममापहृतराज्यमधिगतम्। तवोपकारो न विस्मर्यते। सेनामुख्याः पृथिव्याः सर्ववानरान् भल्लूकान् गोलाङ्गूलांश्च वीरानत्र समवेतानकार्षुः। एते देव गन्धर्वजाताः,

मायाविनः, भीमदर्शनाः वनारण्यविषये विशेषज्ञाः। यूथपतयः स्वस्व-सैन्यपरिवृताः सन्तः तवादेशप्रतीक्षातत्पराः सन्ति।'

इदानीं सशैलकानना मही अकम्पत। सहसाधूलिजालेन आकाश आच्छन्नश्चतुर्दिशश्च तमसावृता अभूवन्। नानास्थानेभ्यः आगता विविधाकृतयः कोटिशः वानरसैनिकाः समग्रकाननपर्वतान् परिवृण्वन्तः विचरितुमारब्धाः। यूथपतीन् संगृहीतासंख्यसैनिकानुपस्थितानवलोक्य सुग्रीवः आनन्दितः सन् रामेण सह तेषां परिचयं कारयित्वा ब्रवीत्—'सेनापतयः! सैन्यसंस्थापनकार्ये समाप्ते यथा-यथबलनिर्धारणपूर्वकं यूयं रामचन्द्रादेशं प्रतीक्षध्वम्।*

---

* सेनापतीनां नामानि सैन्यसंख्या च वाल्मीकिरामायणतः अक्षरशः स्वीकृता। शतबली-दशसहस्राधिका कोटिरेका, तारापिता सुषेणः—अनेकसहस्रकोट्यः, रुमायाः पिता—सहस्रकोटयः, हनूमतः पिता केशरी—अनेकसहस्राणि, गवाक्षः—कोटिसहस्रम्, ऋक्ष-गणाधिपतिः धूम्रः द्विसहस्रकोटयः, पनसः—कोटित्रयम्, नीलः—दशकोटयः, गवयः पञ्चदशकोटयः, मैन्दःकोटिसहस्रम्, गजः कोटित्रयम्, ऋक्षराजः जाम्बवान्-दशकोटयः, रुमणः शतकोटयः, गन्धमादनः—सहस्रकोटयः शतसहस्रं च, अंगदः सहस्रपद्मम् शतशंखं च, तारः पञ्चकोटयः, इन्द्रजानुः-एकादश कोटयः, रम्भः-एकमयुतं,

## सीतान्वेषणस्य मन्त्रणा

सुग्रीवः राममब्रवीत्—'अहं मम गणनातीतं सैन्यं च तवाज्ञाधीनम्। इदानीं किंकर्तव्यमुच्यताम्।)

रामोऽगादीत् 'सखे! सीता इदानीं जीविता न वा तथा रावणः क्वनिवसति इति विषयद्वयवार्तालाभेनैव प्रयोजनम्। अतः परं भाविकर्तव्य निश्चयोविधेयः।'

---

एकसहस्रं एकशतं च, दुर्मुखः—कोटिद्वयम्, हनुमान्—सहस्रकोटयः, नलद्रुमबाणी—शतकोटयः, शतसहस्रं च, दरीमुखः—दशकोटयः यूथपतिशरभकुमुदवह्निरम्भ प्रभृतीनां च बहुसंख्याकं सैन्यम्।

कविवाल्मीकिवर्णनानुसारं सीतोद्धारयुद्धार्थं समत्यधिक द्विशतोत्तर नवसहस्रकोटयः दशसहस्राधिकैकलक्षं च (५२७०० ११०००० ) सहस्रपद्मतः शतपद्मतश्च अधिकं वानरभल्लूकसैन्यं समवेतमासीत्। अपि इयती विशालसंख्या विचारविषयोऽपि भवितुमर्हति! वर्तमानसमग्रविश्वमानवसंख्या प्रायः द्विचत्वारिंशदधिकत्रिशतकोटयः (भारते पञ्चाशत्कोटिमनुष्याः तद्दशमाशाश्च अर्थात्पञ्चकोटिसंख्याका वानराः)। रामायणयुगे भारतस्य जनसंख्या कति आसीदिती

## चतुर्दिक्षु सैन्यप्रेरणम्

रामाज्ञया सुग्रीवः स्वस्य विभिन्नयूथपतीन् सहस्रशः सैनिकांश्च गृहीत्वा सीतासन्धनार्थं पूर्वस्यां यवद्वीपपर्यन्तं पश्चिमस्यां सौराष्ट्र पश्चिमसमुद्रपर्यन्तं उत्तरस्यां कैलासपर्वतोत्तरकुरूनतिक्रम्योत्तर समुद्रपर्यन्तं दक्षिणस्यां च शतयोजन विस्तृतसमुद्रस्यापरपारे रावणवासस्थानपर्यन्तं च सर्वत्र विशेषरूपेण अन्वेषणार्थमादिशत्; एकमासाभ्यन्तरमनुसन्धानकार्यं समाप्य यः प्रत्यावृत्तः सन् सीताप्रवृत्तिमानयेत् स विशेषरूपेण सम्मानितो भवेदित्यघोषयत् ।

---

ज्ञातुं न शक्यते । समग्रमानवजातेः संख्या तु दूरत एव । इयदधिकसंख्याकवानर भल्लूक सेनासमावेशः नूनं अतिमहद्गणनाविशेषः । यद्यपि कविना तेषां कृते वासार्थं काननपर्वतयोः भक्षणार्थं च कन्दमूलानां व्यवस्था कृता, तथापि एतेनैव समस्यासमाधानं न भवेत् । कविना यः सैन्यसंख्याया उल्लेखः तस्याः शतांशे एकांशस्यापि भारते पर्याप्तं स्थानं न स्यात् । युद्धस्यावश्यकतामूलक सैन्यसंग्रहसमयेऽपि कस्यापि देशस्य जनसंख्या याः चतुर्थांशादधिकसैन्यसंग्रहोऽसम्भवः । यतः जनसंख्यायाः चतुर्थांशा बालकवृद्धाः, तथा प्रायः अर्धपरिमिताः स्त्रियः सन्ति । साधारणतया रावणवधार्थं यदि ९१७० कोटिसैन्यं संगृहीतमासीत् तर्हि तस्यार्थं अस्मिन् भूखण्डे संकलने ३७०८०

## हनूमान्दक्षिणस्यां दिशि प्रस्थितः

सुग्रीवः अवाच्यामनुसन्धानाय विशेषप्राधान्य प्रदाय अंगदस्याधक्षे नीलहनूमज्जाम्बवद्गयगवाक्षप्रभृतीन् लक्षशः सैनिकैः सह प्रेषितवान्; हनूमन्तं च विशेषरूपेणोक्तवान्—'हे वीरश्रेष्ठ! जलस्थलान्तरिक्षेषु देवलोके च कुत्रापि तवगति विरोधो न जायेत। न कश्चिदपरस्त्वत्तुल्यःतेजस्वी। त्वं बलवान् देशकालज्ञः नीतिविशारदश्च; अतः येन सीतानुसन्धानं प्राप्येत तमुपायमवलम्बस्व।'

---

कोटिवानराधिवासिनः स्युः। वाल्मीकिमतेन वानरसैन्यसंख्यैव दशसहस्रकोटयः।

विगतविश्वयुद्धे विभिन्नराष्ट्राणां सैन्यसंख्या साधारणतया १५ कोटिपरिमिता आसीत्।

कुरुक्षेत्रमहायुद्धे अष्टादशाक्षौहिणीपरिमिता अर्थात् गजाश्वसमवेता ३५४२९४० संख्याका सेना अभूत्। (एका अक्षौहिणी= ६५६१० अश्वाः, २१८१० गजाः, १०९३५० पदातयश्च) तथैव एतादृशसैन्यस्य विविधनिर्वाहपाथेय सम्भारव्यवस्थार्थं पुनः एतत्संख्यापरिमितानामेव सहायकानां प्रयोजनमासीत्।

लंका वर्तमानसिंहलद्वीपं वा एको लघुतरः प्रदेशः। तत्र वर्तमानजनसंख्या च पञ्चाशल्लक्षपरिमिता षष्ठिलक्षात्मिका वा क्षेत्रफलं

 


सुग्रीववचनमाकर्ण्य रामः हनूमन्तमेव एतत्कार्यसम्पादने योग्यतमं मत्वा हृष्टचित्तः निजनामाङ्कितं अतिमूल्यवदङ्गुलीयकं तस्मै समर्प्योक्तवान्—'हे वीर! इदमभिज्ञानमवलोक्य 'मयैवत्वं प्रेषितः' इति सीता ज्ञास्यति। त्वत्पुरतश्च आत्मानं प्रकटस्य वार्तालापतत्परा जायेत।'

---

च २५४८१ वर्गक्रोशार्धमितम्। तत्स्थानीयेषु अधिवासिषु अपसारितेष्वपि तस्मिन्युद्धक्षेत्रे ९२७० कोटिवानरसैन्यसमावेशार्थं दशसहस्रकोटि राक्षससेनार्थं च स्थानव्यवस्थाऽसम्भवा।

वाल्मीकिः सैन्यसंख्यागणनायां 'कोटि' शब्दं कस्मिन्नर्थे प्रयुक्तवान् इति न ज्ञायते।

एतादृशकविकल्पनाया अयमेव परिणामः यत् विशेषतया श्रद्धाभक्तिविश्वास सत्वेऽपि रामायणवर्णित रामचन्द्र जीवनसम्बन्धि अनेकयथार्थ घटनास्वपि लोकानां विश्वासो न जायते। तज्जीवनस्य अमितं माधुर्यं पवित्रता च बहुधा व्याहन्यते। अतः अस्माभिः एतद्ग्रन्थ संकलने अत्युक्तयः, अलौकिकघटनाः ऐतिहासिकासङ्गतयश्च यथाशक्ति परित्यक्तुं प्रयत्नोविहितः। वाल्मीकेः कविप्रतिभा कल्पनाशक्तिश्च अस्मान्विमुग्धान्करोति; सर्वदेशीयाः सर्वकालिकाश्च यावत्कवयः अस्मा[illegible]निश्चयं तेन पराभूताः। एतद्देशीयजनसाधारणा-

हनूमान् कृताञ्जलिः अङ्गुलीयकं गृहीत्वा भक्तिपूर्वकं रामचन्द्रं प्रणम्य आकाशमार्गेण यात्रार्थं निर्गतः ।

## विफलसैन्यानां प्रत्यावर्तनम्

सुग्रीवस्यादेशेन वानरसैनिका मेदिनीमाच्छाद्य आस्फालनपूर्वकं चतुर्दिक्षु यात्रामकार्षुः । अनेके च गर्जन्तः ऊचुः—'अहमेकाक्येव रावणं हत्वा सीतामानेष्यामि ।'

ये सैनिकाः पूर्वपश्चिमोत्तरदिक्षु अनुसन्धानार्थं गताः ते एकमासानन्तरं निराशया प्रत्यागताः भयेन कम्पमानाश्च ऊचुः—'वयं गिरिकन्दरनदनदीपर्वतेषु अन्वेषणपरा अपि कुत्रापि सीता-सन्धानं नाधिगतवन्तः । सीता दक्षिणदिशायामेव अपहृता, हनूमांश्च तस्यामेवदिशि प्रयातः । ध्रुवं स तस्याः प्रवृत्तिमधिगत्यागामिष्यति ।

---

नामयमेव विश्वासः—यत्किमपि पुस्तके कीलाक्षराङ्कितं भवेत् तदेव सत्यं असंदिग्धं च; विशेषतः ऋषिराचेतवाक्यानां तु किं वक्तव्यम्? पुनः अधिकतराः पाठकपाठिकाः 'इदं सर्वं कविकल्पनामात्र' इत्युक्त्वा मनोरञ्जनपरा भवन्ति—फलतः रामगुणोपरि यदृशो विश्वासः समुचितः तादृशो न जायते । पुनश्च रामायणं महाभारतं चेति ग्रन्थद्वयं सहस्रशो वर्षाण्यभिव्याप्य समग्रहिन्दुजातेः आध्यात्मिक विचारणा एकमात्रं मार्गदर्शकं अत्रत्यराष्ट्रियसामाजिक जीवनोपरि अधिकतरप्रभावोत्पादनकारणमास्ते ।

## तापसी स्वयंप्रभा

अङ्गदस्य नेतृत्वे हनूमदादिवीराः दक्षिणदिशं दिवानिशमक्लान्तभावेन सर्वत्र गुहानदी घनारण्यादिषु अन्विषन्तः दानवानां विश्वकर्मणः मयाभिधस्य कस्यचिन्मायाविदानवस्य राज्ये विचित्रगुहासु सीतान्वेषणपरा विभ्रान्ता बन्दीप्राहं गृहीताश्च। हनूमतः विचक्षणतया 'स्वयं प्रभां' नाम काचित्तापसी तेभ्यः मुक्तिदानमकार्षीत्। एतद्गुहासकाशान्मुक्तिं प्राप्य तापसी दर्शितमार्गेणागत्य सर्वेऽपि क्रमशः तरङ्ग समाकुलं घोरं समुद्रतीरमुपस्थिताः। किन्तु कुत्रापि नाधिगतवन्तः सीताप्रवृत्तिम्। इतः सुग्रीवनिर्धारितः एकमासात्मकः समयोऽतिक्रान्तः इत्यवलोक्य अङ्गदः भीतः सन् सर्वानगादीत्—'वयमकृतकार्याः, अतः नृशंस सुग्रीवहस्तेन अस्माकं मृत्युर्निश्चितः। सुग्रीवोऽतिकठोरप्रकृतिः। पूर्वत एवास्मान्प्रति तस्य वैरभावो विद्यते। इदानीमेतदपराधार्थं ध्रुवमस्माकं प्राणदण्डव्यवस्था भवेत्। सुग्रीवहस्तेन मरणापेक्षया प्रायोपवेशनेन प्राणांस्त्यक्ष्यामः।

तदानीं हनूमानुक्तवान्—'विनीतभावेन सुग्रीवं प्रति गतान्युष्मान्स ध्रुवं क्षाम्येत्। यतः स धार्मिकः त्वयिस्निह्यति च; तव जननीं प्रत्यपि स सादरः।

## अङ्गदस्य खेदोक्तिः

अङ्गदस्तं साभिमानमवाच—'सुग्रीवस्य क्वास्ति धर्मभावः।

ज्येष्ठभ्रातृजाया धर्मतः मातृवत्। परं च यः भ्रातुः जीवन दशायामेव तं छलेन सिंहासनच्युतं विधाय तत्प्रियपत्न्युपभोगं कुर्वीत तस्य जुगुप्सितव्यक्तेः कुतो धर्मज्ञानम्? मम पिता सुग्रीवं गह्वरद्वारे प्रतीक्षार्थं नियुज्य शत्रुदमनार्थं गत आसीत् किन्तु स तस्य वधकामनया गुहाद्वारं दृढं पिधाय पितृप्रत्यावर्तनमार्गं चिरतरं निरुध्य स्वयमेव राज्येऽधिकृतः सन् अस्मन्मातरमपि निगृहीतवान्। एतादृशकृतघ्नपापिनि तस्य कोऽपि आत्मीयः न विश्वस्यात्। अहं तस्य शत्रुपुत्रः मां स कदापि न क्षाम्येत्। प्रायोपवेशेन प्राणत्याग एवऽस्मत्पक्षे श्रेयान्। भवान् किष्किन्धां प्रत्यावर्तताम्। रामलक्ष्मणसुग्रीवान् मातरं रुमां च प्रति अस्मत्प्रणातिर्निवेदनीया। सन्तानवत्सला तारा च सप्रणाममाश्वासनीया।' इत्युक्त्वा अङ्गदः जाम्बवत्प्रभृतीन् वृद्धान् अभिवाद्य क्रन्दमानः तृणान्यास्तीर्य भूमितले सुप्तः। *

---

* पूर्वनिर्दिष्टा वाल्मीकि रामायणे किष्किन्धाकाण्डे ५५ सर्गोक्ता या अंगदोक्तिः तया वालिसुग्रीवशत्रुभावस्य प्रधानकारणं ज्ञायते। सुग्रीवः राज्यलोभेन वालिवधार्थमचेष्टत। बालिनः अनुपस्थितौ च राजसिंहासनेऽधिकारं कृतवान्। किन्तु बलवान् वाली राज्यं प्रत्यावृत्य सुग्रीवं तस्य मन्त्रिगणेन सार्धं राज्याद्बहिष्कृतवान्। सुग्रीवस्य पृथक् मन्त्रिसंगठनेन (हनूमदादिभिः) अयं विद्रोहः सूच्यते। किन्तु बाली कदापि कनिष्ठभ्रातृवधाभिलाषी नासीत्। तथैव ·सुग्रीवः बालिनः स्नेहपात्रमभूत्।' इति तु सुग्रीवः स्वयमेव स्वीकरोति।

 

अंगदस्यावस्थां विलोक्य सैनिका अपि तं परिवृत्य दुःखं प्रकाशयामासुः पूर्वाभिमुखीभूय च सजलस्पर्शं प्रायोपवेशनार्थमुपविष्टाः ।

## सम्पातिसंवादः

पार्श्वस्थ पर्वते जटायुषो ज्येष्ठभ्राता विशालदेहः वृद्धसम्पातिः न्यवसत् । वानरसेना स्फालनशब्देनाकृष्टः स गह्वराद्बहिरागत्य प्रायोपवेशन प्रसीतवानरानवलोक्य अत्यानन्दितः सन्नब्रवीत्— 'विधातुरिच्छयैव दीर्घकालानन्तरं मया पर्याप्तं भोजनमासादितम् । मृतानेतान्सर्वानपि क्रमशोऽहमभ्यवहरिष्यामि ।

---

कनिष्ठभ्रातुर्विद्रोहापराधेन बाली तं राज्यान्निर्वासितवान् किन्तु तेन कनिष्ठभ्रातृजाया स्नेहपात्रम् । तस्याः विनापराधं निर्वासितमनुचितम् । सुग्रीवः रामचन्द्रसहायेन वालिनं हत्वा सिंहासनमधिगतवान । अतः इयं घटना पूर्णतया राजनैतिकी । वाली बलशाली सन् प्रायः अयोध्यावशवर्तित्वविच्छेदं विधाय विद्रोह घोषणां कृतवान्, रावणेन सहापि तस्य मित्रतासीत् । वनवाससमये एतादृशविद्रोह दमनमपि रामचन्द्रस्यान्यतय कार्यमभूत् । रामचन्द्रः वालिनं हत्वा सुग्रीवाय च राज्यप्रदानं विधाय विद्रोहदमनमकार्षीत । रामबालिसंवादे लभ्यते— रामः बालिनमवादीत— 'अयं [illegible] इक्ष्वाकुगणैरधिकृतः ।

सम्पातिवचनमाकर्ण्य भीतोऽङ्गदः हनूमन्तमुवाच—'पश्य पक्षिरूपी यमः अस्मान्भक्षयितुमायातः। रामस्य कार्यमपि न सिद्धम्—सुग्रीवादेशपालनेऽप्यसमर्था वयम्—इदानीमिममचिन्तनीया विपद् पुरतः उपस्थिता। धर्मप्राणः जटायुः सीतारक्षार्थं राक्षसैः सह युद्धे प्राणानत्याक्षीत्। वयं जटायुसदृशं रामकार्यार्थं जीवनपरित्यागं कुर्याम।

---

धर्मात्मा भरतः अस्य शासनकर्ता। अहमन्ये च राजानः धर्मप्रसार-कामनया तस्यादेशात् सर्वत्र विचरामः। अहं सुग्रीवेण सार्धं सख्यस्थापनपूर्वकं प्रतिज्ञां कृतवान् 'तव शत्रुवधं कृत्वा त्वां राज्य-प्रतिष्ठितं विधास्यामि' रामस्तु राजप्रतिनिधिः—तेन राजद्रोहिवालि-वधपूर्वकं निजकर्तव्यस्य क्षात्रधर्मस्य च पालनं कृतम्; सुहृत्सुग्रीवं प्रति दत्तायाः प्रतिश्रुतेः निर्वाहोऽपि विहितः। अनेकेषां मनसि प्रश्नः उद्भवति—'रामः वालिनं सम्मुखयुद्धार्थं कुतो नाहूतवान्'? वाली युद्धार्थमाहूतश्चेत्ससैन्य एव योद्धुमुपस्थितोऽभविष्यत्। ततश्च वालिवधः विराण् महद्युद्धे परिणतोऽभविष्यत्। निरपराधसेनासंहारप्रयोजनमपि स्यात्।

वाली विद्रोही अपराधी च तेनैव स वधार्होऽभूत्। निरपराध-प्रजासंहारार्थं समर्थोऽपि रामः इच्छुको नासीत् एतेन वयं रामचन्द्र-विशालहृदयपरिचयमेव प्राप्नुमः। अन्यश्च वालिवाहिनी सहायत एव रामः अनन्तरं सुग्रीव नेतृत्वे लङ्काजयं कृतवान्। लङ्कायात्रापूर्वमेव

अङ्गदस्य वचनमाकर्ण्य सम्पातिः साग्रहमुक्तवान्—'अस्माकं निष्ठप्रियभ्रातृजटायुर्मृत्युविषये कोऽत्रालपति ? दीर्घकालानन्तरं तस्याभिधानं मया श्रुतम् । 'जनस्थाने केन राक्षसेन सार्धं तस्यायोधनमभूत !' इति सर्वं श्रोतुमभिलषामि । मम पक्षौ सूर्यकिरणदग्धौ गमनशक्तिरहितौ जातौ । यूय मामेतत्पर्वतशिखरादवतारयत । युष्मत्सकाशात्सर्वमपिवृत्तं श्रोतुमभिलषामि ।'

---

बालिवध आसीदावश्यकः ; यतः यदि वाली स्वबाहिन्या सह रावणसहयोगमकरिष्यत् तर्हि रावणवधः सीतोद्धारश्च रामचन्द्रपक्षे कठिनतरोऽभविष्यत् । अतः राजनीते कूटनीते धर्मनीतेश्च दृष्टितः बालिवधः रामचन्द्रस्य महत्तायाः प्रतिभायाश्च परिचायकः ।

रामचन्द्रः सुग्रीवं पुरस्कृत्य वालिवधं विहितवान् । सुग्रीवः वालिनं युद्धार्थमाहूतवान् । तयोश्च सम्मुखयुद्धे समारब्धे रामचन्द्रः वालिनं हतवान् । वाली बलमत्तोऽभूत् ; अतः सुग्रीवेण सह युद्धे स एकाकी एव समागतः स यदि सेनया सार्धमागतः स्यात् तदैव रामद्वारा प्रत्यक्षयुद्धे तस्य मृत्युरप्यभविष्यत् । रामचन्द्रः श्रेष्ठो वीर आसीत् । सम्मुखसमरे रावणस्तस्यांशतोऽपि सदृशो नाभूत् । रामः एतावन्महान् योद्धा आसीत् यत् स द्विरथयुद्धे रावणं परास्यत् । वालिरावणयोर्वधः किष्किन्धासिंहासने सुग्रीवस्य लङ्कायां च विभीषणस्य प्रतिष्ठा इति घटनाद्वय 'दक्षिणभारतस्य विद्रोहिनृपाणां दमन तेषा-

अङ्गदः सम्पातिमवतार्य निजपरिचयमदासीत्; सीताहरणं, जटायुषा सह राक्षसस्य युद्धम्, रामसुग्रीवयोर्मित्रता, बालिवधः सीतान्वेषणार्थं चतुर्दिक्षु सुग्रीवसैन्यप्रेषणम्, स्वकीयकार्यासाफल्यम्, मृत्युदण्डभयाच्च प्रायोपवेशनसंकल्पः इति सर्वं निवेदयामास। इदमखिलं श्रुत्वा सम्पातिरब्रवीत्—'राक्षसेन युद्धे यः पक्षिराजो निहतः स एव मम स्निग्धः कनिष्ठभ्राता जटायुः। अहं वृद्धः पक्षहीनश्च। पुरा वृत्रासुरवधानन्तरं भ्रातरावावां इन्द्रजयार्थं आकाशमार्गेण यात्रामकुर्व। पथि सूर्यतापावसन्नजटायुषमहं निजपक्षाभ्यामाच्छाद्य रक्षाप्रयत्नं कृतवान्। किन्तु मध्याह्नसूर्यतापेन दग्धपक्षोऽहं अस्मिन्नेव विन्ध्यपर्वते पतितः। ततः प्रभृति अत्रैव स्थितोऽहम्। मम पुत्रः नित्यं किमपि भक्षयितु प्रदाय मम प्राणरक्षां करोति। किन्तु जटायुषः कापि वार्ता न श्रुता।'

अङ्गदोऽब्रवीत्—'यदि भवान् निजभ्रातृहन्तुः सीतापहारकस्य च वासस्थानं जानाति, कथ्यताम्। 'सीता तस्यैव राक्षसस्य नगर्यामास्ते' इत्यस्माकं विश्वासः।'

सम्पातिरगादीत्—'अहमिदानीं वृद्ध गतिशक्तिविहीनश्च। किन्तु अनेकघटनाज्ञानवान्—वरुणलोकं जानामि; देवासुराणां समुद्र-

---

मार्थीकरणं च' इति विराट्प्रयोजनद्वयस्यांशभूतम्। तथाकथिता वानराः राक्षसप्रभृतयश्च आर्यजातेरेव विभिन्ना शाखा इति मन्यामहे।

 

मन्थनमपि मयावलोकितम् । गतिशक्तिश्चेन्ममाभविष्यत तर्हि युष्माकं किञ्चित्प्रियकार्यमवश्यमकरिष्यत् । सीताहरणमपि मया दृष्टमिति मन्ये । एकस्मिन्दिने एतत्पर्वतोपरि स्थितेन मयावलोकितम्—रावणः काञ्चित्सुन्दरीं हृत्वा अनयत । सा च नारी हा राम ! हा राम ! इति वदन्ती व्यलपत् । इदानीं तर्कयामि सैव सीता । रावणः तां स्त्रियं एतस्य शतयोजनविस्तीर्णसमुद्रस्य पारं स्वराजधानीं लंकां नीत्वा बदीकृत्य स्थापितवान् । अहं तु योजनशतादपि अधिकतरमन्तरं द्रष्टुं शक्नोमि। अस्मादेव स्थानात् राक्षसीपरिवृतां तामेव बन्दिनीं सीतामवलोकयामि। यूयं समुद्रमुल्लंघ्य लंकां गच्छत । तत्रैव सीताप्रवृत्तिं प्राप्स्यथ। इदानीं यूयं मां समुद्रतीरं प्रापयत । मृतभ्रातुरुद्देश्येन तर्पणस्य महती अभिलाषा वर्तते ।'

सम्पातिवचनेन अङ्गदः तं समुद्रतीरं नीतवान् । तर्पणादि समाप्य प्रत्यावृत्तेन तेन निजपूर्वकथा श्राविता, 'दग्धपक्षः सन् आकाशात्पतितोऽहं दिनद्वयपर्यन्तं अचेतनावस्थायां स्थितः । ततः लब्धसंज्ञः चतुर्दिक्षु कृतदृष्टिपातः पर्वतनदीसमुद्रानवलोक्य मया ज्ञातम् 'दक्षिणसमुद्रतीरस्थपर्वतोपरि पतितोऽहमिति अस्मिन्पर्वते पुराकाले 'निशाकर-ऋषेराश्रमः आसीत् । अहं जटायुश्च उभावपि मनुष्यरूपेण प्रतिदिनं तच्चरणवन्दनार्थं गतवन्तौ । स मां दग्धपक्षमाहतं चावलोक्य प्रथमं ज्ञातुमसमर्थोऽभूत् । ततः ध्यानेन ज्ञातास्मत्परिचयः उक्तवान्—

'देवकार्यसाधनार्थं त्वया मैव स्थातव्यम्। इक्ष्वाकुवंशीयः दशरथतनयो-रामः वनवासार्थमस्मिन्नेव जनस्थाने एष्यति। रावणः तद्भार्यामपहृत्य लंकां नेष्यति। सीतान्वेषणकारि रामदूतेभ्य सीतासन्धानविषये निवेदन-परस्य तव पक्षौ संजायेताम्। अत एव त्वया रामकार्यसाधनाय अत्र प्रतीक्षा कर्तव्या। सीता राक्षसानामन्नं न स्वीकरोति। तामुपवासिनीमवलोक्य इन्द्रस्तस्यै अमृत तुल्यं परमान्न दास्यति। तदेवास्वाद्य सा जीविता भवेत्।' तस्यैव मुनिवरस्यादेशेनाहमत्र अष्टसहस्रवर्षपर्यन्तं स्थितोऽस्मि।' सम्पातौ एतादृशवचनपरे सर्वेऽपि साश्चर्याः जायमानं तस्य नूतनपक्षोद्गममद्राक्षुः। सम्पातिः आनन्दितः सन् अब्रवीत्, 'पश्यत पश्यत। निशाकरऋषेर्वचनं सफलीभूतम्। मया पूर्वरूपं शक्तिश्च पुनरधिगता, यूयं सीतान्वेषणे ध्रुवं सफलीभविष्यथ।' इत्युक्त्वा कतिचित्क्षणानन्तरमेव पक्षिराजः आकाशे उड्डीनः। अङ्गदादयः सर्वेऽपि नूतनोत्साहेन सीतान्वेषणार्थं समुद्रतीरं प्रति अग्रतः प्रचलिताः *

---

* वाल्मीकिवर्णितः 'पक्षिराजसम्पातिसंवादः' सीतान्वेषण-कार्याधिकं दुर्बोधं जटिलं च कृतवान्।

वय मन्यामहे - दक्षिणाशां विहाय अन्यदिक्षु सीतान्वेषणार्थं सेनादलानि न प्रेषितानि। तेन प्रयोजनमपि नासीत यतः रावणः सीतामपहृत्य दक्षिणदिशायामेव गत आसीत्' एतस्य यथेष्टप्रमाणं

 


पूर्वमेव प्राप्तम् । अतः वाहिनी दक्षिणदिशायामेव प्रेषिताभूत् । तथैव 'अणिमालघिमादि शक्तिसम्पन्न' इति विदितेन एकेन हनूमतैव लङ्कायां सीतान्वेषणकार्यसम्भवो जातः ।

सम्पाति संवादात् ज्ञायते— तस्मिन्काले एतादृश जातीयाः प्राणिन आसन् ये त्रिकालज्ञा अभूवन् । युगत्रये स्थूलदेहेन वर्तमानाः कामरूपिणश्च अर्थात् इच्छामात्रेण मनुष्यपक्षिवानरराक्षसादि रूपधारण-समर्थाः, सर्वभाषाविदः, अन्यलोकगामिनः जातिस्मराश्च । एतादृश-प्राणिवंशीया अस्मिन्युगे कथं व्यलुप्यन्त ? इयमप्येका समस्यैव ।

इति दिव्यरामायणे किष्किन्धाकाण्डम् ।

# सुन्दरकाण्डम् *

## समुद्रोल्लंघनस्योद्योगः

सैन्यदलं गृहीत्वा अङ्गदः यदा समुद्रतीरं गन्तुं प्रचलितः—तदा अनन्तं क्रीडाचञ्चलं दिगन्तव्यापिनं उत्तालतरङ्गसमाकुलं अगाधजलराशिं दृष्टवान्—क्वापि कूलमर्यादा नावालोक्यत। कथमेतस्यापरपारं गन्तव्यं स्यात्? अत्यन्तोद्विग्नेन निराशेन च मनसा ते पुनरग्रतः प्रचलिताः—'यदि कुत्रापि कूलदर्शनं भवेत्'। अनन्तरं सर्वे कञ्चित्पर्वतमारुह्य पर्यवेक्षणपराः सन्तः अतिदूरं सागरापरतीरं दृष्टवन्तः। किन्तु एतादृशार्णवस्योल्लंघने कमप्युपायमनवलोकयन्तः सर्वेऽपि विषादाक्रान्तमानसा अभूवन्।

अङ्गदः सकलानाश्वास्य कुशलयूथाधिपतिभिः सह कृतपरामर्शः जगाद 'अप्यस्ति कोऽपि युष्मासु एतादृशवीर्यशाली यः शतयोजनविस्तीर्णमेतं सागरमुल्लंघयितुं समर्थः? कः खलु सुग्रीवादेशपालनपरः सन् अस्मत्प्राणरक्षां कर्तुं शक्नुयात्? यूयं सर्वेऽपि पराक्रमिणः; दीयतामिदानीमात्मशक्तिपरिचयः।'

---

* एतत्कथाप्रसामग्री मुख्यतया वाल्मीकिरामायणादेव स्वीकृता।

अङ्गदवचनं निशम्य यूथपतयः स्वस्वलंघनसामर्थ्यपरिचयं दत्तवन्तः। गयोऽब्रवीत्—'अहं दशयोजनपरिमितमन्तरं लंघयेयम्।' गवाक्षः—विंशति योजनानि, शरभः—त्रिंशत्, ऋषभ—चत्वारिंशत्, गन्धमादनः पञ्चाशत् ऐन्द्रः—षष्टिम्, द्विविदः—सप्ततिम्, सुषेणः—अशीति योजनमितमन्तरं गच्छेयमिति। जाम्बवानब्रवीत्। अहमिदानीं नवतियोजनानि गन्तुं समर्थः यौवने तु एतस्मादप्यधिकमन्तरं गन्तुमलभासम्।' यूथपतीनामुत्प्लवनपरिमाणं निशम्य अङ्गदः सर्वानानन्दयन्नब्रवीत्—'अहं शतयोजनमितमन्तरमतिक्रमितुं समर्थः परं प्रत्यागन्तुं शक्नुयान्नवेति न जाने।

तदानीं जाम्बवान् अङ्गदमब्रवीत्—'जानाम्यहं तव पराक्रमं त्वं तु महावीरवालिनः सुयोग्यात्मज; किन्तु त्वमिदानीमस्माकं स्वामी—आज्ञादाता अतस्त्वया न गन्तव्यं भवेत्। योऽस्मिन्कार्यसाधने समर्थः स्यात् स एव नियोक्तव्यः।' इत्युक्त्वा स पार्श्वस्थं हनूमन्तं संबोध्योक्तवान्—'हे महावीर! किमर्थं त्वं तूष्णीं तिष्ठसि! दर्शय स्वकीयमपि विक्रमम्। जानाम्यहं तव जन्मरहस्यं त्वं पुञ्जिकास्थलाप्सरसः—यस्या अपरं नाम 'अञ्जना'—पवन देवस्य च पुत्रः। देवांशेन तव जनिः; ब्रह्मणः वरणे च त्वं शस्त्रैरवध्यः। जातमात्रेण त्वया नवोदितसूर्यं सुपक्वफलं मत्वा तं गृहीतुमाकाशे उत्प्लुत्य अनेकशतयोजनमन्तरमतिक्रान्तमासीत्। हे पवनपुत्र! त्वां विहाय समुद्रोल्लङ्घनं कृत्वा सीताप्रवृत्तिमानेतुं न कोऽप्यन्यः समर्थः। दर्शय तव पराक्रमं

सर्वेषामस्माकं प्राणरक्षां च कुरुष्व। सुग्रीवस्यादेशपालनेऽसमर्थताम-स्माकं सर्वेषां मृत्युरवश्यं भावी। हे महातेजः! भगवतः विष्णोः पादत्रयक्षेपमिव त्वयापि पदक्षेपेण समुद्रोल्लङ्घनं कार्यम्।

जाम्बवतः वचनमाकर्ण्य हनूमान् स भीषणगर्जनं सर्वान् प्रमुदितान्कुर्वन् समुद्रलङ्घनोपयुक्त विराडाकारं धारयित्वा आस्फालनं कर्तुमारभत। स अङ्गदादिकानभिवाद्यागादीत्—'सर्वेऽपि निश्चिन्ता भवन्तु; अहं सागरमुल्लङ्घ्य सीतासंवादमानेष्यामि। परं नेदमुपयुक्त स्थानम्—अहं महेन्द्रपर्वतमारुह्य तस्य विशालस्थिरशिखरतः समुद्रोल्लङ्घनप्रयत्नशीलो भवेयम्।

## हनूमतः समुद्रोल्लङ्घनम्

सर्वैः सह हनूमान् महेन्द्रपर्वतमारुह्य सूर्येन्द्रादिदेवगणान् भूतगणांश्चाभिवाद्य पूर्वाभिमुखः जन्मदातृपवनदेवस्मरणपूर्वकं प्राणवायु-मवरुध्य स्फीतीभवितुमारभत। विशालभुजद्वयेन पर्वतमभिव्याप्य कटि-चरणकर्णसंकोचपूर्वकं परब्रह्मश्रीरामचन्द्रस्य ध्यानं कृतवान्। ततः सर्वानुद्दिश्य जगाद—'रामपरित्यक्तामोघशरवत् अहमपि द्रुतकार्य-सिद्ध्यर्थं आकाशमार्गेण गच्छामि। अद्यैव लङ्कां गत्वा सीतां द्रक्ष्यामि। यदि तत्र सीतां नावलोकयामि तर्हि समानवेगेनैव सुरलोकं यास्यामि। मनुष्यः प्राणत्यागसमये एकवारमपि यस्य नामग्रहणेन भवसागरमुत्तीर्य तत्सकाशं प्राप्नोति तस्यैव रामस्य दूतोऽहम्।

अपि च तस्याङ्गुलीयकमपि मत्समीपमास्ते तदप्यहं मनसा ध्याये—'अहमेतादृशक्षुद्रसमुद्रोल्लङ्घनं कुर्यामि'त्यत्र किमाश्चर्यम्?' इत्युक्त्वा पवनात्मजः दक्षिणाभिमुखीभूय त्वरितमाकाशमार्गेणोत्थितोऽभूत्। तदानीं स प्रसारितहस्तद्वयः, सरलग्रीवः, आकुञ्चितचरणद्वयः ऊर्ध्वदृष्टिश्च जातः। हनूमन्तं वायुमहावेगेन आकाशमार्गेण समुद्रोपरिगच्छन्तं वीक्ष्य देवाः प्रसन्नाः सन्तः पुष्पवृष्टिं चक्रिरे। सूर्यः सन्तापदानविरतो जातः, पवनदेवश्च व्यजनचालनपरोऽभूत्। इत्थं हनूमानाकाशमार्गेण पुरतश्चलितः। मार्गे समुद्रगर्भस्थितमैनाकपर्वतः हनूमन्तं परिश्रान्तं मन्यमानः उक्तवान्—'अस्मदाश्रयेण त्वया कश्चिद्विश्रामः कर्तव्यः' हनूमानपि मैनाकस्यातिथ्यदानेन सन्तुष्टः प्रत्युवाच—'तव वचनेनैव मयातिथ्यमनुभूतम्, मा दुःखितो भूः। रामकार्ये विलम्बो नोचितः। दिनमपि प्रयातप्रायम्। 'यावत्कार्यं न समाप्यते तावत्कुत्रापि विश्रामो न विधेयः' अयं मे संकल्पः।' इत्युक्त्वा सस्मितः हनूमान् मैनाकपर्वतं हस्तेन सादरं संस्पृश्य आकाशमार्गेण गन्तुं प्रवृत्तः।

देवाः हनूमतः बलविक्रमपरीक्षार्थं नागमातरं सरसां प्रेषितवन्तः। सरसा धृतभीषणमूर्तिः हनूमतः अग्रगतिमवरुध्योक्तवती—'हे वीर! विधात्रा त्वं मम भक्ष्यरूपेण निर्दिष्टोऽसि। प्रविश मम मुखाभ्यन्तरम्'। तन्निशम्य हनूमान् स्वशरीरं उच्छूनं कृतवान्। सरसा नागिन्यपि स्वकीयमुखस्यादानपरा बभूव। अकस्मात् हनूमान्

अङ्गुष्ठमात्रो भूत्वा नागिनीमुखं प्रविश्य तत्क्षणमेव बहिरागतः । पुनः आकाशे उड्डीय धृतनिजरूपोऽगादीत्—'देवि! नमस्ते! मया तव वचनपालनं विहितम् । गच्छाम्यधुना सीतासमीपम् ।' सरसा हनूमतः अलौकिकशक्तिमवलोक्य सन्तुष्टा सती स्वीकृतनिजरूपा जगाद—'सौम्य! विजयिनी भवतु तव यात्रा! शीघ्रमेव सीता दुःखमोचनपूर्वकं सा रामचन्द्रेण संगमनीया ।'

मार्गे सिंहिकाभिधा काचिद्राक्षसी हनूमन्तमाकाशमार्गेण प्रयान्तमवलोक्य तन्मार्गमवरुध्य आकाशात्पातालपर्यन्तं प्रसरणशील मुखं व्यादाय तं भक्षयितुमाचकर्ष । हनूमानपि विपदं ज्ञात्वा वर्षाकालीनजलधर इव स्फीतो जातः; सिंहिकापि स्वमुखव्यादानं विस्तृततरं कर्तुमारब्धा । तदानीं हनूमान् अकस्मात्क्षुद्रवपुर्भूत्वा राक्षसीशरीरं प्राविशत् । तन्मर्मस्थानविदारणपूर्वकं च तां हत्वा पुरतः प्रस्थितः ।*

---

* अभिनन्दरचितरामचरितेऽन्यरामायणे च समुद्रलङ्घनसमये समुद्रपृष्ठे हनूमता सार्धं याः सङ्घर्षघटना समभूवन् तासां विवरणं सर्वथा अन्यरूपं दृश्यते । तेन मनसि जायते—हनूमान् धृतयोजनशतविशालशरीरः विस्तीर्णसागरपादविक्षेपैरेवावतीर्णः । शतयोजनविस्तीर्णं शरीरं चेत्पदद्वयमपि त्रिंशद्योजनदीर्घं चत्वारिंशद्दैर्घ्यप्रमाणं वा भवितुं शक्यम् । तेन चरणाभ्यां सागरतरणं नासम्भवम् । विशेषतः अस्मिन्नंशे सागरस्य गभीरताऽतीव लघीयसी स्यात् ।

 

## लंकापुरी

क्रमशः हनूमान् महतावेगेन समुद्रमतिक्रम्य वनराजिसमन्वित भूखण्डमवलोक्य 'लङ्कामागतोऽहमिति बुबुधे। तस्य विशालदेहमवलोक्य

---

सागरातिक्रमसमये प्रथमत एव सरसा हनूमन्मार्गमवरोध (वाल्मीकिरामयणे 'सरसा'नाम्नः उल्लेखः दृश्यते) सरमाहस्ते कोशमुक्तः खड्ग आसीत्। यद्यपि दर्शने सरमा हनूमतः समकक्षा नासीत्,—जानुमात्रप्रमाणोन्नता, तथापि सरमा खड्गं भ्रामयन्ती हनूमन्तमुक्तवती—'अपि खड्गमवलोकयसि? अनेनैव खड्गेन त्वां द्विखण्डितं विधास्यामि। कोऽसित्वम्? चोर इव अनेन पथा गच्छसि! अयं तु निषिद्धः सुरक्षितश्च पन्थाः (Prohibited road) नास्ते सर्वेषां कृते। यः कोऽपि गन्तुं नानुज्ञायते। अहमेतत्पथरक्षाकर्त्री।' इत्थं सरमा स्वकीयबलवीर्यं सास्फालनं वर्णयितुमारभत। तदानीं हनूमान् क्षुद्रामाकृतिं धारयित्वा सरमायाः प्रशंसां स्तुतिं चाकार्षीत्। तेन प्रसन्ना सा हनूमन्तं गन्तुमन्वजानात्।

पुनः कस्मिन्नपि रामायणे दृश्यते—हनूमान् निजशरीरं एतावद्विस्तृतं कृतवान्, यत् सरमा तस्य जानुनोः अधः स्थिता स्यात्। अस्यामवस्थायां हनूमान्सरमामतिक्रम्य प्रयातः। सागरगर्भे मैनाकपर्वते तेन किञ्चिद्विश्रामः कृतः। तस्याप्युल्लेखः वाल्मीकिरामायणे विद्यते।

 

राक्षसगणास्तस्यागमनविषयेऽभिजानीयुरितिभयेन तेन स्वाभाविकः आकारः स्वीकृतः; शनैः शनैश्च नारिकेलवृक्षशोभितं पर्वतमेकमारुह्य त्रिकूटपर्वतोपरिस्थितां जलपूर्णपरिखया उच्चप्राकारेण च वेष्टितां देवपुरीतुल्यां रम्यामैश्वर्यमयीं रावणस्य राजपुरीमवालोकयत्। लंकां परितस्तरङ्गायितोऽगाधः समुद्रः नगरीरक्षार्थं अभितः सैन्यावासश्च

---

सरमा राक्षसी अनुचरैः सह मार्गरक्षापराऽभूत्। तानवरुध्य हनूमान् युद्धे सर्वान्परास्य च अग्रतश्चलितः। हनुमन्तं एतत्पथातिक्रमप्रसक्तमवलोक्य सिंहिका राक्षसीतमवध्नात्। हनूमांश्च पीनतमशरीरो भूत्वा तस्माद्बन्धनादात्मानममोचयत्। विभिन्नरामायणेषु अपरा अप्येतादृश्यो घटना वर्ण्यन्ते येनानुमीयते—हनूमान् सागरस्य अगभीरांशे कश्चिद्विशेषमार्गमनुसृत्य लङ्का प्राप्तवान्

वाल्मीकि रामायणानुसारं हनूमान महेन्द्रपर्वतोपरिष्टात् एतादृशमुत्प्लवनमकार्षीत येन एकयैव प्लुत्या सागरमुल्लंध्य त्रिकूटपर्वत प्रत्यन्ते लङ्कायामापतितः। अध्यात्मरामायणादिषु दृश्यते—हनूमान् सिद्धयोगी आसीत्। स प्राणवायोरवरोधपूर्वकं योगीव आकाशमार्गेण प्रयातः। पुनः कतिचिद्रामायणमतेन हनूमान धृतविराट्शरीरः विष्णुरिव 'त्रिपादविक्षेपेण' सागरमतिक्रम्य प्रयातः। हनूमान् स्वशरीरं शतयोजनविस्तृतं कर्तुं क्षम आसीत्। स योगप्रभावेण विशालाकृति धारणेऽपि समर्थः।

स्थापितोऽभूत्। लङ्कानगर्याश्चतुर्दिक्षु चत्वारि उच्चतराणि तोरणानि, प्रत्येकतोरणद्वारे च शस्त्रास्त्रसज्जिताः प्राहरिका आसन्। अस्याः सुरक्षितमहानगर्या उत्तरस्यां दिशि आगत्य हनूमान निराशमनसा चिन्तयामास—'इमं दुस्तरं सागरमुल्लंघ्य अत्रागमनं सुग्रीवसैन्यायं

---

सिंहले किंवदन्ती आस्ते—रावणः 'तालाइमाना' स्थानात् धनुष्कोटिपर्यन्तं त्रिंशद्द्वात्रिंशत्क्रोशार्धसागरमुत्ततुं समुद्रगर्भे एतादृशमेकं गुप्तपथं निर्मितवान् यः समुद्रवेलासमये नादृश्यत। यत् स्थानत्रयं गभीरताहेतोः पथनिर्माणयोग्यं नासीत् तादृशावतरणत्रये प्राहरिकव्यवस्थां व्यधात्। एतानि च स्थानानि नौकाभिः उत्तार्याणि आसन्। (एष्वेव त्रिषु अवतरणस्थानेषु प्राहरिकाः सरमा, सुरसा, सिंहिका च हनूमन्तमवारुधन्) सागरमध्यस्थेऽस्मिन्मार्गे विपरीतवेलासमये एव यातायातसम्भवोऽभूत्। अनेन गुप्तपथेनैव लङ्कावासिनः लङ्काभारतयोर्मध्ये गमनागमनमकुर्वन्। अस्मन्मते हनूमानपि प्रायः अनेनैव पथा लङ्कामगमत्। रामचन्द्रसैन्यसंघटनस्य लङ्काक्रमणस्य च प्रवृत्तिं प्राप्य रावणेनायं मार्गोऽपि विनाशितः आसीत्। किन्तु रामचन्द्रः पश्चाद्वेलासमये एतद्गुप्तमार्गप्रवृत्तिमुपलभ्य तं मार्गं नलसहायेन जीर्णोद्धारद्वारा प्रशस्तं कारयित्वा समुद्रमुदतरत्। सिंहलस्येयं किंवदन्ती यथार्थाऽयथार्था वा अयं तु गवेषणाविषयः। अपरापि जनश्रुतिरास्ते—स्वर्गारोहणसोपानमपि—(हिमालयोपरिगन्तुं)—निर्मातुं

मसम्भवं प्रतिभाति । अपरं च एनां दुर्गमां सुरक्षितां च लंकां जेतुं देवानामप्यसाध्यम् । रामः अत्रागत्यापि किं विधातुं शक्नुयात् ? लंकापुर्या दुर्गमतां, नगरस्य सुव्यवस्थां, दुर्धर्षं सैन्यबलं उन्नतां वैज्ञानिकीं अस्त्रसज्जतां च लक्ष्यीकृत्य हताशः हनूमान् * अचिन्तयत्—'यद्भव्यं तद्भवतु ।' सीतान्वेषणं तु प्रथमं कर्तव्यमेव; तत्पश्चादनन्तरकार्यस्य विचारो भवेत् ।

## लङ्कापुर्यां प्रवेशः

'सन्ध्या समयोजात' इत्यवेक्ष्य हनूमान् निजशरीरसंकोचं विधाय मार्जारप्रमाणो भूत्वा अन्यैरदृष्टः लंकां प्राविशत् । स

---

तेनचिन्तितमासीत्—येन स्वर्गलोकं गत्वायुद्धं सुकरं भवेत्; किन्तु तस्याकास्मिकमृत्युना तस्येयमभिलाषापूर्णतां न गता तेषु दिवसेषु हिमालय एव 'स्वर्ग' आसीत्, हिमाचलवासिनश्च देवाः । सागरे मार्गनिर्माणं विधाय पारगमनार्थं विभीषणेन रामचन्द्रस्य कीदृशं सहायं कृतम् इत्यस्माभिरग्रतो दृश्येत ।

* किन्तु जैन रामायणवर्णनं सर्वथा विपरीतम् । तत्र दृश्यते-- हनूमान् मधुमक्षिकारूपं धृत्वा समुद्रमुत्तीर्य लङ्कां प्राविशत् । पातञ्जल योगसूत्रमतेऽपि अणिमा लघिमाशक्तिसम्पन्न योगिनः अणुं बृहतीं धारयितुं समर्थाः ।

साश्चर्यमवालोकयत — यत्र लङ्काद्वाराणि स्वर्णमयानि सोपानानि वैडूर्यरचितानि उज्ज्वलदीपालोकोद्भासितानि ऐश्वर्यमण्डितानि च समुद्रस्य स्निग्धः प्रवाहः, उन्नताः उज्ज्वल पताकाः, विचरन्तः मयूरा राजहंसाश्च, तूर्यध्वनेः श्रवणम्, कुत्रापि मधुरसङ्गीतम्, क्वापि सिंहनादः अन्यत्र वेदपाठः, वर्मधारिणः वीराः धृतविविधास्त्रा इतस्ततो भ्रमणशीलाः, चतुर्दिक्षु अश्वानां हेषाध्वनिः, रथानां घर्घरशब्दः, चतुर्दन्तश्वेत हस्तिनः, मृगपक्षिणां कलकलश्रवणम्। हनूमानन्यै-रलक्षितः लङ्कायां सर्वत्र भ्रममाणः सीतान्वेषणपरो बभूव। तेन प्रशस्तकुसुमाकीर्णराजपथे गच्छता कुत्रचिन्मधुरसङ्गीतम्, अन्यत्रवेदपाठः प्रतिमन्दिरं देवतापूजया सार्धं भेरीमृदङ्गः शंखध्वनिश्च श्रुतः। राजपथः अस्त्रधारिदुर्दम प्राहरिकैः सुरक्षितः आसीत्। अनेकानि सुविन्यस्त उद्यानानि चातिक्रम्य हनूमान् क्रमशः प्रहस्त महापार्श्वकुम्भकर्ण विभीषणानां विरूपाक्ष विद्युन्मालि शुक - सारण - इन्द्रजित् - धूम्राक्ष प्रभृतीनां विशिष्टसचिवानां प्रासादानवालोकयत *। इत्थमन्यैरलक्षितः स सीतानुसन्धानपरो पुरतश्चलितः।

---

* वाल्मीकेर्वर्णनं मानसं सविस्मयं करोति। हनूमान् अतिक्षुद्राकारेणात्मानं संगोप्यान्यैरलक्षितः रात्रौ भीतः सीतान्वेषणार्थं समागत आसीत्, परं प्रासादानामभिज्ञानं तस्मै केन दत्तम्! अपि तेन सहासीत्कोऽपि मार्गदर्शकः? अथवा एतेषां विशिष्ट

## सीतासन्धानम्

स लतागृहेषु, चित्रशालासु निशागृहप्रभृतिस्थानेषु च कुत्रापि सीतामलभमानः अचिन्तयत्—ध्रुवं धर्मशीला, पतिपरायणा सीता न जीविता! रावणस्तस्याः प्राणानपाहरत्। अथवा तयैव भयेन प्राणत्यागो विहितः! वृथा मम पौरुषं परिश्रमश्च। प्रत्यावर्त्य रामचन्द्रं प्रति किं वक्तव्यं मया? सुग्रीवाङ्गदयोर्वा पुरतः कथं

---

राजपुत्राणां प्रासादपुरतः नामचिह्नितफलका आसन् तेऽपि च संस्कृतभाषायां अथवा हनुमतःपरिचितायामन्यस्यां कस्यामपि भाषायाम्—अन्यथा पुरःस्थितप्रासादान् विशेषतो रात्रिसमये स कथं ज्ञातवान्?

गोस्वामितुलसीदासकृतरामायणे लभ्यते रात्रौ द्विजरूपधारिणा हनूमता सार्धं विभीषणस्य प्रत्यक्षमनेकविषयको वार्तालापोऽभूत्। हनूमता आत्मपरिचयदानपूर्वकं 'रामकार्यार्थं लङ्कामागतोऽहमिति-निवेदितमात्रे रामभक्तो विभीषणः तस्य पुरतः निजदुःखवृत्तान्तं वर्णयित्वा पुलकितमानसोऽब्रवीत्—(अनुवादः)

"श्रूयतां वायुपुत्र! कथमहं जीवामि—दन्तानां मध्ये रसनाऽस्ति यथा'। विभीषणः स्वकीयां दुरवस्थां विज्ञाप्य रामचन्द्रस्यानुग्रहाभ्यर्थनां कृतवान्। ततःतेन सविस्तरं सीताहरणं अशोकवने च सीतारक्षणादिके वर्णिते सीतादर्शनाभिलाषुकस्य हनूमतः कृतेऽनुकूलव्यवस्थापि कारिता।

मुखं दर्शयिष्यामि ? प्रायोपवेशेन मृत्युरेव मम श्रेयान्। अथवा उद्यमेनैव कार्यसिद्धिर्भवेत्। अतः यावत्प्राणाः सन्ति तावदाशा न परित्याज्या। यानि स्थानानि नाद्यापि मयावलोकितानि तत्र विशेषतोऽन्वेषणमारभे' इति चिन्तयित्वा सोऽन्तः पुरं प्रविष्टः, रावणस्य प्रासदं गतः, निद्रितरावणं चाद्राक्षीत्। पृथक् शय्यायां सुसज्जितामेकां सुन्दररमणीं निद्रितामवलोक्य भावयामास—'इयं सीता इति मन्ये। ततस्तेन चिन्तितम्—'रामस्य विरहेण सीता ईदृक्कृतवेशभूषा विलासिनीव स्वपितुं न शक्नोति—ध्रुवमेषा काप्यन्या।' ततश्च अनेकगृहोद्यानानि अतिक्रम्य तेन चैत्यशोभिता काचिद्वाटिकावलोकिता। तत्र प्रत्येकवृक्षस्याधस्तले सीतान्वेषणपरः अग्रेसरः सन् दूरतः अवालोकयत् घनपत्राच्छादितं महान्तमेकं शिंशपावृक्षम्।

---

अपि हनूमद्विभीषणयोर्मिलने विद्यते किमपि राजनैतिकं प्रयोजनम्? रामेण सागरपारे निजसेनानिवेशे कृते विभीषणः तेन सह मिलितः। चतुर्भिर्मन्त्रिभिः सह कृतरामचन्द्राश्रयः स रामेण लङ्कासिंहासनेऽभिषिक्तः; इत्थमुभयोर्मित्रता च स्थापिताऽभूत्। सीतोद्धारार्थं एतादृशमित्रताया विशेष प्रयोजनमासीत्। श्रीकृष्णः पाण्डवसहायको नाभविष्यच्चेत्कुरुक्षेत्रयुद्धस्य का परिणतिरभविष्यदिति न सम्यग्वक्तुं शक्यते। विभीषणस्य सहायं विना रावणवधः सीतोद्धारश्च कठिनतरः स्यात्।

'सोनाली' वंशीयानामनेकपक्षिणां मधुरगानेन तत्स्थानं मुखरितमासीत्। हनूमान् तं वृक्षमारुह्य पत्राभ्यन्तरतः परितोऽवलोकयामास।

सहसा हनूमतः दृष्टिः चेटीपरिवृतायाः कस्या अपि रमण्या उपरि पतिता। तस्याः शरीरमनाहारेण कृशम्, रूपं धूमाच्छादित-वह्निरिव, परिधान वस्त्रं च मलिनमासीत्। सा भूमौ पतिता कातर-भावेन 'हा राम! हा राम!' इति जल्पन्ती शोकेन मत्तेव दीर्घ-निःश्वासपरा आसीत्।

हनूमाननुमितवान्— इयमेव सीतेति। अस्या एवान्वेषणार्थं सागरमुत्तीर्य लंकामागतोऽस्मि। एतदर्थमेव रामः उत्कण्ठित आस्ते।

हनूमतावलोकितम्— घोरदर्शनाः अन्नधारिण्यश्चेटय सीताकृते प्राहरिककार्यतत्परा आसन्। ताः भ्रूकुटिभङ्गेन सीतामुत्पीडयामासुः। सीतापि मस्तकदत्तहस्ता शोकाकुला सती अरोदीत्।

## रावणभयेन भीता सीता

उषःकाले वेदध्वनिः मङ्गलवाद्यानां मधुरशब्दश्चाश्रूयत। रावणः स्वप्नोत्थित इव जागृतः सीतामवलोकयितुमशोककाननदिशा प्रयातः। स्वर्णप्रदीपान्, हेमभृङ्गारं हाटकासनं सुरापानपात्रं राजछत्रं च गृहीत्वा अनेक सुन्दर्योऽपि तेन सहैव प्रचलिताः। मद्यपानविह्वलं, आरक्तनयनं, मदगर्वितं, तेजोदृप्तं रावणं दूरादेवावलोक्य हनूमानात्मगोपनार्थं वृक्ष-स्योच्चशाखामारूढः प्रतीक्षा परोऽभूत्।

रावणमवलोक्य सीता वाताहत लतेव कम्पितुमारब्धा। रावणस्तत्समीपमुपगम्योक्तवान्—'भद्रे! मां वीक्ष्य किमर्थं त्वं संकुचितहृदया तिष्ठसि? त्वं तु सर्वाङ्गसुन्दरी सर्वलोकमनोहरा; त्वामहं कामये। शयनस्वपनजागरणेषु त्वमेव मम ध्यानवस्तु; अस्मत्सम्मानरक्षापरा भवेः—मनोवासनां पूरय। यद्यपि परस्त्रीगमनं राज्ञां धर्मः तथापि तवानिच्छया त्वां स्प्रष्टुं नाभिलषामि।

'तव रूपेण मुग्धः सन् त्वामपहृतवान्। परं न तवोपरि बलप्रयोगं कर्तुमिच्छामि। त्वत्प्रसन्नतामपेक्षे। रामचन्द्रः कृतघ्नः एकवारमपि त्वां न स्मरति। अद्यावध्यपि न स त्वां द्रष्टुमायातः। तवोपरि यदि तस्य श्रद्धा न विद्यते तर्हि त्वं किमर्थमसि दुःखकातरा! अहं तु त्वयि एकान्तमासक्तः—मामङ्गीकुरुष्व। मा भैषीः मयि विश्वस्ता भवेः। अस्मद्दूरीकरणेन सर्वविधसुखमैश्वर्यं चोपभोक्ष्यसे। राघवः कदाप्यत्र नागन्ता। वृथैव तव तत्प्रतीक्षा!

'हे शुभदर्शने! तवैतादृश सौन्दर्यमवलोक्य मन्ये विधाता त्वां निर्मायैव स्त्रीसृष्टिकार्यान्निवृत्तः—अत एव तव रूपमतुलनीयम्। वैदेहि! त्वादृशीं रूपयौवनसम्पन्नां प्राप्य कः खलु धैर्यच्युतो न भवेत्? स्वयं पितामहो ब्रह्मापि नैतादृशः।'

सीता आत्मानं रावणं चान्तरा तृणमेकं निधाय अधोमुखी सक्षोभमुक्तवती—'जाने तव पराक्रमम्। राघवभयादेव त्वं प्रच्छन-

वेशेन मामपहृतवान् । यथा सामान्य कुक्कुरी अज्ञाता सती यज्ञीय हविरपहृत्य भक्षयति। रे नीच ! त्वमपि तथैव रामलक्ष्मणयोः अनुपस्थितौ मामपाहरः । शीघ्रमेवास्य फलमुपभोक्ष्यसि । रामशराघातेन तव मृत्युर्निश्चितः । अद्यापि स्वपापवासना परित्यागपरो भवेः।'

ततः रावणं पृष्ठतः कृत्वा सीता जगाद 'त्वं दुर्वृत्तः पापाधमः। अहं परस्त्री, यथा निजस्त्री रक्षणीया तथा परस्त्री अपि रक्षणीया इति त्वया ज्ञातव्यम् । यः निजस्त्रियाऽसन्तुष्टः स समाजे निन्दनीयः। धर्मवर्जिता खलु ते बुद्धिः । लंकायां कोऽपि सत्पुरुषः नास्तीति मन्ये ; अस्ति चेन्न त्वं तदनुवर्ती । तवैवापराधेन एषा धनरत्न शालिनी लंका सपुत्रकलत्रं नाशमेष्यति । तक्षक इव कृतेन्द्रवस्त्राञ्चला श्रयोऽपि त्वं क्रुद्धरामचन्द्रशरजालान्न विमोक्ष्यसे। तव मृत्युः समीपतरः । अत एव त्वं मुमूर्षुरिव इत्थमपभाषसे । शीघ्रमेव रामचन्द्रस्य ज्यानिर्घोषः त्वां सचेतनमिव विधास्यति ।'

रावणः दृढस्वरेणागादीत्—'यथा यथा त्वां प्रति चाटुवचनपरोऽहं तथा तथा त्वमस्मत्तिरस्कारं कुरुषे । मैथिलि! मयाऽनेकानि कटुवचांसि सोढानि तथापि त्वं केवलं अस्मदुपेक्षा परैव। त्वयाद्यावधि मामुद्दिश्य यानि कठोरवाक्यानि प्रयुक्तानि तदर्थं तव वध एवोचितः।' इत्युक्त्वा क्रुद्धः रावणः सीतावधार्थमुद्यतखड्गोजातः । तेनैव सह रावणस्य प्रधानमहिषी मन्दोदरी तमवोचत्—'नारीहत्या

  

महत्पापम्—अहं तु त्वामेतादृशपापलिप्तं न कारयामि।' मन्दोदरी कातरतया रावणः सीतावधान्निवृत्तः। महाक्रोधेन दीर्घनिश्वासपरोऽभूत्। तस्यान्यान्यस्त्रियोऽपि विषण्णाः सत्यः चक्षुर्भ्यां मुखभङ्गीङ्गितैश्च सीतामाश्वासयामासुः। किन्तु सीता साभिमानमुवाच—'पापिष्ठ! यस्मिन्नेव दिने त्वयाहमपहृता तस्मिन्नेव दिने मम मृत्युर्जातः। लङ्कायामेतादृशः कोऽपि साधुर्नास्ति यस्त्वामेतादृशपापकर्मणः अवरोत्स्यति? धिक् त्वां शतशो धिक्!' अस्मिन्नेव समये धान्यमालिनी नाम काचित् सुन्दररमणी रावणमालिङ्ग्योक्तवती—'महाराज मया सार्धमायाहि। एतादृशीं विवर्णां दीनां कृशोदरीं गृहीत्वा किं विधास्यसि? या त्वां नाभिलषति तां कामयमानस्त्वं मम गात्रदाहस्य कारणम्।' इत्युक्त्वा धान्यमालिनी गृहीतरावणहस्ता तमाकर्षन्ती निर्गता।

## सीताहनूमत्संवादः

प्रच्छन्नो हनूमान् सीतामद्राक्षीत्, रावणमपि दृष्टवान्, तयोर्वार्तालापं चाश्रौषीत्। 'इयमेव रामप्रियजीविता सीता' इत्यस्मिन्विषये निःसन्दिग्धः सञ्जातः। किन्तु कथं शोकाकुलसीतां साक्षात्कृत्य तया सार्धं द्वित्राणि वचनानि ब्रूयाम्; इत्येव सोऽधुना चिन्तयामास। अनाश्वस्ता सीता जीवितं परित्यक्ष्यति। एतदर्थमेव प्रभातात्पूर्वमेव तया सह साक्षात्कारः आवश्यकः। चेटीवृन्दं किञ्चिद-

सतर्कमनलोक्यैव तां दृष्ट्वा कुशलवार्तां श्रावयिष्यामि। देवभाषायामेव तया सह वार्तालापपरो भवेयम्। परमयं रावणस्य चरः इति मत्वा सा मयि ससंदेहा भवेत्किमु? प्रथमं तन्मनसि विश्वास उत्पादनीयः। एषा रामचिन्तनपरैव तिष्ठति। ततः रामगुणकीर्तनेनैव सा विश्वस्ता भवेत्।' इत्थं मनसि विचार्य हनूमान् शनैः शनैः वृक्षस्योपरिष्टात् अन्यैरलक्षितः अवतीर्य अधः शाखामाश्रित्य सीतां श्रावयन् वक्तुमारेभे। इक्ष्वाकुवंशीयदशरथनृपतेः कीर्तिमान् ज्येष्ठ पुत्रः रामः। स किल पितृसत्यपालनार्थं स्त्रिया सीतया अनुजेन लक्ष्मणेन च सह चतुर्दशवत्सरपर्यन्तं वनवासार्थमागत आसीत्। स निजस्त्री रक्षार्थं जनस्थानेऽनेक राक्षसानवधीत्। तेन क्रुद्धः राक्षसराजः रावणः हीनोपायावलम्बनः सीतामपनीतवान्। सीतान्वेषणसमये किष्किन्धाराजेन सुग्रीवेण सह रामस्य मित्रत्वं सञ्जातम्। अहं तु सुग्रीवस्य सचिवः रामस्य च भक्तः। ताभ्यामहं सीतान्वेषणार्थं लंकां प्रेषितः। अभिज्ञानस्वरूपं स्वकीयमङ्गुलीयकं च रामचन्द्रेण मम हस्ते समर्पितम्। अहं तदेवाभिज्ञानं दर्शयित्वा सीतायै निजपरिचयं च दत्वा रामलक्ष्मणयोः कुशलप्रवृत्तिं श्रावयितुमिच्छामि। येन सीता मां मायाविराक्षसस्य चरं न मन्येत। इत्येव तेनेदमङ्गुलीयकं मम हस्ते समर्पितम्।'

हनूमतः वचो निशम्य सीता स्वाश्रुजलसंमार्जनपूर्वकं गद्गदस्वरमुक्तवती—'अपि मया स्वप्नो दृश्यते? ... सा रामस्य नाम

श्रावयति ? तस्य गुणगानं च करोति ? स्वप्नोऽप्ययं अतिसुखदः स्वप्नः ।' इति वदन्ती सा उपरि अधः चतुर्दिक्षु च दृष्टिपातं कर्तुमारब्धा ; अद्राक्षीच्च 'वृक्षोपरि कोऽपि प्रच्छन्नरूपेणोपविष्ट' इति। चेटीसमूहं निद्रितमवलोक्य हनूमान्वृक्षादवतीर्य सीतासम्मुखमुपस्थितः, अञ्जलिबद्धौ हस्तौ शिरसि कृत्वोक्तवान्—'अपि भवत्येव सीता! यां रावणः पञ्चवटीतः हृत्वा आनीतवान् ? यदि भवती एव सीता तर्हि निःसंकोचं आत्मपरिचयो दीयताम् । अहं रामस्य दूतः तन्नामाङ्कितमङ्गुलीयकं गृहीत्वाऽऽगतोऽहं सीतासन्धानार्थम् ।'

एतन्निशम्य सीता विशेषरूपेणात्मपरिचयमुक्तवती—'दुरात्मा रावणः अपहृत्य मामत्र बन्दीरूपेण स्थापितवान । तेन मह्यं मासद्वयस्यावाधिर्दत्तः । ततः मम मृत्युर्जायेत ।' हनूमान तदानीं सीताया अधिकतरं समीपं गत्वा जगाद—'देवि ! अहं रामस्य कुशलवार्तया सह भवदन्वेषणार्थमागतोऽस्मि भवत्या मयि विश्वासः कार्यः । कुशलो रामः तवापि कुशलं स पृच्छति । लक्ष्मणोऽपि नतमस्तकः तुभ्यं प्रणाममर्पयति ।'

रामलक्ष्मणयोः कुशलवार्तां निशम्य सीता आनन्देनात्मानं विस्मृत्य साश्रुनयनाऽजनि । उच्छ्वसितभावेन चोक्तवती—'अपि त्वं कोऽपि मायावी राक्षसः ? रामलक्ष्मणयोः प्रवृत्तिं दत्वा अस्मदा-

हतान्तः करणे सन्तापमुत्पादयसि? तव वचनैर्मम मानस मुद्भ्रान्त-मिव। अहमुपवासकृशा, दुःखकातरा, निराशाक्लिष्टा च—तथापि तव वचनैः ममान्धकारमयमानसे आशाप्रदीपः ज्वलितः किमु! किमयं मया स्वप्नो दृश्यते? अथवायं मम मनसो भ्रमः? यः कोऽपि त्वं भवेः मम पुरतः क्षणमात्मानं दर्शय—तव दर्शनेनैव मम शोक-विह्वलमानसं प्रमुदितं भवेत्।'

हनूमान्—अहं रामदूतः सुग्रीवस्य सचिवः हनूमान्। निजपराक्रमेण सागरमुल्लंघ्य भवत्प्रवृत्यर्थमागतोऽस्मि। देवि! मयि संदेहो न कार्यः। श्रद्धत्स्व अस्मद्वचस्सु।

सीता ससान्त्वना जिज्ञासितवती—त्वया सह रामलक्ष्मणयोः सङ्गतं कुतः सञ्जातम्? त्वया रामलक्ष्मणयोः रूपगुणाः सविस्तरं वर्णनीया, कथं च समुद्रातिक्रमं विधाय अस्यां घोरलङ्कायां प्रविष्टोऽसि? इत्यादि कथय।

हनूमान् रामलक्ष्मणयोः संगतेरितिहासं तयोश्च रूपगुणान् सविस्तरं वर्णयित्वोवाच—'मया निजपराक्रमेणैव सागरः उल्लंघितः। इच्छामात्रेणेहं अतिस्थूलकायः क्षुद्रकायो वा भवितुं समर्थोऽहम्।—शरीरं शतयोजन विस्तीर्णं कर्तुं पारयामि। क्षुद्रचटकपक्षीवापि भवितुं शक्नोमि। रावणसमेतामेतां लङ्कापुरीं ध्वंसितुमपि मम शक्तिरास्ते। वैदेहि! आश्वस्ता भवतु भवती।' मया किं

 


कर्तव्यम् का च भवदभिलाषा' इति च निवेदयतु। भवत्या विश्वासार्थं रामचन्द्रेण स्वनामाङ्कितमिदमङ्गुलीयकं दत्तम्। पश्यतु भवती' इत्युक्त्वा अंगुलीयकं तेन सीताहस्ते समर्पितम्।

सीता तदङ्गुलीयकं हस्ते गृहीत्वा असकृत् हृदयेन मुखेन च सादरं स्पृष्टवती। आनन्देन तस्या मुखमण्डलं समुज्ज्वलं जातम्। आनन्दाश्रुविसर्जनपूर्वकं सोक्तवती—'हे राघवदूत! त्वं मम प्राणदाता! कथमिव त्वां पुरस्करिष्यामीति न जाने। त्वं तु महावीरः कर्मपटुः बुद्धिमांश्च। तवोपकारपरिशोधने न कदाप्यहं समर्था। नापि त्वामहं सामान्यमिव मन्ये। अपि रामस्य कुशलम्? भविष्यति वास्मदुद्धारचेष्टापरः? अपि भ्रातृवत्सलः भरतः स्वसेनां मन्त्रिगणांश्च प्रेषितवान्? * अप्यहं तं द्रष्टुं समर्था स्याम्? रामस्य शस्त्राघातेन सवंशो रावणः विनङ्क्ष्यति अपि? दूत! अस्मत्सदृशी न कापि तस्य

---

* रामचन्द्रस्य चित्रकूटत्यागमानन्तरं भरतेन सह तस्य कोऽपि योगायोगः जातः इति न ज्ञायते। राक्षसानां वासभूमौ जनस्थाने दण्डकारण्ये रामसीतालक्ष्मणानां जीवनमनेकवारं विपत्समावृतमासीत्। सीता रामेण सहासीत् इत्येव तेषां विपदामन्तो नाभूत्।... भरतस्तु राजा बभूव। अनेके लोकाश्च तस्याधीना अभूवन्। वनवासिभ्रातुः प्रवृत्तिलाभसहायादिकरणं भरतस्य कर्तव्यमासीत्। परं तु तेनेदृशमौदासीन्यं किमर्थं दर्शितम्?

स्नेहपात्रम्। यावत्कालं तस्य प्रवृत्तिं लप्स्यामि तावदेवास्मज्जीवम्।' इदमखिलं वदन्ती सीता मस्तकमवनम्य रोदितुमारभत।

हनूमान् सीतां सान्त्वयित्वोवाच,—'भवती अत्र स्थिता इति रामो न ज्ञातवान्। अधुना मत्तः संवादमुपलभ्य स शीघ्रमेव सुग्रीव-सैन्येन सार्धं लङ्कामाक्रम्य भवदुद्धारं विधास्यति। अहं निश्चयपूर्वकं व्याहरामि; शीघ्रमेव भवती निकटस्थ प्रस्रवणपर्वते लक्ष्मणेन सह रामं द्रष्टुं शक्ष्यति। तेन वन्यफलमूलादिकेनैव जीवितधारणं कृतमास्ते।

---

सीताहरणानन्तरं रामः आत्मानं विशेषतो विपन्नावस्थमचिन्तयत्। एकाकी स लक्ष्मणेन सह वनमागतः; सैन्यसामन्तादिकं किमपि नाभूत्तेन सार्धम्। गत्यभावेन तेन सुग्रीवेण सह सख्यस्थापनपूर्वकं सीतोद्धारोद्योगो विहितः। अस्मन्मतेन एतादृशविपत्कालसमये 'भरतः गृहीतसैन्यसामन्तः समीपमुपतिष्ठेत' इति रामस्याशाऽऽसीत्। सीतादेवी तु तावत् एतादृशीमाशामवश्यं कृतवती इति स्पष्टं ज्ञायते। अतः सा हनूमतः जिज्ञासितवती—'भरतेन सैन्यं प्रेषितं किमु?' सुग्रीवस्य विभीषणस्य च सहायमनधिगम्य सीतोद्धारकार्यमतिकठिनतर-मभविष्यत्। सीतोद्धारं विना रामः कदापि अयोध्यां न प्रत्यावर्तिष्यत। अत एव सीतारामयोर्जीवनं मृत्युर्वा केवलं रावणवधोपरि निर्भरं आसीत्। वाल्मीकिमते भरतः चतुर्दशवर्षपर्यन्तं नन्दीग्रामे तपस्वीव पादुकापूजापरः रामप्रतीक्षायां निजशरीरमक्लेशयत्।

 


रमणीनां प्रियं किमपि पुष्पं फलं अन्यत्किमपि वस्तु वा विलोक्यैव रामः हा प्रिये !' इत्युक्त्वा दीर्घनिःश्वासपरो जायते ।'

इदमखिलं निशम्य सीता क्रन्दन्ती उक्तवती—'दूत ! अहं उद्बन्धनेन प्राणत्यागं कर्तुं कृतसंकल्पा आसम्, परं त्वद्वचनश्रवणेन रामदर्शनार्थं जीवितुमिच्छामि । दशमासास्तु व्यतीताः । केवलं मासद्वय-पर्यन्तमेव मम जीवितम् ! मां रामाय प्रत्यर्पयितुं विभीषणेन अनेकशः अभ्यर्थितोऽपि रावणः न किमपि श्रुतवान् । विभीषणस्य स्त्री 'सरमा' स्वज्येष्ठकन्यां कलां (कृत्तिवास तुलसीदासरचित रामायणयोः 'सान-न्दाम्) मां प्रति प्रेषितवती यस्याः सकाशान्मयाऽऽकर्णितम्—'अविन्ध्य' नामा कश्चित् वृद्धः सत्स्वभावो राक्षसः रावणमनेकशः उपदिष्टवान् परं तेन न किमपि स्वीकृतम् ।'

हनूमान्प्रत्युवाच—'मत्तः अधिगतभवत्प्रवृत्तिः रामः सुग्रीव-सैन्यबलेन सार्धं लङ्कामाक्रमिष्यति । अथवा भवत्याः अभिलाषानुसारं अद्यैव भवतीं स्वपृष्ठमारोप्य सागरपारं नेतुं शक्नोमि । विद्यते ममैता-दृशी शक्तिः ।'

विस्मिता सीता जगाद—'कथमेतत्सम्भवेत् ? त्वं तु क्षुद्र-शरीरो जीवः ।'

सीतावचनं निशम्य हनूमान् स्वशरीरमुच्छूनी कर्तुमारभत । सीता हनूमतः पर्वतप्रायं विशालशरीरमवलोक्य भयात् हस्तद्वयेन

विहितनयनोक्तवती—'ज्ञातं मया त्वच्छक्तिसामर्थ्यम्। 'मां समुद्रपारे नेतुं समर्थोऽसि' इत्यस्मिन्विषये विद्यते मम विश्वासः। किन्तु नाहं रामेतरं कमपि पुरुषः स्प्रष्टुमभिलषामि। तेन भवेद्रामयशोहानिः। अतः नाहं त्वया सह प्रयास्यामि। रामेण सार्धं सैन्यमानीय त्वयास्म-दुद्धारः कर्तव्यः। रामश्चेत्स्वयमागत्य हतरावणः सन् मां नेष्यति तदैव स विहित योग्यकार्यो भविता। अहं सधैर्यं तदागमनप्रतीक्षापरा स्थाम्'।

हनूमानुवाच—'देवि त्वया सम्यगुक्तम्। मया सार्धं तव गमनं योग्यं न भवेत्; तथापि भवत्या एतादृशं किमपि अभिज्ञानं दातव्य येन 'मया भवत्साक्षात्कारो विहित' इति रामचन्द्रस्य विश्वासो भवेत्।

सीता गद्गदस्वरेणोक्तवती—'दूत! त्वया अस्मत्स्वामिने एतदेव श्रेष्ठमभिज्ञान प्रत्यर्पणीयम्— 'चित्रकूटपर्वतोपवने एकस्मिन्दिवसे कृतजलक्रीडायां जलार्द्रवाससि मयि उपविष्टायां कश्चिद्वायसः उड्डीय आगतः; चञ्च्वा मम शरीरमाहन्तुमारेभे। अहमपि लोष्टहस्ता काकं निःसारयितुं चेष्टापरा जाता। मम स्खलितं वासः अनावृतशरीरं चावलोक्य त्वया हसितम्। येनाहं कुपिता लज्जिता च। मत्सान्त्वन-परस्य तव वक्षसि विनिहितमस्तकाहं निद्रिता। निद्राभङ्गानन्तरं स एव काकः मम शरीरमाक्रम्य वक्षो वेधितुमारभत। त्वया परितो दत्तदृष्टिना तं वायसमवलोक्य तृणमेकं मन्त्रपूतं विधाय तत् ब्रह्मास्त्र-

रूपेण वायसोपरि क्षिप्तम्। वस्तुतः इन्द्रपुत्रो जयन्तः गृहीतकाकरूपः पापाभिप्रायेण अस्मदुरोजोविलेखनं कृतवान्। अयं काकः वायुवेगेन हूयमानः स्वर्गलोकं गतः। किन्तु इदं ज्वलत्तृणरूपं ब्रह्मास्त्रं काकं स्वर्गलोकेऽप्यनुससार। स्वयमिन्द्रोऽपि तद्रक्षा समर्थो नाभूत्। तदानीं स (जयन्तः) तव शरणमागतः। तस्य कातरतया कृपालुना त्वया तत्प्राणरक्षा विहिता। किन्तु अन्वर्थब्रह्मास्त्ररूपज्वलत्तृणं जयन्तस्य दक्षिणचक्षुः विनाश्य प्रतिनिवृत्तम्। तदानीमयं काकरूपधारी जयन्तः कृतज्ञमानसः त्वामभिवन्द्य स्वस्थानं प्रयातः।'

इदमभिज्ञानलक्षणमुपाख्यानं समाप्य सीताब्रवीत्। दूत! रामायास्मत्प्रणामं निवेद्य येन लक्ष्मणेन रामेण सार्धं पितृवत् मया च सह मातृवत् व्यवहारः कृतः यश्च अस्मदपेक्षया रामस्य प्रियतरः तस्य लक्ष्मणस्यापि कुशलानुयोगः कर्तव्यः'। ततः सीता स्ववस्त्राञ्चलात् दिव्यचूडामणिरूपं रत्नमुन्मुच्य सजलनयनं हनूमतः हस्ते समर्प्य जगाद—'हे वीर! एतद्राघवाय समर्प्यम्। एतदभिज्ञानदर्शनेन 'अहं' मम जननी पिता जनकश्च एते त्रयः तस्य स्मरणविषया जायेरन्। हे प्रियदूत! सुग्रीवः कीदृशः कीदृशश्च तत्सेनापराक्रमः इत्यादिकं किमप्यहं न जाने। अपि त्वमपि तेनैव सह स्थास्यसि? सुग्रीवः इमं दुस्तरं सागरमुत्तीर्य ससैन्यः कथं लङ्कायामागमिष्यति? इत्यपि मया ज्ञातुं न शक्यते।

हनूमानब्रवीत्—'देवि! आश्वस्ता भव। शीघ्रमेव रामलक्ष्मणौ सुग्रीवेण सह गृहीतगणनातीतबलौ अत्रागमिष्यतः। भवती च रामसंगता भवेत्। कः खलु रामेण सदृशः जगति अपरो वीरः?' सविनयं सीतां प्रणम्य हनूमान् गन्तुं प्रस्तुतः। सीता सजलनयनाब्रवीत्। 'दूत! रामलक्ष्मणौ ससचिवं सुग्रीवं प्रति चास्मत्कुशलं निवेद्य वक्तव्यम्। अहमस्माद् दुःखसागरात् यथाशीघ्रमुद्धर्तव्या।'

## हनूमतः शौर्यवीर्यप्रदर्शनम्

हनूमानचिन्तयत्—'मम गमनस्य उद्देश्यं सफलीभूतम; सीतानुसन्धानमधिगतं मया। तस्याः सकाशादभिज्ञानमपि प्राप्तम। किन्तु केवलमादिष्टकार्यसम्पादनेनैव उत्तमदूतस्य कर्तव्यं न समाप्यते! लङ्कामागतस्य मे केवलं सीताप्रवृत्तिलाभेनैव न सर्वं सम्पद्यते। शत्रोः बलाबलज्ञानलाभः शत्रोश्च पुरतः किञ्चिदात्मशक्तिपरिचयप्रदर्शनमपि समुचितं प्रतिभाति। सामदानभेददण्डात्मकचतुर्विधराजनीतौ दण्डनीतिमेव स्वीकरिष्यामि। अहमेतदशोकवनं नाशयित्वा राक्षसैः सह योत्स्यामि। रावणं चावलोक्य तस्यापि किञ्चिदात्मपरिचयं दास्यामि। इत्थं विचार्य स पुष्पपत्रफलभारशोभितं मनोहरमशोककाननं प्रध्वंसितुमुपचक्रमे। केवलं सीता यस्मिन्नंशे स्थिता आसीत् तमंशं वर्जयित्वा समग्रमशोकवनं तेन चूर्णयित्वा नष्टभ्रष्टमकारि। प्रसुप्ताः राक्षस्यः

 

वृक्षस्थपक्षिणां कलरवेण महीरुहपतनशब्देन च जागरिताः। पर्वत-प्रमाणविशालदेहस्य हनूमतः उग्रमूर्तिमवलोक्य ताः सीतां पप्रच्छुः, 'अयं कः, कुत्रत्यः, केन च हेतुनात्रायातः? त्वया सह कीदृशो वार्तालापस्तेन कृतः?'

'एतादृशमायावि राक्षसानां विषये कथं मया ज्ञातुं शक्यते! यूयमेव जानीथ; कोऽयं किं विधातुं चायातः। भुजङ्गा एव भुजङ्गचरणं जानन्ति।' इत्थं सीतोक्तवती।

प्राहरिकाः राक्षसराजरावणस्य समीपमेत्य जगदुः—'महाराज! कश्चिद्भीमकायः दानव अशोकवनं प्रविश्य सीतया सह कृतवार्तालापः केवलं सीता यस्य वृक्षस्याधस्तादास्ते तं वर्जयित्वा समग्रमपि अशोक-वनमनाशयत्। कः स कुतश्चागतः इति किमपि न जानीमः।'

निशम्येदं रावणः क्रोधेनारक्तनयनः तत्क्षणमेव अशीतिसहस्रं दुर्धर्षकिङ्करान् हनूमन्निग्रहार्थमादिशत्। गृहीतविविधास्त्रेषु रावण-सेवकेषु हनूमान् रामचन्द्रस्य जयध्वनिपरः तोरणद्वारस्य महतीं लोहमयीमर्गलामुत्थाप्य वज्रघातेन दैत्यवधप्रसक्त इन्द्र इव परिघप्रहारेण सर्वानपि किङ्करान् क्षणकालादेव व्यनाशयत्।

किङ्कराणां निधनवार्तां निशम्य रावणः क्रुद्धतरः सन् मन्त्रि-पुत्रान् ससैन्यं हनूमता सह युद्धार्थमादिष्टवान्। तत्क्षणमेव वीर-

हनूमान् उच्चतरचैत्यप्रासादमारुह्य जयध्वनिपरः सैन्यमवलोक्य सहुंकारमुपरिष्टात्तानाक्रम्य क्षणादेव सर्वानवधीत्।

लङ्कायां क्रन्दनध्वनिरुत्थितः। सैनिकैः सह मन्त्रिपुत्रनिधन-वार्तां निशम्य रावणः विरूपाक्ष-यूपाक्ष दुर्धर्षि-प्रघस-भासकर्णाभिधान् पञ्चसेनापतीनाहूयोक्तवान्— 'यूयं हस्त्यश्वरथान् गृहीत्वा सावधाना युद्धार्थं गत्वा देशकालविचारपूर्वकं कार्यरता भवत।'

सेनापतयः हस्त्यश्वरथैः शरशूलपट्टिशप्रभृतिशस्त्रैः सह आक्रमणमकार्षुः परं हनूमान् गिरिशृङ्गमेकमुत्पाट्य तदाघातेन सेनापतीन्निहत्य क्षणकालादेव हस्तिभिर्हस्तिनः, अश्वैरश्वान्, सैनिकैश्च सैनिकान् विनाश्य कृतान्त इव पुनरपि तोरणमारूढः सिंहनादं कर्तुमारब्धः।

पञ्चसेनापतीनां निधनवार्तामाकर्ण्य रावणः विशेषरूपेणोत्तेजितः सन् कुमारमक्षं प्रति दृष्टिपातमकरोत्। वीरोऽक्षः ज्ञातजनकेङ्गितः तत्क्षणमेव अष्टाश्वसंयोजितस्वर्णमयरथमारुह्य ससैन्यं युद्धार्थमुद्यतः। हनूमन्तमवलोक्यैव अक्षः शरत्रयेण तमाविध्य युद्धार्थमाह्वयत्; नवोदितेन्दुकान्तिमन्तं बालकमवलोक्य हनूमानचिन्तयत्— 'अयं बालकः प्रौढ इव पराक्रमदर्शनपरः नैनं हन्तुमिच्छामि; परन्तु क्रमशोवर्धमानमग्निमिवैनमुपेक्षितुं नोचितम्।' इति विचिन्त्य हनूमान्वेगेनाक्षं प्रति धावितः, चपेटाघातेनैव च अक्षस्य सारथिमश्वान् रथं च

न्यनाशयत् । अक्षः रथादवरुह्य खड्गहस्तः हनूमन्तं अभिसमुदप्लुवत । परं हनूमान् दृढं धृततच्चरणद्वयः अनेकवारं तं भ्रामयित्वा च दूरं निक्षिप्तवान् । अक्षशरीरं विचूर्णितमभूत् । सैनिकेषु हाहाकार उत्थितः । हनूमानपि व्यापादितानेकसैनिकः पुनरपि तोरणमारूढः ।

श्रुतपुत्रनिधनवार्तः रावणः विशेषतया शोकाक्रान्तोऽभूत् । स इन्द्रजिन्नामानं पुत्रं योद्धुमादिशत् । उक्तवांश्च—'अक्ष मृत्यो-वैरनिर्यातनं विधीयताम् । रिपुरयं नोपेक्षापात्रम् । त्वं तु अस्त्रविशारद-श्रेष्ठः, ब्रह्मणः सकाशात् ब्रह्मास्त्रं त्वया लब्धम् । वीर ! दर्शय तव पराक्रमम् । त्वया सैन्यं न नेतव्यम् । साधारणास्त्रस्य प्रयोगोऽपि न विधेयः । यतः नायं रिपुः साधारणास्त्रवधयोग्यः । स्वयमक्षतः दिव्यास्त्रसहायः युद्धयस्व ।'

पितरं प्रदक्षिणीकृत्य इन्द्रजित् सत्वरं युद्धार्थं प्रस्थितः । स द्रुतगामिरथमारुह्य धनुषि टङ्कारं दत्तवान् । ज्यानिर्घोषेण सर्वा दिशः अनुनादिताः । हनूमानपि कृतसिंहनादः निजशरीरं स्फीततरं विधाय योद्धुमुद्यतः । इन्द्रजित् शत्रुणाऽलक्षितः उच्चप्रासादमारुह्य हनूमन्तं च लक्ष्यीकृत्य ब्रह्मास्त्रमेकमव्ययं संयोजितवान् । ब्रह्मणः वरेणैव हनूमान-वध्योऽभूत् । अतः सोऽस्त्रप्रभावेणाच्छन्नः सन् मृतवन्निश्चलः पतितः । इदमवलोक्य सैनिकाः कयाचित्स्थूलरज्ज्वा तमबध्नन् । हनूमान्निश्चेष्टः निश्चलश्च भूत्वा चिन्तयामास—'यदि अस्यामेवावस्थाया मामेते

रावणसमीपं नेष्यन्ति तर्हि समीचीनं स्यात्। रावणं द्रष्टुं शक्ष्यामि तं च किमपि हितवचनं श्रावयिष्यामि।

इन्द्रजिता 'ब्रह्मास्त्रं विफलीभूत'मिति दृष्टम्। ब्रह्मास्त्रात् अन्यास्त्रप्रयोगोऽपि नासीच्छक्यः। सैनिकामन्त्रशक्त्यनभिज्ञा हनुमन्तं अन्यथैवाबध्नन्। फलतः स ब्रह्मास्त्रप्रभावान्मुक्तः। अस्मिन्नेवसमये सैनिकाः हनुमन्तं प्रहरन्तः विजयोल्लासेन तमाकृष्य रावणसमीपं नीतवन्तः।

## रावणसकाशे हनूमान्

मुक्ताजालमण्डितराजमुकुटः महार्घहीरकादिखचितसर्वाभरण-भूषितो रावणः सभायामुपविष्ट आसीत्।

रावणमवलोक्य बन्दी हनूमान् चिन्तयामास—'अहा! किं रूपं, किं धैर्यं, का शक्तिः का च धुतिः! सर्वाङ्गं कथं सुलक्षणम्। यद्यस्याधर्मपक्षः प्रबलो न स्यात् तर्हि अयं इन्द्रसमन्वितसुरलोकरक्षको भवितुमपि योग्योऽभविष्यत्। (बाल्मीकि रामायणम्)

महावीरं हनूमन्तमवलोक्य रावणः स्तम्भितः सन् चिन्तितवान्—'किमयं भगवान् नन्दी अथवा असुरपतिर्बाणः? न दृश्यतेऽस्य तुलना। हनूमतः परिचयजिज्ञासार्थं रावणः प्रहस्तमन्त्रिणमादिष्टवान्। प्रहस्तश्च तमप्राक्षीत्—'कस्य दूतस्त्वम्? इन्द्रवरुणयमकुबेराणां विष्णोर्वा? सत्यं ब्रूहि। सत्यं वदसि चेत्तव मुक्तिर्भवेन्नोचेत्प्राणनाशः।'

प्रहस्तप्रश्नेन हनूमान् रावणं लक्ष्यीकृत्योक्तवान्—'नाहं इन्द्रवरुणयमकुबेराणां विष्णोर्वा दूतः। अहं रामदूतो हनूमान्। राक्षसराजं द्रष्टुमागतः। दुर्लभं खलु तवदर्शनमिति कृत्वा मयाऽशोकवनं विध्वंसितं तव सैन्येन सार्धं युद्धं च कृतम्। ब्रह्मणः वरेण देवासुरा अपि मामस्त्रपाशेन बद्धुं न समर्थाः। त्वद्दर्शनसुयोगो भवेत् इति कृत्वैव अहं स्वयमेव बन्धनं स्वीकृतवान्। तवमङ्गलार्थं यद्ब्रवीमि तच्छ्रूयताम्—अहं सुग्रीवस्य सचिवः। तस्यादेशेनाहं त्वत्सकाशमागतः। तव भ्राता सुग्रीवकुशलप्रश्नपूर्वकं तव ऐहिकपारलौकिक शुभकामनया अनेन संदेशेन मां प्रेषितवान्—'त्वया रामस्य पत्नीं सीतामानीय बन्दीव स्थापिता। न त्वं जानासि रामस्य बलविक्रमम्। येन एकेनैव शरेण बालिवधो विहितः। त्वं तु धर्मज्ञः; तपस्ययापि त्वया सिद्धिरासादिता—किन्तु अधर्माश्रयेण तव बुद्धिर्मलिनीभूता। परस्त्रीमवरुध्य स्थापनं न तवोचितम्। धर्मविरुद्धकार्ये त्वत्सदृशबुद्धिमतः प्रवृत्तिरशोभना खलु। राजन्! त्रिलोक्यां रामेण सार्धं वैरं विधाय न कोऽपि सुखी भवितुमर्हति। त्वया तपस्या प्रभावेण या शक्तिरुपार्जिता तामधर्मकार्येण मा नाशय। अत एव त्वया सीता रामहस्ते समर्पणीया।

'अहमेकाकी एव गजवाजिरथसमेतां लङ्कां नाशयितुं समर्थः' परं रामः न दत्तवानेतादृशमादेशम्। 'सीतापहारकं शत्रुं स्वयमेवाहं

हनिष्यामि' इति तेन प्रतिज्ञा कृताऽस्ते । या सीता त्वया बंदीरूपेण स्थापिता सा लङ्का विनाशिनी कालरात्रिरिव । त्वं सीतारूपमृत्युपाश-मुक्तो भूत्वा निजकल्याणचिन्तनपरो भवेः । राजन्! त्वया रामदास-दूतस्य बचनं श्रोतव्यम् । रामः चराचरसमवेतसर्वलोकसंहारसमर्थः । तथैव लोकान् स्रष्टुमपि क्षमः । न स सामान्यमानुषः । स्वयम्भूर्ब्रह्मा सुरपतिरिन्द्रः अन्यः कोऽपि वा युद्धे रामस्य संमुखं स्थातुं न शक्नुयात् ।

## विभीषणस्योक्तिः

श्रुतहनूमद्वचनः क्रुद्धः सन् रावणोऽब्रवीत्—'हन्यतामयम्!' विभीषण उवाच—'भ्रातः शान्तो भव । क्रोधवशीभूय अन्यायकार्यं न विधातव्यम् । ये राजानः न्यायान्यायो जानन्ति तेषां दूतः नित्यमवध्यः । इदं धर्मविरुद्धं लोकव्यवहारेऽपि गर्हितम् । त्वं तु धर्मज्ञः कर्मज्ञः राजधर्मविशारदः विचक्षणश्च; अत एव शान्तचित्तेन विचार्यास्मै दण्डो दापनीयः । रावणोऽब्रवीत् । पापिवधेन राज्ञः न कोऽप्यधर्मः अतोऽहमेनं दुर्वृत्त शत्रुं हनिष्यामि ।'

तदानीं विभीषणः विनीतः सन्नब्रवीत्—'लङ्केश्वर! शान्तो भवेः । दूतः सर्वत्र अवध्यः । सत्यम्, अनेन शत्रुणा अनेकविधमनिष्टं शत्रुताचरणं च विहितम्, तथापि अयं दूत एव अतो न वध्यः । दूतस्य कृतेऽनेकविधं दण्डविधानमास्ते यथा अङ्गस्य विरूपता; कशाघातः, मस्तकमुण्डनमित्यादि । किन्तु नास्ति कापि वधदण्ड-

विधानम् । विशेषतः अस्य वधेन न तवास्ति कोऽपि लाभः । यस्यायं दूतः स एव दण्डनीयः इत्युचितम् । अथ हतश्चेत् तत्र शत्रुभूतं दुर्विनीतं राजपुत्रद्वयं कः खलु युद्धोन्मुखं करिष्यति ? तव कतिपयवीरान् प्रेषय ये मूढराजपुत्रबन्धनं विधाय तौ अत्रानेष्यन्ति ।'

विभीषणस्योपदेशं युक्तियुक्तं मत्वा रावणः हनूमद्वधस्याज्ञां शिथिलीकृत्य जगाद—'किन्तु अयं निगृहीतव्यः । पुच्छमेव वानराणां भूषणम् । अतो दह्यतामस्य लाङ्गूलम् ।' रावणस्यादेशेन सैनिकाः हनूमतः पुच्छं तैलसिक्तवस्त्रेणावृत्य अग्निना प्रज्वालितवन्तः ।* रावणस्य जयशब्दं कुर्वन्तः शंखभेरीर्वादयन्तः नगरे विविधमार्गेषु भ्रमन्तश्च सैनिकाः अवदन् —'दृश्यतां चरस्य दण्डः !'

---

* मतान्तरेण रावणः हनूमतः मुखं दग्ध्वा विकृतं कर्तुमादिशत् । सैनिका यदा महदलातप्रज्वालनपूर्वकं हनूमन्मुखविकृतीकरणासक्ता तदा हनूमान् निजदेहमुच्छूनीकृत्य बन्धनमुक्तो जातः । तद्विवेगेन चालितं तेषां हस्तादाच्छिद्य तेनैव लङ्कायां सर्वत्राग्निं प्रसारयाचक्रे इत्यादि ।

जैनरामायणमते लङ्कायुद्धात्पूर्वमेव हनूमान् द्विवारं लङ्कामगात् । प्रथमं चाररूपेण गत्वा सीताप्रवृत्तिमुपलभ्य रामसमीपमागतः । द्वितीयवारं दूतरूपेण गतोऽभूत् । सीतायाः प्रत्यर्पणप्रस्तावं दत्वा रामचन्द्रेण हनूमान् रावणसकाशं प्रेषितः । एतस्माद्विवरणात्

'नीचराक्षसा मह्यमेतादृशं दण्डं दत्तवन्तः अस्य प्रतिफलं दातव्यं स्यात्'। इत्थं विचिन्त्य हनुमान् छिन्नपाशः घोरनिनाद पूर्वकमुत्प्लुत्य उच्चपुरद्वारमारुह्य च गृहाद्गृहं अग्निं प्रसारयितुमारब्धः। अनेक प्रासादगृहेषु उद्यानेषु च ज्वलनो लग्नः। वायुचालितश्चायमग्निः त्वरितमेव चतुर्दिक्षु प्रसृतः। विशालाः प्रासादाः गृहाणि च भस्मीभूय धराशायीनि जातानि। सर्वतः राक्षसानामार्तनादः समुत्थितः। रमण्यः शिशून्क्रोडीकृत्य आत्मरक्षार्थं रथ्यासु इतस्ततो धावन्त्यः चक्रन्दुः। क्रमशश्चायं युगान्तकालीनोऽनलः वायुवेगेनोद्दीपितः सन् समग्रामपि लङ्कापुरीमधक्षत्। अनन्तरं हनुमान् समुद्रजलनिर्वापित-निजलाङ्गूलाग्निः तोरणोपरि उपविश्याचिन्तयत्—'मया क्रोधवशेन समग्रापि लङ्का दग्धा। एकदापि सीताविचारो न विहितः; अपि सा जीविता न वा? धिङ् माम्! यदि तस्या अपि कापि क्षतिर्जायेत तर्हि अग्निप्रवेशं करिष्यामि' समुद्रजले वा देहं विसर्जयेयम्। तथापि

---

'दूतोऽवध्य' इति रावणं प्रति विभीषणोक्तेः सार्थकता लभ्यते। तथैव दूतरूपेण हनूमता यत्किमपि निजशक्तिप्रदर्शनं कृतमासीत् तस्यापि याथार्थ्यं प्रमाणी भवति। द्वितीयवारं लङ्कादहनादिकमकार्षीत्। जैनरामायणमतस्वीकारेण सकलघटना सामञ्जस्यं सम्यक्तया सिद्ध्यति। तथा द्वितीयवारमेव विभीषणेन सह हनूमतः गुप्तवार्तासम्बन्धोऽपि विशदीभवति।

मन्ये सीता स्वतेजसैव सुरक्षिता स्यात् । अस्मिन्समये स चारणान् 'हा! हनूमता सर्वापि लङ्का भस्मसात्कृता परमाश्चर्यम्! जानकी सुरक्षितास्ते ।' इति वदतः समाकर्णयत् ।

## पुनः सीतावलोकनम्, तथा संभाषणं च

'सीतोपरि न कापि विपदागता' इति श्रुत्वा हनूमानशोककाननमागम्य तां प्रणम्यचाब्रवीत्—'देवि! भाग्यवशाद्भवतीं सुस्थामवलोक्याहमाश्वस्तः ।' ततश्च लङ्कादहनविध्वंसविषये सविस्तरं विज्ञाप्योक्तवान— 'भवत्याः साक्षात्कारो जातः; राक्षसराजमवलोकितवान्; बलाबलं परिज्ञातम, पराक्रमोऽपि दर्शितः। इतः प्रत्यावृत्य भवत्याः कुशलवार्तां रामचन्द्राय निवेदयामि।' सीता हनूमन्तं प्रति असकृत् सस्नेहदृष्टिपातं विधाय बाष्पाकुललोचनाऽभिहितवती। सति सम्भवे एकदिवसं कस्मिन्नपि विजनस्थाने प्रच्छन्नरूपेण विश्राम्यताम् ।'

सीतायाः सस्नेहामुक्तिमाकर्ण्य हनूमानुक्तवान्—'देवि! भवती अक्षताऽस्ति।' इति प्रवृत्तिमुपलभ्यैव रामलक्ष्मणौ सुग्रीवश्च ससैन्यं लङ्कामाक्रमिष्यन्ति। सवंशं रावणं च विनाश्य भवदुद्धारं च विधास्यन्ति। धैर्यमवलम्बतां भवती—शीघ्रमेव रामस्य प्रत्यञ्चामुक्तशरेण लङ्का विध्वस्ता भविष्यति।' इत्युक्त्वा हनूमान् सीतां प्रणम्य गमनानु-

ज्ञामधिगतवान् । पुनश्च सागरमतिक्रमितुमरिष्टपर्वतमारुह्य आकाश-मार्गेण तमत्यक्राम्यत् आकाशे उड्डीय गच्छन् दूरात् महेन्द्रपर्वतमवलोक्य हनूमान् सानन्दमुच्चैर्ननाद । सुग्रीवस्य सैन्यं समुद्रतीरे महेन्द्रपर्वते च हनूमत्प्रतीक्षापरमासीत् । गंभीरमेघगर्जनवत् हनूमतः निनादमाकर्ण्य पर्वतप्रमाणदेहः स प्रत्यावृत्तः इति विलोक्य च सैनिकाः आनन्दध्व-निमकार्षुः ।

## हनूमतः प्रत्यावर्तनम्

हनूमान् शनैः शनैः महेन्द्रपर्वतोपरि अवतीर्णः । अङ्गद-जाम्बवत्प्रभृतयः सर्वेऽपि महता आनन्देन तं परिवृत्य स्थिताः । स जाम्बवत्प्रभृतीन् प्रवीणान्प्रणम्य अङ्गदादीनालिलिङ्ग । सैनिकाः अपि हनुमन्तं परिवृत्य स्थिताः । स कुमारमङ्गदं हस्ते गृहीत्वा महेन्द्रपर्वतस्य रमणीयप्रदेशे सुखासीनो भूत्वा जगाद—'मया अशोककानने वैदेही दृष्टा । घोरदर्शनश्चेटीगणस्तत्र प्राहरिककार्यतत्पर आस्ते—सा उप-वासकृशा, नित्यं रोदनपरा, मलिनवसना, शिरसि च जटिलैक वेणीधरा, 'हा राम! हा राम!' इति वदन्ती शोकपरास्ते ।' एतया प्रवृत्त्या सर्वेऽपि सानन्दा अधीराश्च संजाताः ।

अनन्तरं जाम्बवता पृष्टः हनूमान् अशोक काननध्वंसम्, राक्षससेनया सह युद्धम्, इन्द्रजितः ब्रह्मास्त्रप्रयोगः, तस्य बन्धनम्,

रावणेन सार्धं वार्तालापः, लङ्कादहनम्, रावणस्य बलाबलनिर्णयश्च इत्यादि सर्वमपि वर्णयित्वागादीत् — ' सीताजीवनदर्शनेन ' रामचन्द्रस्योद्यमः सफलः भवेदि'ति मया ज्ञातम्। अतिमहत्खलु सीताचरितम्। सा तु महीयसी नारी। बलदर्पितं रावणं सानाङ्गीकरोति। शची यथा इन्द्रस्य तथैव सीता राममयजीविता—रामे एकान्तमनुरागिणी। सीताया अभिशाप एव रावणस्य नाशं विधास्यति। रामस्तु निमित्तमात्रम्।

हनूमन्मुखादेतादृशीमपूर्वसफलतावार्तामाकर्ण्य सैनिकाः ससिंहनादमास्फालनपरा बभूवुः। अङ्गदस्तु तत्क्षणमेव कतिपयान्प्रधानवीरान्गृहीत्वा लङ्कां जयार्थं सीतोद्धारार्थं च प्रस्तुतोऽभूत्। जाम्बवान् सर्वानपि प्रशाम्योक्तवान् — ' अङ्गद! त्वया यः प्रस्तावः कृतः स न स्वीकृतिमर्हति। यतः केवलं सीतान्वेषणार्थमेव वयमादिष्टाः—सीतोद्धारं विधाय तस्या आनयनविषये राज्ञा सुग्रीवेण अस्मान् प्रति नोक्तम्। रामेण स्वयं सीतोद्धारप्रतिज्ञा कृता। वयं तु तेषामादेश' पालयामः।'

ततः सर्वेऽपि मिलित्वा कोलाहलपरा किष्किन्धां प्रति प्रचलिताः। मार्गे सुग्रीवस्य मधुवनमासीत्। अङ्गदाज्ञानुसारं सर्वेऽपि मधुवनं प्रविश्य यथेष्टं मधुपानरसिका बभूवुः। सुग्रीवस्य मातुल-

दधिमुखः मधुवनस्य रक्षकः आसीत्। सैनिकानाममर्यादमस्याचारमव-लोक्य सः सरक्षकमुपगम्य प्रतिबन्धमकार्षीत्। किन्तु सैनिका एतादृशं मधुपानमत्ता आसन् यत्प्रणष्टलघुगुरुविचारा दधिमुखेन सह सर्वानपि रक्षकान् अत्यधिकं पीडयन्तः विह्वलानकार्षुः। दधिमुख आहतः रक्ताक्तशरीरः सानुचरः आकाशमार्गेण सत्वरं सैनिकापराधनिवेदनार्थं सुग्रीवं प्रति प्रयातः।

मधुवनं सुग्रीवस्य प्रियं सुरक्षितं च विहारस्थानमभूत्। सैनिकानां तत्र प्रवेशाधिकारो नासीत्। तथापि दधिमुखसकाशात् 'अङ्गदादिभिः रक्षकानवमान्य पानभोजनमत्तैः सद्भिः मधुवनं प्रध्वस्तमिति' निशम्य सुग्रीवोऽचिन्तयत्—'स्वकार्येऽसफलैः सैनिकैः एतादृशमसंयताचरणं न कदापि कृतं स्यात्—ध्रुवं हनूमान् अधिगत-सीताप्रवृत्तिः प्रत्यागत इति तर्कयामि। यत्र जाम्बवदङ्गद सदृशौ नेतारौ हनूमांश्च यत्राध्यक्षः तत्र न कोऽप्यनिष्टसम्भवः। अनधिगत सीताप्रवृत्तयः सैनिकाः इत्थमुच्छृंखलाः कथं जायेरन्?

श्रुतैतद्वृत्तान्तौ रामलक्ष्मणावपि अति प्रमुदितौ। दधिमुखं सान्त्वयित्वा सुग्रीवोऽब्रवीत्—'मातुल! कुपितो मामाभूः नूनं सैनिकाः सफलीभूतप्रयोजनाः प्रत्यागताः अत एव ते मधुवने आमोदप्रमोद-

प्रसक्ताः सन्ति । त्वया शीघ्रं गत्वा हनूमत्प्रभृतयोऽखिला अस्मत्सकाशं प्रेषयितव्याः ।'

दधिमुखः व्योममार्गेण * प्रत्यावृत्य अङ्गदादीन्सकलान् किञ्चित्प्रकृतिस्थानद्राक्षीत् । सोऽङ्गदमभाषत—'युवराज ! त्वं तु एतस्य विहारस्थानस्य स्वामी; यूयं श्रान्ताः अत एव स्वच्छन्दं यथेष्टं च मधुपानं कार्यम् । मया सुग्रीवाय सर्वं निवेदितम् । स न रुष्टः अपि तु प्रसन्न एव । युष्मान्सर्वानपि शीघ्रं प्रेषितुं स आदिशत् ।'

अधिगततादृशप्रवृत्तयः सैनिकाः अङ्गदहनूमद्भ्यां सह महता वेगेन व्योमाध्वना निर्गताः । दूरात्सैनिकानां सिंहनादं निशम्य सुग्रीवः

---

* एतदखिलं विवरणं वाल्मीकिरामायणात् स्वीकृतम् । वाल्मीकिरामायणे आकाशमार्गेण यातायातवर्णनमधिकतरप्रमाणे उपलभ्यते । केवलं रामलक्ष्मणौ तादृशमार्गेण न प्रयातौ । शेषा वानराः राक्षसाः सैनिकाः सेनापतयःससचिवो विभीषणः सर्वेऽपि आकाशमार्गेण गमनतत्परा आसन् । अन्या अपि एतादृशा अनेकाः घटनाः सन्ति । यत्र कुत्रापि 'आकाशपथगमनम्' । कविः कस्मिन्नर्थे एतादृशशब्दसमूहं उपयुयोज इति ज्ञातुं प्रायः कठिनम् । द्रुतगमनं उत्प्लवनपूर्वकं चलनं वा इत्यस्मिन्नर्थे 'आकाशमार्गगमनं' शब्दः प्रयुक्तश्चेत् साधारणजनबोधार्थं नास्ति किमप्यसौकर्यम् ।

प्रमुदितः सन् राममब्रवीत्—'सखे! एतेषां हर्षध्वनिं निशम्य मन्ये—एतैः जानकी दृष्टा' इत्यत्र नास्ति कोऽपि संदेहः। अन्यथा निश्चितसमयमर्यादामतिक्रम्य अस्मत्पुरतः न कोऽप्यागतः स्यात्। अहं युवराजांगदस्य हर्षध्वनिमाकर्णयामि। विफलमनोरथः स मत्समीपं कदापि नागतो भवेत्। तत्रापि हनुमानेव एतादृशकार्यसाधन समर्थो जात इति मन्ये। तेन तुल्यः कार्यकुशलः बुद्धिमांश्च न कोऽप्यन्यो दृश्यते।'

## रामसमीपे हनूमता सीतावृत्तान्तकथनम्

क्रमशः वर्धमानं सैनिकानां कोलाहलमाकर्ण्य सुग्रीवः हृष्टतरो जातः। ततः अङ्गदः हनूमन्तं पुरस्कृत्य जाम्बवत्प्रभृति यूथपतिभिः सह रामं सुग्रीवं च प्राणंसीत्। 'मया वैदेही दृष्टा; अक्षतशरीरा सा व्रताचरणप्रसिता' इत्यादिविवरणं हनूमन्मुखान्निशम्य रामलक्ष्मणौ आनन्देन अधीराविव अजायेताम्। सीतोक्तमभिज्ञानरूपं चित्रकूटोपाख्यानमाकर्ण्य जानकीप्रदत्तदिव्यचूडामणिं चावलोक्य 'हनूमता सीतासाक्षात्कारः कृतः इत्यस्मिन्विषये रामस्यनासीत्कोऽपि संदेहः। एतं चूडामणिं सस्नेहं चुम्बन् सावेगं क्रन्दमानः वक्षसि धारयंश्चाब्रवीत्—'वत्समवलोक्य यथा पयस्विनी धेनुः स्नेहार्द्रा तथैवास्मन्मानसमपि मणिदर्शनेन स्नेहार्द्रमजनि। एतन्मणि-

दर्शनेन पितरं, राजर्षिजनकं सीतां च स्मारितोऽहम्। मन्ये प्रत्यक्षं सीतामेवाधिगतवानहम्।' रामे किञ्चित्प्रकृतिस्थे हनूमान् लङ्का-विषयकसमस्तघटनाः सीतावार्तां च क्रमशः वर्णयित्वा अभाषत—'वैदेही भवद्विरहेण चिरं जीवितुमसमर्था अतः तदुद्धारार्थमचिरा-देवोद्यमः कार्यः।'

रामः तादृशवार्तयाभिभूत इव पौनः पुन्येन सीताविषयक-जिज्ञासया परो जातः। हनूमानपि श्राविताखिलवृत्तान्तः कुशल-प्रश्नादिज्ञापनानन्तरमुक्तवान्—सीता अभिलषति—रामः ससैन्यं शीघ्रमागत्य सवंशरावणध्वंसपूर्वकं ममोद्धारं करोतु; इदमेव कार्यं तस्य यशस्करं भवेत्'। साश्वासं मया उक्ता—'देवि! शोकस्त्वया परिहार्यः। अचिरादेव राघवेन्द्रं रामं धनुर्धारिणं लक्ष्मणं च लङ्काद्वारे द्रष्टुं शक्ष्यति भवती। सुग्रीव सैन्येन यूथपतीनां सिंहनादेन च लंका कम्पिता स्यात्। रामलक्ष्मणयोर्ज्यामुक्तशरजालैः लङ्का आच्छन्ना भविष्यति। 'वनवासान् भवतीं गृहीत्वा रामः अयोध्यां प्रत्यागतः अभिषिक्तो भवेत्' इदमपि भवती शीघ्रमेव द्रक्ष्यति।' ममैतादृश-माश्वासवचनं निशाम्य सीता शान्तहृदयाऽजनि।

## रामस्य हनूमतः आलिङ्गनम्

आकर्णिताखिलवृत्तान्तः रामः प्रीतोऽब्रवीत्—'पृथिव्यां

केऽपि जनमनसापि न भावयन्ति तादृशं दुष्करकार्यं हनूमता साधितम्। हनूमान् एतादृशमसाध्यं साधयित्वा प्रत्यावृत्तः तन्न केवलं सुग्रीव-संतोषाय अपि तु वैदेहीप्रवृत्तिमानीय मम लक्ष्मणस्य च प्राणान्सं-रक्षितवान्। आवामिदानीं वनवासिनौ असहायौ च इत्येव दुःखितौ।' एतस्य प्रत्युपकारकरणे न मम सामर्थ्यम्; केवलं तस्यालिङ्गनं आन्तरिकी कृतज्ञता च इत्येवास्मत्सम्बलम्' इत्यभिधाय रामः हनूमन्तं गाढमा-लिङ्गितवान् ततश्च स रावणस्य बलाबलविषये पप्रच्छ।

## लङ्कायाः बलाबलकथनम्

हनूमान सविनयमब्रवीत—'लङ्कापुरी हस्त्यश्वरथपदाति-सैन्येन परिपूर्णा। सैनिका दुर्धर्षा विविधक्षेपणास्त्रधारिणः लङ्काप्रवेश-द्वारं लोहनिर्मितं दृढबद्धं अर्गलायुक्तं च। चतुर्षु विशालप्रवेशद्वारेषु शरोपक्षेपणार्थं यन्त्राणि स्थापितानि येषां प्रचण्डाघातेन शत्रुनिवारणं क्रियते। शतशः लोहमयशतघ्न्योऽपि सज्जिता विद्यन्ते। लङ्कां परितः दुर्भेद्यमनुल्लंघनीयमुन्नतं च प्राचीरमास्ते। तस्माद्बहिः अगाधा हिमजलमयी कुम्भीरादिपूर्णा गभीरपरिखा। प्रत्येकद्वारे सयन्त्रः वृहत्सेतुरास्ते येन उपरि आगतं शत्रुसैन्यं यन्त्रबलेन परिखायां निक्षिप्यते। रावणः युद्धप्रियः किन्तु धीर प्रकृतिः। तन्मुखं वीरत्व-व्यञ्जकं स्वयं च स अवहितचित्तः सेनापर्यवेक्षणं संचालनं च कुरुते।'

'लङ्कापुरी दुर्गमगिरिशिखरे प्रतिष्ठिता। तत्र नदीदुर्गः पर्वतदुर्गः विविधाः कृत्रिमाश्च दुर्गाः सन्ति। असंख्या सशस्त्र-चतुरङ्गिणी सेना लङ्कायाः चतुर्द्वाररक्षां करोति। मया द्वाराणां सेतून् चूर्णीकृत्य परिखाः पूरिताः—लङ्कायाः शतशः प्रासादभवनानि भस्मसात्कृतानि, प्राकारोऽपि भूमिसात्कृतः। इदानीं येन केनाप्युपायेन सागरमुत्तीर्य तत्र गतमात्राणामस्माकं लङ्कापदानतेव भविता।'

इति दिव्यरामायणे सुन्दरकाण्डम्

# युद्धकाण्डम्

हनूमतः अद्भुतकीर्तिं पराक्रमवार्तां च निशम्य रामोऽतिप्रीतो भूत्वा सुग्रीवमुक्तवान्—'मित्र! अद्य उत्तराफाल्गुनीनक्षत्रम्। श्वः हस्तेन सह चन्द्रमसः योगो भविता। अस्मिन्नेव शुभक्षणे अस्माकं ससैन्यं लङ्काभिमुखीयात्रा कुशलिनी जायेत। सेनापतिर्नीलः सहस्रशः द्रुतगामि सैन्यं गृहीत्वा पथपरीक्षार्थमग्रतो यातु। यस्मिन्मार्गे प्रभूतं जलं खाद्यादिकं च प्राप्येत तादृशमार्गेण सावधानतया गन्तव्यम्। दुर्गमवने गुप्तचरा राक्षससैनिका वा विद्यन्ते न वा एतस्याप्यनुसन्धानं विधेयम्। येन च शत्रुसैन्यं अस्मदग्रगमने कमपि अन्तरायं नोत्पादयेयुः इत्यस्मिन्विषयेऽपि अस्माभिः सावधानैर्भाव्यम्। दुर्बलाः सैनिकाः किष्किन्धारक्षार्थं तत्रैव तिष्ठन्तु। महाबला गजगवयगवाक्षाः पुरतो गच्छन्तु। ऋषभाः गन्धमादनाश्च दक्षिणवाम पार्श्वरक्षापरा जायेरन्। सेनायाः मध्यभागेऽहं हनूमता सार्धं स्थास्यामि; लक्ष्मणश्चाङ्गदेन सह प्रयातु। जाम्बवान् सुषेणः वेगदर्शी च पश्चाद्भागरक्षातत्परा भवन्तु। सखे! त्वं तु सर्वेषामपि अधिनायको भवेः।'

रामवचनं सर्वथा अनुमोद्य सुग्रीवः निजविशालवाहिनीं यात्रार्थमादिश्य राममब्रवीत्। बन्धो! एषा वाहिनी त्वदधीना। सा तवादेशान्पूर्णतयानुसरिष्यति।'

 

विशाला चमूः महता उत्साहेन सागरतीराभिमुखी प्रयाता। रामः सचिन्तो भूत्वा शुष्कमुखः सुग्रीवमभाषत—'सखे। यात्रार्थं तु वयं निर्गताः किन्तु एतं दुस्तरं सागरमुत्तीर्य सेना लङ्कायां कथं यास्यति?'

सुग्रीवः सहास्यमगादीत्—'वीर! त्वं सामान्य जन इव किमर्थं व्याकुली भवसि? येन केनाप्युपायेन भवतु—वयमिममगाध-सागरमुत्तीर्य लङ्कां गत्वा रावणवधं विधास्यामः। यूथपतयः त्वत्प्रिय-कार्यसाधनाय अग्निप्रवेशार्थमपि प्रस्तुताः! इदानीं केनोपायेन सेतु-बन्धनपूर्वकं सागरमुत्तर्तुं शक्नुमः एतस्यैवोपायश्चिन्तनीयः। त्वं तु सर्वशास्त्रज्ञः वीरः बुद्धिमांश्च; अहं तव सहायकः; अतः शोकं परित्यज्य क्रोधमाश्रय। तव विजयो निश्चितः।'

सुग्रीववचनमाकर्ण्य रामः धनुर्बाणहस्तः दीप्तस्वरेण हनूमन्तम-ब्रवीत्—तपोबलेन, सेतुबन्धनेन भयप्रदर्शनेन सागरं शोषयित्वा वयं अपरपारं गच्छामः। सागरातिक्रमणार्थं योग्यस्थाननिर्णयः कार्यः।

## सागरतीरे सैन्यसमावेशः

प्रयान्तौ रामलक्ष्मणौ विविधानि शुभलक्षणानि अद्राष्टाम्। नगरजनपदानतिक्रम्य सैनिका द्रुतगत्या प्रचलिताः; कतिपय दिना-भ्यन्तरमेव वनपर्वतादीनतिक्रम्य सागरतीरमुपस्थिताः। समुद्रवेलामुपगम्य

रामः सुग्रीवमभाषत—'वयं सागरतीरं प्राप्ताः। अस्यां वेलाभूमावेव सेनानिवेशः कार्यः। क्रमेण सागरातिक्रमोपायं चिन्तयिष्यावः।'

रामाज्ञया सुग्रीवः वृक्षसमाकीर्णसागरतीरे सेनानिवेशं कृतवान्। पुरत एव उत्तालतरङ्गमालाविक्षुब्धः विस्तीर्णो जलनिधिः। ऊर्मिमाला-संघर्षेण आकाशकृतजयध्वनिरिव निरन्तरं महान् शब्दोऽजनि।

## सचिवैः सह रावणस्य संमन्त्रणम्

'एकाकी हनूमान् समग्रलङ्काविध्वंसं विधाय प्रयातः' इत्यव-लोक्य रावणः लज्जितः चिन्तितश्च सन् मन्त्रणासभामाहूयोक्तवान्—'कश्चिद्दूतः आगत्य पुरीध्वंसं कृतवान्। सीतामवलोक्य तया सह गुप्तपरामर्शं च विधाय स प्रयात इति युष्माभिरवलोकितमेव। इदानीं रामः असंख्यसेनां गृहीत्वा लङ्कामाक्रमितुमागतः। तत्प्रतिकारार्थं यत्कर्तव्यं तत्सर्वैरपि ऐकमत्येन स्थिरीकरणीयम्।'

रावणवचनमाकर्ण्य मन्त्रिणः सहुंकारमब्रुवन्—'देव! भवांस्तु त्रिलोकी विजेता—समरे रामाद्भयस्य कोऽवकाशः भवता तु कुबेरमपि विजित्य पुष्पकरथं आनीतः, ब्रह्मणः वरफलस्वरूपं यमोपर्यपि विजयः प्राप्तः। वरुणोऽपि त्वत्पुरतः प्रणतवान्। दानवः मयः भीतः सन् भवते स्वकन्यां समर्पितवान्। कस्माद्भयं भवतः? अस्माकमवज्ञया

एव हनूमान् किञ्चिदनिष्टं कर्तुं समर्थोऽभूत्। भवदाज्ञया वयं त्रिभुवनमपि जेतुं पारयामः।'

सचिवानां वचः समाकर्ण्य कुम्भकर्णोऽगादीत्—'हे राक्षसराज! त्वया यत्किमपि कार्यते तेन तव सवंशनिधनमनिवार्यम्। भाग्येनैव त्वं सीताहरणसमये रामस्य दृष्टिपथविषयो न जातः। रामश्चेत्त्वामद्राक्षीत् तर्हि तव प्राणरक्षाऽसम्भवा स्यात्। न खलु रामः मानुषः। स साक्षादव्ययो नारायणः। रामपत्नी यशस्विनी सीता च स्वयं भगवती लक्ष्मीः। अजानता त्वया सीताहरणरूपमनुचितं कार्यं विहितम्। अस्माभिः सह परामर्शोऽपि न कृतः। तथापि त्वदर्थं सति प्रयोजनेऽहं प्राणपणेन शत्रुसंहारं करिष्यामि; आश्वस्तो भवेः। त्वमस्माकं शासकःपूजनीयश्च।'

आकर्णितकुम्भकर्णवचनः इन्द्रजित् सस्पर्धमाह—पितः! मामनुमन्यस्व, रामलक्ष्मणसुग्रीवान् यूथपदतिभिः सह सर्वानपि मुहूर्तमात्रेण विनाश्य पुनः भवच्चरणवन्दनं विधास्यामि। निश्चिन्तो भवतु भवान्।

## विभीषणरावणसंवादः

सर्वेषां दर्पोक्तिमाकर्ण्य सुधीः श्रेष्ठः विभीषणः रावणचरणावभिवाद्य दीप्तस्वरमगादीत्—'राजन्! कुम्भकर्णः, इन्द्रजित्, महापार्श्वः महोदरः निकुम्भः, कुम्भः अतिकायो वा कोऽपि रणस्थले रामसम्मुखे स्थिरो भवितुं न शक्नुयात्। एते रामस्य बलवीर्यं किमपि न जानन्ति।

भवान् रावन्! सीताभिशापग्रस्तः भवतश्च ततो मुक्तिर्नास्ति। तस्मात्सीतां रत्नादिभिः सम्मान्य, तस्या रामहस्ते समर्पणेनैव भवान्सुखीभवितुं शक्नुयाः। रामचन्द्रज्याविमुक्तनिशितशरनिकरेण लङ्कानगर्या वीरशून्य-भवनात्पूर्वमेव जानक्याः ससम्मानं रामचन्द्रहस्ते समर्पणमेवोचितम्। नो चेत्सुरश्रेष्ठानां कैव कथा? साक्षान्महादेवेऽपि तव रक्षितरि रामहस्तात्तव नाशो निश्चितः। इन्द्रस्य यमस्य वाश्रयं करोतु भवान्, रसातलेवात्म-गोपनं करोतु तथापि रामस्य तीक्ष्णशरजालाद् भवतो मुक्तिरसंभवा। भ्रातृस्नेहवशतः भवतः कल्याणाकांक्षी सन् कथयामि शीघ्रं सीतां प्रत्यर्पय। क्रोधं परित्यज्य भवता धर्माश्रयिणा भवितव्यम्।'

आसन्नमृत्युपथयात्री यथौषधग्रहणार्थमनिच्छुकः भवेत् तथैव रावणोऽपि विभीषणस्य हितवाक्यं नाश्रृणोत्। किन्तु स विभीषणं प्रति अत्यन्तकठोरशब्दानभाषत। अरिणा तथा क्रुद्धविषधरेण वासः वरं किन्तु शत्रुपक्षपातिना आत्मीयेन सह वासः कदापि नोचितः। ज्ञाति स्वभावमहं सम्यक् जानामि। एका ज्ञातिः अन्य ज्ञातेरनिष्टं दृष्टा भवेत्; वंशप्रधानस्य नाशं कामयेत्। विभीषण! यदहं लोकपूज्यः ऐश्वर्यशाली शत्रुनिबर्हणश्च तत्त्वया न सह्यते। 'त्वमीर्षान्वितोसीत्यहं जाने। त्वं भ्रातृस्नेहशून्यः, अनार्यः कुलांगारश्च धिक् त्वाम्! त्वत्सदृशः यद्यपरः कश्चिदेवं भाषते तर्हि तस्य प्राणनाश एव मया क्रियेत।'

## रामसमीपे विभीषणः

रावणस्यैतादृशं कठोरवाक्यमाकर्ण्य विभीषणः पदाहतः चतुर्भिः सचिवैः सहान्तरिक्षमारुह्य सक्रोधं रावणमब्रवीत्—'राजन्! त्वं मम ज्येष्ठः पितृतुल्यश्च किन्तु भ्रान्तमतिः धर्मभ्रष्टश्च। न सोढुं शक्नुयान्तवापमानम्। तव हितार्थं मया न्याय्योपदेश एव कृतः। किन्तु मुमूर्षुर्न शृणोति हितवाक्यम्! त्वमस्मद्गुरुजनः; तवकल्याणार्थं यन्मयाभाषितं तत्क्षमस्व। आत्मानं लङ्कापुरीं च सावधानतया परिरक्ष। स्वस्ति तुभ्यं सुखी च स्याः।' *

निष्क्रान्ते विभीषणे रावणः सरोषं सभां विसृज्य प्रयातः।

## लङ्कायां समरसज्जा

अपरदिने प्रातः रावणः रथमारुह्य राजसभामेत्य मन्त्रिणः सेनापतिं च मन्त्रणार्थमाहूतवान्। सकलेषु उपस्थितेषु रावणः प्रहस्तमब्रवीत्—'यत् सुशिक्षितं चतुरङ्गबलं तवाधीनमास्ते तदखिलं नगररक्षार्थं नियोजय। ततः मन्त्रिणः लक्ष्यीकृत्योक्तवान्—'महा-

---

* एकस्मिन् रामायणे दृश्यते—रावणः विभीषणं पदाघातेनाताडयत्। पुनः कुत्रापि रामायणेऽवलोक्यते। रावणः शस्त्राघातेन विभीषणस्य शिरश्छेदार्थमुद्यतः। तेनैव च विशेषतयावमानितः सन् विभीषणः रावणमत्यजत्।

संकटकाल उपस्थित: ; अत एव प्रियाप्रिये, सुखदुःखे, विपत्सम्पदौ, सर्वमपि युष्माभिर्ज्ञातव्यम् । विभीषणोऽपि अस्मान् विहाय शत्रुपक्षे मिलितः । अस्यामवस्थायां युष्माभिः परस्परं सम्मन्त्र्य कार्यं स्थिरीकर्तव्यम् । अहं युष्माकं सर्वेषामपि सहायमभिलषामि । युष्मत्प्रयत्नैरेव मया एतावत्समृद्धिलाभः कृतः । अहं दण्डकारण्यतः रामस्य प्रियभार्यामपहृत्य आनीतवान् परं सा कथमपि मां स्वीकर्तुमनिच्छुका * तया

---

* वाल्मीकिरामायणे प्राप्यते—रावणः ब्रह्माभिशापभयात् सीतोपरि बलात्कारपराङ्मुख आसीत् । किंवदन्ती श्रूयते—पुञ्जिकस्थला नाम अप्सरसः आकाशमार्गेण ब्रह्मणः समीपं गन्तुं प्रस्थिता । रावणः तां बलाद्विवसनामकार्षीत् । सैव दिव्यस्त्री ब्रह्मणः समीपमभ्येत्य अभियोगं कृतवती तदैव ब्रह्मा सक्रोधं रावणं शशाप—'अद्य प्रभृति चेत्त्वं बलात्कामपि नारीमवमन्यसे तर्हि तत्क्षणमेव तव मस्तकं शतधा विदीर्णं भविष्यति । एतदभिशापभयेनैव रावणेन सीतोपरि बलप्रयोगो न विहितः ।

पापः दण्डात् भीतः सन् पापकार्याद्विरतः न भवति । वर्तमानसमये भविष्यति च सर्वे दण्डभयग्राह्यं मत्वैव दुष्कर्मपरा जायन्ते भविष्यन्ति च—एतदेव जगति विलोक्यते नो चेत्तर्हि नियमाः न्यायालयाः, नगररक्षकाः, कारागाराः नरकादिभयं च इत्येतेषां न स्यात् पापकार्यप्रवृत्तिरेतादृशी प्रबला विद्यते यत्

रामस्य प्रतीक्षायामेकवत्सरात्मकः समयः अभिलषितः। मयापि तस्यै सम्मतिः प्रदत्ता। रामः सुग्रीवसैन्येन कथं सागरमुत्तीर्य आयास्यतीति न जाने। किन्तु कर्मगतिर्ज्ञातुं न शक्यते। पश्यत, एकमात्र रामदूत आगतः सन् लङ्कायां कीदृशीं क्षतिं विधाय प्रयातः। अतः युष्माभिरेतादृशी मन्त्रणा कार्या येन रामपत्न्याः प्रत्यर्पणमपि कर्तव्यं न भवेत् दशरथपुत्रद्वयमपि 'प्रणष्टं स्यात्।'

---

सर्वानपि दण्डप्रकारानुपेक्ष्य स्वीकृत्य वा नरघातका नृहत्यातः शिथिला न भवन्ति। विशेषतः—इन्द्रियप्रवृत्तयः एतावद्बलवत्यः सन्ति यदस्मिन्विषये, विश्वामित्रप्रभृतयः ऋषयोऽपि स्वपराजय स्वीकारपरा बभूवुः; तेषामपि तपो भङ्गोऽजायत। पश्चात्तापतप्ताश्च ते पुनरपि कठोरतपः प्रसिता अजनिषत। अत एव ब्रह्मणः अभिशापं स्मृत्वा रावणः यत् वर्षपर्यन्तं प्रतीक्षा परः जातः तेन विस्मिता वयम्। प्रायः अन्यदपि कारणं भवेत् येन सीतां निर्जने प्राप्यापि रावणः तदुपरि बलात्काराद्विरतोऽभूत्। पुराणादिषु अवलोक्यते—रावणः रामहस्तेन मृत्युमिच्छन्नेव सीतापहरणं कृतवान् तथा 'तस्य हस्तेन मृतः मुक्तिलाभं करिष्यामि' इति कृत्वैव तां न प्रत्यर्पितवान्।

अपरस्मिन् रामायणेऽवलोक्यते—रावणः सीतावर्जं कामयन्यां स्त्रियं बलान्नापहृतवान्। देवगन्धर्वऋषिकन्या राजकन्या वा सर्वा अपि विमृदिता स्वयं मृता वा भूत्वा रावणाङ्कशायिन्यो अभूवन्।

महाबलः महापार्श्वः कृतसिंहनादोऽब्रवीत्—'महाराज! भवानेव सर्वेषां स्वामी; भवान् शत्रुमस्तकोपरि पादन्यासपूर्वकं वैदेहीमुपभुनक्तु। कुम्भकर्णः इन्द्रजिच्चवज्रधर—इन्द्रनिवारणेऽपि समर्थौ। सामदानभेदाख्यमुपायत्रयं परित्यज्य दण्डमेव श्रेष्ठोपायः इति मन्यामहे।' प्रहस्तः सदम्भमुवाच—'वयं देवदानव यक्षगन्धर्वोरगेषु कस्मादपि न भीताः, रामादेव कथमस्माकं भयं स्यात्?'

मन्त्रिणां सेनापतीनां च वचनं निशम्य उग्रस्वभावो रावणः सभ्रुकुटिभङ्गमुवाच। यूयं रामस्य समुचितदण्डविधानार्थं प्रस्तुता

---

रावणः एतादृशः श्रीमान्, तपो बलवीर्य सौभाग्यवान्, बुद्धिरूप-यौवनसम्पन्नः ऐश्वर्यवांश्चाभूत् यत् रमण्यः तं पतिरूपेण अङ्गीकर्तुं 'अहोभाग्य'मिति मेनिरे। राजानः अग्निसाक्षिकं रावणहस्ते कन्यादानं कृतवन्तः।

अवश्यमेव रावणस्य युगे राज्ञां बहुपत्नी ग्रहणं निन्दनीयं नाभूत्। रावणसमकालीनस्य पुण्यवतो दशरथनृपस्यापि सार्धशतत्रयं महिष्यः अभूवन्। केवलं भगवतः रामचन्द्रस्यैव जीवने एतादृश-नियमोल्लङ्घनं दृश्यते। स समाजतः एतादृशदुर्नीतिलक्षणप्रोञ्छनार्थं सम्पूर्णजीवनपर्यन्तं एकपत्नीक एवासीत् तथा नारायणांशभूता तस्यान्ये त्रयः भ्रातरोऽपि ज्येष्ठभ्रातुरादर्शमनुसृत्य एकपत्नीव्रतेनैव समतुष्यत्।

भवत, तथा प्रत्येक सेनापतये सैनिकाय च प्रभूत खाद्यवस्त्रादिकस्य वेतनस्य च प्रदानेन सन्तोष्य युद्धार्थमुद्यता तिष्ठत। रामलक्ष्मणाभ्यां सहितं सुग्रीवस्य सैन्यमस्तित्वशून्यं कर्तव्यम्।

श्रुतरावणादेशा वीरगणाः सिंहनादमकार्षुः रणभेर्यश्च दध्वनुः।

## विभीषणस्य राज्याभिषेकः

लङ्कां परित्यज्य विद्युत्कान्तिर्विभीषणः सत्वरं चतुर्भिः सशस्त्रवर्म धारिभिः मन्त्रिभिः सह * समुद्रतीरे रामलक्ष्मणसमीपमुपस्थितः। तानवलोक्य सुग्रीवोऽगादीत्—'एते ध्रुवमस्मान्हन्तुमागताः।' तेन सैनिका सावधाना जाताः। सागरस्योत्तरतीरमागत्य विभीषणः निर्भयमात्मपरिचयं दत्वा रामचन्द्रदर्शनार्थं प्रार्थयामास।

सुग्रीवः रामलक्ष्मणसमीपं गत्वा सशस्त्रस्य सानुचरस्य विभीषणस्यागमनं श्रावयित्वोक्तवान्—'अस्मच्छत्रोः रावणस्य भ्राता विभीषणः चतुर्भिर्वर्मधारिसचिवैः सहागतः तेषां वध एवोचितः इति मन्ये। राक्षसा मायाविनः नातस्ते विश्वासपात्रम्।'

हनूमत्प्रभृतिप्रधानान् रामः जगाद—'श्रुतं युष्माभिः स्वनृपतेर्वचनम्? इदानीमस्मिन्विषये स्वकीयमतामतमुच्यताम्।

---

* 'कम्ब'रामायणानुसारं बिभीषणस्य चतुर्णां सचिवानां नामानि—'अनल', 'अनिल', 'हर', संपाती चेत्यासन्।

सेनाध्यक्षाः प्रत्यूचुः—'राम! न तव किमप्यज्ञातम्। सुहृज्ज्ञानेनास्मान्संमानितान्कर्तुमेव भवता अस्मन्मतं ज्ञातुमभिलषितम्; भवतः एते बुद्धिमन्तः विचक्षणाश्च सचिवा विद्यन्ते ते प्रष्टव्याः।' एतदाकर्ण्य अंगदोऽब्रवीत्—'विभीषणोपरि सहसा विश्वासो नोचितः। तस्य गुणदोषविचारं विधायैव ग्रहणमुचितम्।' शरभोऽब्रवीत्, 'चरं प्रेष्य तत्प्रतीक्षा कर्तव्या।' जाम्बवानुवाच—'अस्माकं महतः शत्रोर्भ्रातायम्। विभीषणः एतादृशसमयेऽत्रोपस्थितः अतः स शंका-स्थानम्।' मैन्दोऽभाषत—'सकौशलं मिष्टवचनपूर्वकं प्रश्नैः तस्यागमनस्योद्देश्यं ज्ञातव्यम्।'

हनूमतोक्तम्—'प्रभो! भवतः सचिवैर्यदुक्तं तदहं न समर्थ-यामि। विभीषणः असमये वा नागतः। स रावणस्य दौरात्म्यं भवतः विक्रमं च विचार्यैव समायातः। तदुद्देशविषये कमपि संदेहं विना अस्माभिस्तत्स्वीकार एव उचित इति मन्ये।'

सुग्रीवो व्याजहार—'विभीषणः साधुरसाधुर्वा भवतु। स यस्माद्विपत्काले स्वभ्रातरं विहाय समायातः ततः तत्स्वीकारः न सुसुचितः।

रामस्तदानीं स्मितमुखो जगाद—'सुग्रीवः शास्त्रज्ञः वृद्धश्रवा न चेत्तर्हि एतादृशं वचनं न ब्रूयात्। किन्तु पारिवारिक सामाजिक राजनैतिकाद्यनेकगुह्यकारणवशतः राज्ञां भ्रातृविरोधः सम्भवेदित्यहं

जाने। ज्ञातिजं समीपात्मीयपुरवासि च एतच्छत्रुद्वयमेव संटकाले उपस्थितं सत् हानिकरं भवेत्। विभीषणेन सह नास्माकं ज्ञातिशत्रुता; स लङ्काराज्येच्छयैवात्रागतः।'

सुग्रीवस्तथाप्युक्तवान्—'अहं तु मन्ये विभीषणः रावणस्य चरः अस्मान्हन्तुमायातः।

राम उवाच, 'सखे! विभीषणः सदुद्देशेनं अन्यथा वा समायातो भवेत् नास्माकं कामपि क्षतिं कर्तुं समर्थः। यदीच्छेम तर्हि क्षणार्धादेव तान्सर्वान्संहरेम। मया तु विभीषणायाभयदानं कृतम्। अपि च घोरशत्रुरपि शरणागतियाच्ञां कुर्वाणः रक्षितव्य आस्ते। त्वं विभीषणाय अभयं श्रावयित्वा तं मत्समीपमानय। कोऽपि शरणागतः एकवारमपि 'अहं तव शरणमागत' इति चेद् ब्रूयात तर्हि सर्वप्राणिभ्यः चिरं तस्याभयं प्रतिश्रृणोमि इदमेव मम व्रतम्।'

रामवचनमाकर्ण्य सुग्रीवः सानुचरं विभीषणाय अभयं श्रावयित्वा तं रामसमीपमानीतवान्। विभीषणः रामस्य चरणमभिवाद्याब्रवीत्—'अहं रावणस्यानुजः। मया स्वाग्रजः सीताप्रत्यर्पणपूर्वकं भवता सह शत्रुतां विहातुमुपदिष्टः ततस्तेनाहं अत्यधिकमपमानितः। तेन मया लङ्कां धनसम्पत्तिं परिजनवर्गं च परित्यज्य भवच्चरणयोः अनन्यशरणं स्वीकृतम्। अस्मज्जीवनं सुखसम्पदश्च सकलमपि भवदधीनम्। रक्षस्व माम्।'

रामः विभीषणं सान्त्वयन् सस्नेहमब्रवीत्—'सर्वथा मङ्गलमस्तु तुभ्यम्। मया त्वं दत्ताश्रयोऽसि। त्वया लङ्काबलाबलं वर्ण्यताम्।

विभीषणेनोक्तम्—'रावणः ब्रह्मणः वरेण सर्वप्राणिनामवध्यः। मध्यमभ्राता कुम्भकर्णः विक्रमे इन्द्रतुल्यः। सेनापतिः प्रहस्तः कैलासे मणिभद्रं पराबभूव। इन्द्रजित् अग्निवरदानेन अन्यैरजेयः अदृश्यश्च योद्धुं समर्थः। महोदयमहापार्श्व अकम्पनप्रभृतयोऽनेके दुर्धर्षसेनापतयश्च सन्ति। रावणस्य सैन्यसंख्या दशसहस्रकोटयः। स महाक्रोधी विक्रमशाली च।

रामोऽब्रवीत्—'अहं रावणं हत्वा त्वां लङ्काराज्येऽभिषेक्ष्यामि। स्वभ्रातृनामभिः शपथं कृत्वा श्रावयामि—रावणः पाताले ब्रह्मणः आश्रये वा यत्र कुत्रापि तिष्ठतु तस्य वधं विना नाहं अयोध्यां प्रत्यावर्तिष्ये।'

विभीषणः रामचरणावभिवाद्योक्तवान्—'अहं लङ्काजये भवतः यथाशक्ति सहायप्रदानं विधास्यामि।'

रामः विभीषणमालिङ्ग्य लक्ष्मणमब्रवीत्—'प्रसन्नोऽस्मि विभीषणस्योपरि। अस्मत्प्रसन्नताफलमधुनैव तेन द्रष्टव्यम्। त्वया शीघ्रं समुद्रजलमानीय विभीषणस्याभिषेककार्यं सम्पादय।'

रामादेशानुसारं लक्ष्मणस्तत्क्षणमेव सर्वेषां समक्षं विभीषणं लङ्काराज्यपदेऽभिषिषेच *। जयध्वनिना सर्वा अपि दिशः प्रतिनादिताः।

अस्मिन्नेवसमये रामः सागरतीरे कृतसैन्यसमावेशः अजानात्—रावणः शुकाभिधं दूतं प्रच्छन्नवेशेन रामस्य बलाबलनिर्णयार्थं सैन्यभेदोत्पादनार्थं च प्रेषितवान्। शुक आगत्य सुग्रीवमगादीत्—'त्वं तु लङ्केश्वरस्य भ्रातृतुल्यः'। अनेन संदेशेन तेनाहं त्वत्समीपं प्रेषितः—'त्वं महावंशजातः, किष्किन्धाया अधिपतिः अस्माकं च भ्रातृसमः। मया तु तव किमपि अनिष्टं न साधितम्—किमर्थं तर्हि त्वं मया सार्धं विरोधं विधाय समागतोऽसि। मया रामस्य भार्यापहृता। तेन किं तवानिष्टम्? त्वया ससैन्यं किष्किन्धां प्रति निष्कण्टकराज्योपभोगः कर्तव्यः। लङ्काजयार्थं वृथाशक्तिक्षयो न विधातव्यः।'

---

* कम्बरामायणे प्राच्य उक्तम्—रावणः विभीषणस्य दुरभिसन्धिं ज्ञात्वोवाच—'त्वं लङ्कायाः राजा भवितुमिच्छसि; अतः रामपक्षपातित्वपरस्त्वम्। त्वां त्यक्तवानहम्।' रामचन्द्रः विभीषणमालिङ्ग्य जगाद—'वयं चत्वार भ्रातरः आस्म। गुहेन सह पञ्च; सुग्रीवं प्राप्य षट्, त्वां च गृहीत्वा सप्तभ्रातरो जाताः। अस्मत्पिता दशरथोऽपि धन्यः। विभीषणः शिरसिकृतरामचन्द्रचरणः कथितवान्—'अयमेव मे राज्यमुकुटः।'

सुग्रीवः दूतमुवाच—रावणं ब्रूहि । 'न त्वमस्माकं मित्रं, न प्रियः नापि दयापात्रम्; त्वं खलु रामस्य रिपुः अत एव बालीव वध्यः। वयं त्वां सवंशं ध्वंसयिष्यामः ।'

सैनिकानां हस्तात् कथमपि लब्धमुक्तिः शुकः लङ्कां प्रत्यागत्य सर्वमपि रावणसमीपं निवेदयामास ।

## सागरातिक्रमणस्यायोजनम्

रामः सकलानाहूयाभाषत—'वयं सेनया सह कथं सागरातिक्रमं कुर्याम' इत्यस्य उपायनिश्चयः क्रियताम् ।

विभीषणः प्रत्युवाच—'राम! समुद्रस्य शरणं गन्तव्यम्। समुद्रं प्रसाद्य प्रशाम्य च सेतुबन्धनेन सागरोत्तरणं कार्यम्; अन्योपायेन लङ्काप्रवेशोऽसम्भवः ।

लक्ष्मणः सुग्रीवादयश्च सर्वेऽपि विभीषणस्य सुपरामर्षमनुमोदितवन्तः । तत्क्षणमेव रामः समुद्रतीरमागत्य तदाराधनार्थमुद्यमशीलो बभूव । शिरसि कृताञ्जलिपुटश्च संकल्पयामास—इमं सागरमुत्तरामि तं शोषयामि वा । दिनत्रयं रात्रित्रयं चेत्थं सागरतीरेऽवस्थितोऽपि समुद्रस्य किमप्युत्तरमनवाप्य रामः सावेगमुक्तवान्—'लोकः दण्डकर्तारमेव सम्मानयन्ति प्रसादननीतिमवलम्ब्य कीर्तिजययशांसि कान्यपि न लभ्यन्ते' । पौरुषमेवाश्रये—'सौमित्रे! अस्मद्धनुर्बाणौ

आनीयेताम् । समुद्रशासनं करिष्यामि—शोषयामि तम्; येन सैनिकाः पादचारिणं एव पारं गमिष्यन्ति ।' इत्युक्त्वा रामः रुद्रमूर्त्याज्यानिर्घोषं कृतवान् । अयं शब्दः सागरवक्षसि प्रतिध्वनितः । तदानीमुदयाचलाद्दिवाकर इव सागरजलराशिं भित्वा मूर्तिमान् कृताञ्जलिः राममगादीत्—'हे सौम्य! 'क्षिति जलतेजोमरुद्व्योमानि' इमानि पञ्च भूतानि चिरकालं स्वस्वपथमेवानुसरन्ति, नास्य भवति व्यतिक्रमः । अहं तु स्वभावत एव अगाधः दुरुल्लंघनीयश्च । येनमामतिक्रम्य गच्छेः तदभिदधामि श्रूयताम्—मम योंऽशः अगभीरः यदा च जलं शान्तं तदा तस्मिन्नंशे सेतुनिर्माणं क्रियताम् । सेनापतिर्नलः विचक्षणः स्थपतिः । स मत्पृष्ठोपरि सेतुनिर्माणं करोतु । सैनिकेषु पारगमनपरेषु अहं शान्तः सन् स्थलमिव स्थिरः स्थास्यामि* । मामतिक्रमितुं नास्त्यन्यः कोऽप्युपायः ।'

---

* व्यासदेवरचितस्कन्दपुराणे लभ्यते—सागरातिक्रमविषये सुग्रीवादिसहचरा महाबलं राममब्रुवन्—विविधनौकाभिः प्लवैश्च सागरः उत्तरणीयः ।' तदा विभीषणोऽभाषत,—'राघवनृपते! सागरशरणापन्नो भवेः ।' विज्ञविभीषणवचनमाकर्ण्य रामः सैनिकान्सम्बोध्योक्तवान्—'केनापि रूपेण प्लवद्वारा दुस्तरसमुद्रातिक्रमणं न शक्यम् । एतावन्महत्सैन्यवाहनार्थं उपयुक्तनौकालाभेऽपि असम्भवः । युष्माभिरेव विचारणीयं यदि नौकासंग्रहः कर्तव्यो भवेत् स तु

## चक्रतीर्थे शिबिरस्थापनं सेतुरचनाच

सागरस्योक्तिः सर्वैर्विभीषणादिभिरनुमोदिता। सेतुनिर्माण-स्थाने निर्धारिते रामादेशेन सेनापतिः नलः सैनिकानां सहायेन निर्माणकार्यमारब्धवान्। हनूमदादिवीराः असंख्यवृक्षान् छित्वा महतः पाषाणांश्च यन्त्रसहायेनानीतवन्तः। सैनिकेषु केचित्सूत्राणि केचिच्च मानदण्डान् धारयामासुः। इत्थं समारब्धमासीत्सेतुनिर्माणकार्यम्। प्रथमदिने चतुर्दशयोजनानि, द्वितीयदिने विंशतिः, तृतीयदिने

---

वणिजामनिष्टकरणेनैव सम्भवेत्। तदप्यस्माभिः कथं विधीयेत? अस्माकं विशालसैन्यं शत्रुपक्षः लब्धच्छिद्र एव प्रध्वंसितुं शक्नुयात्।'

रामचन्द्रः प्रायोपवेशनेन स्तवादिना समुद्रं प्रसादयितुमसमर्थः सन् अन्ते धनुर्बाणहस्तः शतशः शरजालेन तमाच्छाद्य तं शोषयितुं कृतसंकल्पोऽभूत्। तदानीं समुद्रः देवताभीतः रामसमीपमुपस्थितः; विविधस्तुत्या च कृताञ्जलिरुक्तवान्, 'नाहं शुष्कतां नेतुं शक्यः। तेन जगतः महती क्षतिः स्यात्। अत एव भवान्ममागभीरांशे सेतु निर्माणं करोतु। शिल्पविद्याकुशलो नलः अनेककाष्ठशिलादीन् ममोपरि प्रक्षिपतु; तानहं पृष्ठे धारयिष्यामि। तेन भवद्यात्रार्थं सेतुः प्रस्तुतो भवेत्।'

एकविंशतिः, चतुर्थदिने द्वाविंशतिः पञ्चमदिने त्रयोविंशतियोजन-परिमितः सेतुर्निरमीयत *

---

* वाल्मीकिरामायणस्य रामजीवनेतिहाससत्त्वेऽपि वस्तुतः तत्काव्यम्। काव्ये रूपकातिशयोक्ति प्रभृतयोऽलङ्काराः अलौकिक-घटना समावेशश्चास्ते। तासां घटनानां कविमनसि यादृशं स्पन्दनं समुत्थितं—तदेव सामञ्जस्यपालनपूर्वकं तेन वर्णितम्। अत एव 'वाल्मीकिरामायणस्था यावद्घटना ऐतिहासिकदृष्टया ग्रहणयोग्या' इति स्वीकरणे अनेकेऽन्तरायाः सन्ति। तादृशान्तरायकल्पनया प्रयोजनमपि नास्ति।

रामेण सार्धं खननकार्यकारकाः, यन्त्राणि, पूर्तविभागविशेषज्ञाश्चासन् (miners and sappers)। रामेण दृष्टम्, सागरः यादृशः उपरिष्टाद् भीषणः गभीरश्च प्रतिभाति वस्तुतः न स तथा। अतः तेन सागरस्य अगभीरांशे सेतुनिर्माणव्यवस्था अकारि। एतदेव तथ्यं कविमनसि सरसरूपकच्छन्दःसुप्रतिभातमासीत्।

वाल्मीकिरामायणगणनानुसारं नलनिर्मितः सेतुः शतयोजनदीर्घः अर्थात् अष्टशत क्रोशार्धापेक्षयापि (८०० miles) दीर्घतरः आसीत्। वाल्मीकिना योजनशब्दः अत्र कस्मिन्नर्थे प्रयुक्त इति वक्तुं दुष्करम्। यतः भारतभूमेः [illegible] लङ्कातट भूमिः ('सेतुबन्ध-

नलस्येदं सेतुनिर्माणकौशलं अद्भुतपराश्चावलोक्य सर्वेऽपि चमत्कृताः। सागरस्योपरि सीमन्तरेखयेव शोभमानेनानेन सेतुपथेन सैनिकाः दलशः सागरमुत्तीर्य लङ्कायामवतीर्णाः। सेतुपथेनावतरणार्थं

---

रामेश्वरात् 'टेलाईमानारपर्यन्तं जलमार्गेण वर्तमानेन केवलं त्रिंशत् कोशार्धदूरा। अस्मिन्नंशे द्वात्रिंशत्कोशार्धपरिमाणदीर्घं सेतुं बद्ध्वा रामचन्द्रस्य वाहिन्या लङ्काक्रमणमतीव महत्त्वपूर्णघटना। वर्तमानयुगे यान्त्रिकोन्नतिसमयेऽपि कस्या अपि समृद्धजातेः स्थपतेः पूर्तविभागस्य च सम्मिलितप्रयत्नेनापि केवलं दिनचतुष्टयमध्ये समुद्रोपरि एतावन्महत्त्वस्यापि सेतुनिर्माणकार्यं सम्भवेन्न वा इति संदेहास्पदम्। एतेन 'श्रीरामचन्द्रः प्रत्यक्षभगवान् आसीत्' इत्यत्र नास्ति कोऽपि संदेहावकाशः। यतः एकमात्र परमेश्वर एव असम्भवमपि ससम्भवं कर्तुं समर्थः। नलश्च पुनः एकः श्रेष्ठः स्थपतिरासीत्—इत्यपि निःसन्देहम्। एतदर्थं स विश्वकर्मणः पुत्र उच्यते। अध्यात्मरामायणे पठ्यते—रामचन्द्रः सेतुबन्धनात्पूर्वं देवतानां प्रसन्नता लाभार्थं लोकहितार्थं च सागरतीरे 'रामेश्वर' शिवस्थापनां विधाय पूजासमाप्त्यनन्तरमुक्तवान्—'सेतुबन्धदर्शनपूर्वकं ये रामेश्वर शिवं प्रणमेयुः तेऽस्मदनुग्रहेण ब्रह्महत्या प्रभृति पापेभ्यः मुक्तिलाभं करिष्यन्ति। सेतुबन्धे स्नात्वा रामेश्वरशिवदर्शनेन तथा वाराणसीतः आनीत गङ्गाजलेन संकल्पपूर्वकं रामेश्वरस्याभिषेकेन च मानवः ब्रह्मलाभसमर्थः

सैन्यस्य दिनत्रयं रात्रित्रयं च व्यतीतम् । शत्रुप्रतिरोधार्थं विभीषणः ससचिवः अपरपारे गदाहस्तः सावधानतया स्थित आसीत् ।

---

भवेत् । जनश्रुतिरास्ते—रामचन्द्रः समुद्रतीराद्वालुकामानीय शिवलिंगरचनां च कृत्वा स्वयमेव शिवपूजां कृतवान्—ततः वालुकानिर्मितं शिवलिङ्गमेव कठिनीभूय प्रस्तरनिर्मितशिवलिङ्गमिवजातम् । रामचन्द्रपादस्पर्शेन पवित्रं सेतुबन्धं हिन्दुमात्रस्य कृते अद्य महातीर्थं परिणतम् । रामचन्द्रप्रतिष्ठितः रामेश्वरशिवः युगयुगान्तरपर्यन्तं सहस्रशो नरनारीभिः पूजितः सन् श्रीराममहिमघोषणां कुरुते ।

अब्दरामायणे (१) रामः रावणवधस्य प्रतिज्ञां विधाय मार्गशीर्षकृष्णाष्टम्यां (उत्तराफाल्गुनी नक्षत्रे विजययोगे) ससैन्यं यात्रामकरोत् । (२) किष्किन्धातः समुद्रतीरपर्यन्तगमने सप्तदिनानि व्यतीतानि आग्रहायणकृष्णनवमीतोऽमावास्यापर्यन्तम् । (३) सेनानिवेशे जाते समुद्रोल्लंघनोपायविचारार्थं दिनचतुष्टयवासानन्तरं पौषशुक्लचतुर्थ्यां रामेण सह विभीषणस्य मेलनम् (४) विभीषणस्य परामर्शेन समुद्रतरणविचारः पौषशुक्ल पञ्चमी (५) समुद्रप्रसादनार्थं मतान्तरेण रामेश्वरशिवस्थापना—शिवपूजार्थं रामस्य प्रायोपवेशनम्—पौषशुक्लषष्ठीतः नवमी पर्यन्तम् (६) नीलकृतसमुद्रबन्धनं पौषशुक्लदशमीतः त्रयोदशीपर्यन्तं [illegible] ।

रामलक्ष्मणौ सुग्रीवश्च शिविकारूढा सेतुमार्गेण सागरमतिक्रम्य परतीरं गताः। तदनन्तरं रामः शास्त्रमार्गानुसारं सैन्यविभागानादिश्योक्तवान्—'नीलेन सहांगदः वाहिन्या मध्यभागे तिष्ठतु, ऋषभः गन्धमादनश्च वामदक्षिणपार्श्वरक्षापरौ भवताम्। अहं लक्ष्मणश्च पुरोभागे स्थास्यावः। जाम्बवान् सुषेणः वेगदर्शी च एते त्रयः मध्यभागरक्षाभरा भवेयुः। राजा सुग्रीवश्च सर्वेषां पृष्ठतः स्यात् *

## रावणस्योत्कण्ठा रामसैन्यदर्शनञ्च

चारमुखेन रामचन्द्रस्य लङ्कायां ससैन्यमवतरणं लङ्काबहिर्देशे सैन्यनिवेशप्रवृत्तिं च प्राप्य रावणः अत्युच्चप्रासादशिखरमारुह्य रामसेना सन्निवेशमवलोकयामास। तन्मन्त्रिणौ शुकसारणौ तं (रावणं) सुग्रीवाङ्गदनीलजाम्बवप्रभृतियूथपतीन् रामलक्ष्मणौ च दर्शयित्वा शत्रुपक्षस्य बलाबले यशश्च वर्णयामासतुः। तदाकर्ण्य रावणः उद्विग्नमानसः मन्त्रिणस्तिरस्कृत्य शार्दूलप्रभृति कतिपयांश्च-

---

*कस्यापि रामायणस्य मतेन—प्रथमं रामचन्द्रेण सेतुरतिक्रान्तः। सः लक्ष्मण–हनूमत्–विभीषण–सुग्रीवाङ्गदप्रभृतिविशिष्ट यूथपतिभि.सह प्रथमं सेतुमतिक्रम्य सुवेलपर्वताधित्यकासु लङ्कायां सेनानिवेशं विहितवान्। एतेन रामचन्द्रस्यात्मविश्वासः, अजेयं साहसं अमितशक्तिश्चेतेषां गुणानां परिचयः प्राप्यते।

रानुक्तवान्—'युष्माभिः रामलक्ष्मणसुग्रीवाणां मन्त्रिणां च चेष्टितानि अवलोक्य रामसेनाया अस्त्रशस्त्राणि बलाबले च याथार्थ्येन निरूप्य मां प्रति निवेदनीयानि।'

शार्दूलः सानुचरं प्रच्छन्नः दृष्टवान्—'रामलक्ष्मणसुग्रीवाः विभीषणश्च अमितसेनाबलयुक्ताः सुवेलपर्वतसमीपं सेनानिवेशं कृतवन्तः' इति। विभीषणः चरान् ज्ञात्वा गृहीतवान्। सैनिकाश्च तान् प्रहरन्तः रामचन्द्रस्य समीपमानयामासुः। भीताश्चतेऽब्रुवन्—'वयं रावणाज्ञया भवतां सैन्यबलाबले ज्ञातुमागताः।' रामचन्द्रः सहास्यमब्रवीत्—'साधु। यत्किमपि ज्ञेयं द्रष्टव्यं च तदखिलं पश्यत स्वस्वामिनं चाभ्येत्य कथनीयम्—'यां शक्तिमाश्रित्य त्वं सीतामपाहरः तां शक्तिमिदानीं दर्शय।' अहं शरजालैर्लंकापुरीमाच्छादयिष्यामि। राजा आत्मरक्षां करोतु' इत्युक्त्वा गुप्तचरान्विसर्जयामास।

## रामस्य मायामुण्डम्

चराः रावण समीपं गत्वा तस्मै सर्वं निवेदयामासुः। रावणः* मन्त्रिभिः सह कञ्चित्कालं परामृश्य युद्धविषयकपूर्णनिदेशं

---

*रामायणवर्णितः रावणः रहस्यमयः पुरुषः। वाल्मीकिकविः रावणस्य जन्म जीवनकर्मणी च रहस्यमयमरूपयत्कार्षीत्। पुराणादिषु

प्रदाय च विद्युज्जिह्वाभिधं कञ्चिच्छिल्पिनमाहूयोक्तवान्,—'त्वं माया-बलेन रामशिरः बृहद्धनुर्बाणौ च निर्मायानय।' विद्युज्जिह्वः अतिकुशलतया रावणाज्ञापालनमकार्षीत्, रावणश्च प्रसन्नः सन् शिल्पिनं पुरस्कृतवान्।

---

प्राप्यते—ब्रह्मणः पुत्रः पुलस्त्यः तस्य च पुत्रः विश्रवसः। अस्यैव विश्रवसः मुनेः उरसः सुमालीकन्या निकषायाश्च गर्भतः रावणकुम्भकर्णविभीषणानां जन्म; अत एव रावणः ब्राह्मणवंशोत्पन्नः ऋषिपुत्रश्च। रावणः ब्राह्मणः आसीत् एतस्यानेक प्रमाणानि पद्मपुराणेऽपि प्राप्यन्ते। ब्राह्मण-रावणवधजन्यपापप्रायश्चित्तरूपं अगस्त्यऋषेर्विधानमनुसृत्यैव रामः अश्वमेधयज्ञानुष्ठानपरो बभूव। अर्थात् रावणरूपि ब्राह्मणहत्यापापेन रामोऽलिप्यत।

रावणः कुबेरस्य वैमात्रभ्राता। स ब्रह्मचारी तपस्वी चासीत्। तपसा ब्रह्माणं सन्तोष्य अमरत्ववरं प्राप्तवान् (अमरत्वमिति सापेक्षार्थे प्रयुक्तम्; यतः अमरत्वं केवलं ब्रह्मण एव स्वभावः—सृष्टो जीवः न कदापि अमरः भवितुमर्हति—'जातस्य हि ध्रुवो मृत्युः'—अर्थात् ब्रह्मणः वरेण स देवदानवदैत्ययक्षरक्षः प्रभृतीनामवध्यः दीर्घजीवी चासीत्) वैमात्र भ्रातरं कुबेरं पराभूय रावणेन लङ्का-सिंहासनेऽधिकारः कृतः। उग्रतपः प्रभावेण च शक्तिमवाप्य देवराज-मिन्द्रमपि पराजितवान्। यमेन सार्धमपि तेन युद्धमकारि। रावणः

एतादृश मायाशिरसि प्रस्तुते सति रावणः अशोकवनमागत्य सीतामब्रवीत्—'सीते! मया त्वत्प्रसादनाय अनेकविधः प्रयत्नो विहितः, किन्तु त्वया केवलं ममापमान एव कृतः। त्वया यस्मिन्विश्वास

---

एतादृशः शिवभक्त आसीत् यत् तेन कैलासपर्वतेन सार्धं शिवं लङ्कामानेतुं कैलासमेवोत्पाटयितुं प्रयत्नः कृतः; किन्तु पार्वत्या मानसिकभयमवलोक्य शिवः स्वपादाङ्गुष्ठसंघट्टनेन रावणमपीपिडत्। तदानीं रावणः भीषणार्तनादं कृतवान् येन तस्य नाम 'रावणः' इति जातम्। ततः रावणः सामवेदगानपूर्वकं शिवपार्वत्यौ स्तुत्वाऽतोषयत्' इदमपि पद्मपुराणे प्राप्यते। विष्णोर्द्वाररक्षकौ जयविजयावेव त्रेतायुगे रावणकुम्भकर्णरूपेण जायमानौ भगवतः रामचन्द्रहस्तात् मृत्युं कामयांचक्राते। एतदर्थमेव रावणः सीतापहरणमकार्षीत्।

रावणः केवलमेकः दिग्विजयी योद्धा एव नासीत् (इयं युद्धविद्या तेन देवतानां प्रसादेनासादिता। महादेवेन चन्द्रहासाभिधः एकः कान्तिमान् खड्गः तस्मै दत्तः) स एकः विशिष्टपण्डितोऽप्यासीत्। संहिता पाठः पदपाठः इत्यादिदशविधं वेदपाठं सोऽजानात्; तेनैव तस्य नाम 'दशाननः' 'दशमुखो' वा जातम्। रावणरचित 'पदपाठस्य ऋग्वेद भाष्यग्रन्थस्य च पाण्डुलिपि सम्प्रति अधिगताऽभूत्। स विशिष्टवेदज्ञोऽभूत्। केषांचिन्मतेन प्रथमतया वेदविभागस्तेनैव

द्वयदिनपर्यन्तं मामग्राह्यममन्यथाः स तत्र रामः निहतः; इदानीं त्वं मम वशवर्तिनी भवेः। श्रूयतां निजस्वामिवधवृत्तान्तम्— सूर्यास्तसमये रामः समुद्रतीरे सेनासन्निवेशपरः आसीत्। निशीथे सर्वेषु निद्रितेषु मम सेनापतिः प्रहस्तः ससैन्यं गत्वा निद्रितरामस्य शिरश्छेदं कृतवान्, सर्वं च बलमध्वंसयत्; लक्ष्मणः पलायितः, सुग्रीवस्य ग्रीवा भग्ना,

---

कृतः आसीत्। रावणरचितवैशेषिकं भाष्यस्य उद्धृतयः केषुचिद् ग्रन्थेषु-प्राप्यन्ते। पद्मपुराणं रावणः 'ब्राह्मण' इति कीर्तयति। किं वदन्ती श्रूयते—ब्राह्मणरावणमेघनादवधजनितपापप्रक्षालनार्थं ऋषीणामुपदेशेन रामस्याश्वमेधयज्ञः लक्ष्मणस्य च तपस्या कर्तव्याऽऽसीत्। हृषीकेशस्थो 'लक्ष्मणझूला' 'लक्ष्मणमन्दिरं' च लक्ष्मणतपसः साक्षिणी आसाते। रावणरचितानि अनेकस्तोत्राणि तस्य संस्कृतज्ञानं देवभक्तिं च प्रमाणयन्ति। स एकः प्रसिद्धः वैयाकरणोऽप्यासीत्। किन्तु वाल्मीकि रामायणे तत्प्रभावितान्यग्रन्थेषु च रावणः 'राक्षस' इत्येव वर्णितः। तस्य दशमुखानि, शौर्यवीर्ययशांसि, विंशतिहस्ताश्च तद्युद्धशक्तेरुपमा—यथा सूर्यकिरणा दशदिक्षु प्रसरन्ति तथा। वाल्मीकिरामायणेऽपि केषुचित्स्थलेषु रावणस्य द्वौ हस्तौ एकं च मस्तकं—अर्थात् मनुष्या-कृतिरिव—वर्ण्यन्ते। हरधनुर्भङ्गसमयेऽपि रावणः मनुष्यरूपेणैव मिथि-लायामाजगाम। सीताहरणसमयेऽपि स द्विजवेषेणागतः। वाल्मीकिः रावणं 'कामरूपी' इति वर्णयति।

हनूमतो हनूश्चूर्णीभूता, पट्टिशाघातेन च जाम्बवान् निहतः; अङ्गदः शरजालाच्छन्नः सन् रुधिरवमनपूर्वकं भूतले पतितः; मम सैनिकाः नलनीलसुषेणान् अन्यांश्च यूथपतीन् नाशयां चक्रिरे।' पश्चाद्रावणस्यादेशेन विद्युज्जिह्वः रामस्य मायाशीर्षं धनुर्बाणौ च सीतायै दर्शयामास ।

---

लङ्कायां वेदपाठः यज्ञयागाः मन्दिरेषु देवतापूजनं इत्यादिकमपि आर्यधर्मं वैदिकसंस्कृतिं च सूचयति । हनूमान् प्रथमरात्रौ लङ्कां प्रविष्टः सन् दृष्टवान्—प्रतिमन्दिरं संध्यारात्रिके, स्थाने वेद पाठः इत्यादि प्रचलितम् । उषःकाले वेदपाठेन रावणस्य निद्राभङ्गोऽपि हनूमतावलोकित आसीत् ।

जैनरामायणे रावणस्य मृत्यौ देवी सरस्वती एतावच्छोकसन्तप्ता जाता—यत्सा वेदपाठकरणात् विरताऽजायत । रावणः वेदशास्त्रज्ञानार्थं प्रसिद्ध आसीत् ।

बौद्धरामायणमतेन—रावणस्य वंशक्रमतालिका ज्ञायते—सहस्रग्रीवस्य पुत्रः शतग्रीवः शतग्रीवस्य पुत्रः दशग्रीवः अत एव 'दशग्रीव' इति उपाधिमानम् । दशग्रीवस्य पूर्वावासस्थानमासीत् नागपुरसमीपे । तेन पश्चात् सुवर्णमयी लङ्कायां राजधानी स्थापिता ।

## सीतायाः शोकः सहमरणसंकल्पश्च

सीता तादृशं मायाशीर्षं धनुर्बाणौ चावलोक्य शोकेनाचेतनाभूत्। ततः चेतनामासाद्य सा विलपितुमारेभे—'हा महाबाहो! सत्यव्रतवीर! अद्य ममान्तिमा दुरवस्था। विधवाहम्। पाणिग्रहणसमये त्वया प्रतिज्ञानमासीत्—'त्वया सह धर्माचरणं करिष्यामीति'। तत्स्मृत्वा दुःखितां पत्नीमात्मना सार्धं नयतु भवान्।....रावण! त्वं मां रामशरीरोपरि स्थापयित्वा मारय। पतिपत्न्यौ एकत्रीकुरु। तमहमनुसरिष्यामि।' तदैव काचित्प्रतिहारी आगत्य तया कामपि आवश्यक प्रवृत्तिः श्राविता रावणः तत्क्षणमेव व्यस्तमानसः निर्ययौ।

## सरमाकृतं सान्त्वनम्

रावणे प्रयाते विभीषणपत्नी सरमा आगम्य सीतां सस्नेहमुक्तवती। सखि! रावणस्य सर्वमपि वचनं मयान्तरालात् कर्णीकृतम्। रावणः मिथ्या माया रचनापूर्वकं त्वां प्रभावितां कर्तुमभिलषितवान्। मा भीता भूः। रामः न मृतः। रावणः केन हेतुना त्वरितं प्रयातः—शृणोषि किम्? 'रामः सीतया सह लङ्कामुपगतः' इति वार्तां निशम्य मन्त्रिभिः सह युद्धविषयकपरामर्शार्थं रावणः शीघ्रमयात्। श्रूयतामेतत्—मेघगर्जनमिव भेरीनिनादः समुत्थितः! दृश्यताम्—मत्तमातङ्गाः सज्जिताः अश्वा रथे योजिताश्च; सहस्रशः अश्वारोहिणः

प्रासहस्ता उपस्थिताः ; राजमार्गः भीमकर्मभिः दुर्धर्षसैनिकैः परिपूर्णः। इदानीं भाग्यश्रीः तवोपरिप्रसन्नास्ते। तव स्वामी कमलपत्राक्षो रामः समरविजयी सन् रावणवधपूर्वकं त्वया सह शीघ्रमेव मिलितो भवेत्। देवि! त्वरितमेव द्रक्ष्याम्यहं—त्वं रामाङ्के उपविश्य तद्वक्षःस्थित-मस्तका अश्रुविसर्जनपरा स्याः ; सोऽपि च तव दीर्घामेकवेणीं अनेक-दिवसानन्तरं स्वहस्तेन मोचयिष्यतीति।'

## मन्त्रिणां सीताप्रत्यर्पणस्योपदेशः

सीतामित्थं सान्त्वयन्ती सरमा कतिचित्क्षणकृते राजप्रासादं गत्वा प्रत्यागता सीतामुक्तवती—'रावणस्य वृद्धमन्त्रिणः त्वां स सम्मानं रामाय प्रत्यर्पयितुमुपदिदिशुः ; किन्तु तेन तन्नाकर्णितम्। * महाप्राज्ञः

---

* जैनरामायणानुसारं—सीता विद्याधर रावणस्य मन्दोदर्याश्च कन्या आसीत्। सा कुलध्वंसकारिणी भवेदिति ज्ञात्वा जन्मनः पश्चात् रावणः इमां कन्यां परित्यक्तवान्, एकस्यां मञ्जूषायां च स्थापयित्वा क्षेत्रमध्ये पूरितवान्। कश्चित्कृषकः लाङ्गलचालनसमये कन्यामिमां मञ्जूषायां प्राप्य जनकनृपतेः समीपं नीतवान्। जनकः कन्यां गृहीत्वा तस्याः 'सीता' इति नाम कृतवान्....। अनन्तरं च रामेण सह तस्याः विवाहो जातः।....सीताहरणानन्तरं रावणः यदा सीतां स्ववशे कर्तुं प्रयतितवान् तदा एकस्मिन्दिने मन्दोदरी

मातामहो माल्यवान् रावणमगादीत्—यः राजा विद्यावान् नीति-परायणश्च स ऐश्वर्यशाली भूत्वा शत्रुशासनं करोति। पक्षद्वयस्य वलाबलविचारे कृते रामेण सार्धं सन्धिरेवोचितः इति मन्ये। त्वं सीतां प्रत्यर्पय। एकस्याः स्त्रियः कृते समग्रं राज्यं मा विनाशय। मया नानाविधानि अशुभलक्षणानि अवलोक्यन्ते। रामसदृशः शत्रुः नोपेक्षा योग्यः। रामः सेतुबन्धनं कृत्वा ससैन्यः लङ्काद्वारे

---

सीतापदचिह्नान्यवलोक्य तां निजकन्यां ज्ञात्वा तां बहुविधमसान्त्वयत्। किन्तु रावणः तत्र विश्वासं न कृतवान्।....नारदप्रेरणया रावणः सीतामपाहरत्।....सीतापहरणसमये राजा दशरथः जीवितः आसीत्। तेन स्वप्नेऽदर्शि—रोहिणी (चन्द्रपत्नी) राहुणाऽपहृता इति।....तदव-लोक्य तेन ज्ञातम्—रामस्योपरि एतादृशी विपदापतिता।....ततो दशरथो दृष्टवान्—रावणेन सीता अपहृता इति। जैनरामायणे एतस्मादपि विचित्रतरं वर्णनं दृश्यते।....रामरावणयुद्धे लक्ष्मणेन रावणवधः कृतः। रावणवधप्रस्तावे दिव्यास्त्रादिप्राप्तये रामलक्ष्मणाभ्यां कठोरतपस्याचरणं कृतम्। विजयरामप्रभृतयः रामस्य अष्टपुत्राः। रामः अष्टमः बसुदेवः।....वनवासादागतोऽपि रामः स्वयं राजा नाभूत् अपि तु लक्ष्मणं राजानमकार्षीत् (अर्धचक्रवर्ती) लक्ष्मणस्य शासनकालः अत्यल्पः।...लक्ष्मणस्य मृत्युशोकेन रामः यतिर्भूत्वा वने प्रयातः इत्यादि।

उपस्थितः—एतेनैव रामस्य शक्तिसम्बन्धे तव सम्यक् धारणां उचिता। दम्भमाश्रित्य मा नाशयतु भवान्समग्रामपि लङ्काम्। सीता प्रत्यर्पणेनैव सर्वं सुरक्षितं स्यात्।

माल्यवतः उपदेशं निशम्य रावणः सक्रोधं आरक्तनयनोऽभाषत—'भवान् मम हितकाम्यया शत्रुपक्षबलवीर्यं अतिरञ्जितं कृत्वा यदहितकरं भाषितवान्—तत् सुहृदां कृतेऽनुचितम्। एतेन ज्ञायते ममोपरि भवतः कोपः, अथवा भवान् शत्रुपक्षहितकामी।.... दैववशात् मम असावधानतया अथवा 'रामः कालवशतः नश्येत्' इत्येव स सेतुबन्धनपूर्वकमायातः। तेन भयस्य किं कारणम्! मया प्रतिज्ञायते—ससैन्यो रामः जीवितः न प्रत्यावर्तिष्यते।*

---

* समरनीति कुशलानां रणचातुर्यविशारदानां च मते सेतुबन्धनसमये एव यदि रावणः ससैन्यं रामं सागरतीरेऽवारोत्स्यत् तर्हि अत्रैव युद्धसमाप्तिरभविष्यत्। अथवा यदि सागरातिक्रमसमये एव वानरसैन्यं आक्रंस्यत्—स्यत् तर्हि रामः लङ्काक्रमणसमर्थः न स्यात्। एतस्य एकमात्रप्रमादस्य कारणादेव रावणेन सार्धं लङ्काध्वंसो जातः। (कस्यापि रामायणस्य मते रावणः सेतुबन्धात्पूर्वमेव रामोपरि आक्रमणं कर्तुमभिलाषुक आसीत्। किन्तु सचिवाः तन्नानुमेनिरे।) रावणः स्वयमेवोक्तवानासीत्—

रावणं क्रोधपरमवलोक्य माल्यवान् न किमप्यधिकं जगाद-जयाशीर्वादं विधाय स शनैः शनैः प्रयातः।

तदानीं रावणः प्रवीणाभिज्ञामात्येन सार्धं कृतपरामर्शः लङ्कारक्षार्थं सेनापतीनादिशत्—'प्रहस्तः सप्रभूतरक्षिसैन्यः पूर्वद्वाररक्षां करोतु। महापार्श्वमहोदरौ दक्षिणद्वारे सावधानं रक्षापरौ भवताम्। इन्द्रजित् निजचतुरङ्गसेनया सह पश्चिमद्वारे तिष्ठतु। शुकसारणौ च उत्तरद्वाररक्षाभारं वहताम्।' ततश्च क्षणं चिन्तनपरः सन् उवाच—'नहि, अहं स्वयमेव उत्तरद्वारे स्थास्यामि। विरूपाक्षः असंख्य सैनिकैः सह लङ्कानगररक्षापरो भवेत्।' एतादृशीं व्यवस्थां विधाय सभाविसर्जिता रावणश्च निजप्रासादं गन्तुं प्रस्थितः।

विभीषणः तस्य चतुरः सचिवान् छद्मवेशेन लङ्कां प्रेषयित्वा रावणस्य व्यूहव्यवस्थां बलाबलं च ज्ञात्वा राममब्रवीत्—'प्रहस्तः,

---

तस्यासावधानतयैव रामसैन्यं सागरमुल्लंघ्य लङ्काद्वारे उपस्थितम्। रामस्य विक्रमविषये तत्सेनायाः बलाबलसम्बन्धे च अज्ञानं तथा निजसामरिकशक्तिविषयेऽत्यधिकदर्पश्च रावणमसन्मार्गप्रवृत्तमकरोत्। अथवा दैवगतिर्न केनाप्यतिक्रमितुं शक्यते। एतेनैव तस्यैतादृशी भ्रान्तिरजायत। अर्थात् 'रामस्य हस्तेनैव तस्य मृत्युर्निश्चित आसीत्।' इत्यनेनैव तस्यैतादृशं बुद्धिवैकल्यमजायत।

महापार्श्वः, महोदरः इन्द्रजित् रावणश्च स्वयं यथाक्रमं लङ्कायाः पूर्वदक्षिणपश्चिमोत्तरद्वारेषु रक्षापराः सन्ति। विरूपाक्षः लङ्कारक्षार्थं मध्यभागे स्थितः। दशसहस्रगजाः, अयुतं रथाः, अश्वानामयुतषट्कं कोटितोऽप्यधिकाः पराक्रमिणः योद्धारश्च युद्धार्थं समवेतास्तिष्ठन्ति। ....राम! मया यच्छत्रुबलवर्णनं कृतं तत्त्वयाऽन्यथा न मन्तव्यम्। भयप्रदर्शनार्थं न मयोक्तमिदं यथार्थसंख्यासम्बन्धे ज्ञात्वैव त्वां तथैव प्रस्तुतं विधातुं निवेदितम्। त्वयेदानीं सैन्यादिकं गृहीत्वा व्यूहरचना विधातव्या, येन एते रावणस्य चतुरंगबलं नाशयितुं समर्थाः स्युः।'

तदाकर्ण्य रामः उत्तेजिततरोऽब्रवीत्—'नीलः पूर्वद्वारे प्रहस्तेन सार्धं युध्यताम्; अङ्गदः दक्षिणद्वारे महापार्श्वं महोदरं च आक्राम्यतु। हनूमान् पश्चिमद्वारं प्रयातु। दुरात्मनः रावणस्य वधार्थं अहं स्वयमेव लक्ष्मणेन सह उत्तरद्वारं प्रवेक्ष्यामि। सुग्रीवः, जाम्बवान्, विभीषणश्च मध्यभागाक्रमपरा जायन्ताम्।' एतादृशीं व्यवस्थां विधाय रामः सचिवैः प्रधानैश्च सह सुवेलपर्वतेऽवस्थितः।

अन्येद्युः सुग्रीवः सानुचरः सुवेलपर्वतशिखरमधिरुह्य लङ्कां पर्यवेक्षत। इदानीं स दृष्टवान्—लङ्कातोरणशीर्षे रावणः उपविष्ट आसीत्। तस्य पार्श्वे श्वेतचामरौ मस्तकोपरि विजयच्छत्रं अङ्गेषु च रक्ताभरणानि अभूवन्। तस्य दिव्यकान्तिः नीलमेघसदृशी; परिधानवस्त्रं च स्वर्णखचितम्।

रावणं वीक्ष्य सुग्रीवः एतादृशः उत्तेजितः आसीत् यत् द्रुतवेगेनोत्प्लुत्य रावणसमीपमुपस्थितः सन् बभाषे—'लङ्केश्वर! अहं लोकनाथस्य रामस्य सखा दासश्च। अद्य अस्मत्तः न तव मुक्तिः।' इत्युक्त्वा सविक्रममुत्प्लुत्य रावणमाक्राम्यत्। द्वयोरपि प्रचण्डं युद्धमारब्धम्। सुग्रीवः रावणमुकुटमपसार्य भूमौ क्षिप्तवान्— ततः द्वयोः मुष्टियुद्धं प्रस्तुतम्। तौ शोणिताक्तशरीरौ मुष्ट्याघातैरन्योन्यं विह्वलीकृतवन्तौ। इत्थं रावणं पीडितमपमानितं च विधाय सुग्रीवः त्वरितं रामसमीपमागतः।

अक्षतशरीरं सुग्रीवमागतं रामः समालिङ्ग्योक्तवान्—'सखे! मया सह परामर्शं विना इत्थं हठकारिता तव नोचिता। तवोपरि कापि विपदापतति चेत्तर्हि सीतां प्राप्यापि को लाभः?

सुग्रीवोऽब्रवीत्—'अहं निजशक्तिं जानामि। एतद्व्यतिरिक्तं त्वत्स्त्री-अपहारकदर्शनेनैव न प्रभवामि क्रोधसंवरणाय।'

युद्धारम्भात्पूर्वं रामः अङ्गदं दूतरूपेण रावणं प्रति प्रेषितवान्। वीर्यवान् अङ्गदः अमात्यपरिवेष्टितरावणमब्रवीत्—'अयोध्याधिपतिरामस्य दूतोऽहम्—वालिपुत्रः अङ्गदः। रामस्त्वां ब्रूते—'कापुरुष! बहिरागच्छ युद्ध्यस्व स्वपराक्रमं च दर्शय। त्वां सवंशं विनाश्य त्रिलोकीं अनुद्विग्नां विधास्यामि। यदि प्रणतः सन वैदेहीं ससम्मानं न समर्पयसि तर्हि त्वं निहतो भवेः विभीषणश्च लङ्काराज्यं प्राप्स्यति।'

रावणः महता वेगेन सचिवानुवाच—'हन्यतामयं सपत्नः।' चत्वारः दुर्धर्षाः सेवकाः अङ्गदं निगृहीतवन्तः। अङ्गदः कृतहुंकारः तन्निहत्य सास्फोटं प्रासादशिखरमारूढः शिखरं च चूर्णीकृत्य रामस्य समीपं प्रत्यागतः।

सुवेलपर्वतात् रामः धनुर्बाणहस्तः लङ्कामभि अग्रसरोऽभूत्। लक्ष्मण-सुग्रीव-विभीषण-हनूमत्प्रभृति वीरगणाः तेन सह प्रचलिताः। महती सेनापिताननुससार।

युद्धादेशं प्राप्य सैनिकाः वृक्षप्रस्तरलोहगदाघातैः प्राकार-तोरणं चूर्णीकृत्य परिखां पूरयितुमुपक्रान्ताः। यूथपतीनामाज्ञया सैनिकाः लङ्का विविधद्वाराणि अवरुरुधुः। तदानीं तुमुलं युद्धमारभत। इन्द्रजित् अङ्गदश्च परस्परमाकारयन्तौ प्रधनमरभेताम्। मारुतिः जम्बुमालिनं ससैन्यमवधीत्। नीलेन सह निकुम्भस्य तुमुलं प्रधन-मारभत। सुग्रीवेन प्रघसः हतः लक्ष्मणश्च ससैन्यं विरूपाक्षमवधीत्। अग्निकेतु रश्मिकेतु मित्रघ्नयज्ञाद्यैश्चतुर्भिर्वीरैः रामः योद्धुमुपक्रान्तः। इन्द्रजित् अङ्गदोपरि गदाघातमकार्षीत्। किन्तु अङ्गदः तामेव गदामाच्छिद्य इन्द्रजितः रथाश्वसारथीन् व्यनाशयत्। सुषेणः महान्तं पराक्रमं प्रदर्श्य विद्युन्मालिनं जघान। मयः वज्रमुष्टिं प्रजंघं च धराशायिनौ [illegible] भः द्विविदहस्तेन अहन्यत

गजबरेण तपनः जघ्ने । यज्ञशत्रुः, महापार्श्वः, महोदरः, वज्रदंष्ट्रः शुक सारणौ च रामस्य सुतीक्ष्णशराघातेन मृतकल्पा भूत्वा पलायामासुः *

---

* लङ्काया लोमहर्षप्रबनं द्वौ मासौ पञ्चदशदिनानि च व्याप्य प्रचलितम् । माघशुक्लद्वितीयातः युद्धारम्भः चैत्रकृष्ण चतुर्दश्यां च रावणवधेन युद्धावसानम् । रामरावणयोर्युद्धं प्रथमं दिनत्रयं पश्चात् १८ दिनानि । युद्धस्यास्यान्तिमदिने रामद्वारा रावणस्य मृत्युर्जातः । वयमस्मिन्ग्रन्थे दिनदिनांकाः अब्दरामायणमतानुसारं युद्धविवरणं च 'वाल्मीकि—अब्दोभय रामायणानुसारं दास्यामः ।

(१) प्रथमयुद्धम्—माघशुक्लद्वितीयातः अष्टमीपर्यन्तम् ।

(२) रामलक्ष्मणौ इन्द्रजितः नागपाशेन बद्धौ—माघ-शुक्लनवम्याम् ।

(३) हनूमान् गरुडमन्त्रसहायतः रामलक्ष्मणौ नागपाश-मुक्तौ चकार—माघशुक्लदशमी ।

(४) धूम्राक्षवधः—माघशुक्ल एकादशी द्वादशी च अर्थात् दिनद्वयस्य प्रधान युद्धं धूम्राक्षेण सार्धम् ।

(५) अकम्पनवधः—माघशुक्ल त्रयोदशी ।

(६) नीलद्वारा प्रहस्तवधः—माघशुक्ल चतुर्दशीतः माघ-कृष्ण प्रतिपत्पर्यन्तम् । इदं दिनत्रयस्यापि प्रधानयुद्धम् ।

## नागपाशेन बद्धौ रामलक्ष्मणौ

अङ्गदस्य हस्तेन अपमानितः पराजितश्च सन् इन्द्रजित् अन्तरिक्षाद्योद्‌धुमुद्यतः। तस्य शतशः शरवर्षेण रामसैन्यं मुमूर्षुः रामलक्ष्मणौ च नागपाशेन हतचेतनावभूताम्। इन्द्रजितः सैनिकाः विजयिनः सन्तः गर्जनपराः प्रयाताः। शोकस्य घनच्छाया रामशिबिरे सर्वत्रावतीर्णा। विभीषणः शोकाकुलान् सुग्रीवनीलाङ्गदसुषेण-हनूमत्प्रभृतीन् सान्त्वयन्नगादीत्—'मा भैषिष्ट।' नायं शोकस्य समयः। रामः परंब्रह्म, अतः स इत्थं प्राणान् न त्यक्ष्यति। तस्य संज्ञालाभः भविष्यत्येव। यावद्रामलक्ष्मणौ प्राप्तसंज्ञौ न स्याताम्

---

(७) रामरावणयोः प्रथमयुद्धं रावणस्य पलायनं च माघ-कृष्णद्वितीयातः—एतस्मिन्दिनत्रयात्मकयुद्धे रावणः अतिक्लान्तः सन् लङ्कां प्रत्यागतः।

(८) कुम्भकर्णस्य जागरणं युद्धप्रस्तुतिश्च माघकृष्ण पञ्च-मीतः अष्टमीपर्यन्तम्।

(९) कुम्भकर्णयुद्धं तद्वधश्च—माघकृष्णनवमीतः चतुर्दशी (६ दिनव्यापि युद्धानन्तरं कुम्भकर्णस्य मृत्युः)

(१०) युद्धविरामः माघकृष्ण अमावास्या।

एतस्मात्परमपि युद्धविवरणं अग्रे पादटीकान्तर्गतं भवेत्।

तावद्युष्माभिः सावधानैः तयोः रक्षा विधातव्या । सैनिकाश्च सान्त्वनीया च'....सुग्रीवादयः परिवृत्य स्थिताः—तदानीं लब्धचेतनः रामः लक्ष्मणमचेतनमवलोक्य सशोकमुक्तवान्—'भ्रातरं लक्ष्मणं युद्धाहतमवलोकयामि! मम जीवनेन सीतया वा किं प्रयोजनम्? सीतासदृशी स्त्री लभ्येतापि किन्तु लक्ष्मणतुल्यो भ्राता न प्राप्स्यते! लक्ष्मणश्चेतनां नाधिगच्छति चेदहमत्रैव प्राणत्यागं करिष्यामि। एकाकी अयोध्यां प्रत्यावृत्य सुमित्रामात्रे कथं स्वमुखं दर्शयिष्यामि? सुग्रीव! सेनया सह त्वया गन्तव्यम्, अहं तु लक्ष्मणेन सहात्रैव प्राणांस्त्यक्ष्यामि।...नकोऽपि दैवमतिक्रमितुं समर्थः।'...

शोकाकुलं रामचन्द्रं वीक्ष्य हनूमानुवाच,—'अहं गरुडमन्त्रेण गरुडमाह्वयामि, स समागत्य सर्वानपि नागपाशमुक्तान् विधास्यति।' इत्युक्त्वा हनूमान् गरुडमन्त्रजपतत्परः उपविष्टः। तदैवाकस्माद्वैनतेय आविर्भूय सकलानपि नागपाशमुक्तानकार्षीत्। तस्य स्पर्शमात्रेण रामलक्ष्मणयोः क्षतोपशान्तिर्जाता। कान्तिवीर्योत्साहबुद्धितेजांसि च द्विगुणितानि। *

---

* कस्यापि रामायणस्य मतेन—हनूमान् कामपि गारुडीविद्यावन्तं—सर्पचिकित्साविशारदं मन्त्रज्ञं (ओझानामकं) मानीय मन्त्रौषधिभिः रामलक्ष्मणौ सुस्थावकार्षीत्। 'ओझा' इत्यस्य मन्त्र-

रामलक्ष्मणौ आलिङ्गय प्रदक्षिणीकृत्य च गरुडः गन्तुं प्रस्थितः । रामलक्ष्मणौ सुस्थाववलोक्य सैनिकास्तुमुलहर्षध्वनिं चक्रिरे ।

## रावणस्य आतङ्कः धूम्राक्षवधश्च

रामसेनायाः गर्जनेन समग्रलङ्कानगरी कम्पिता । शंकितेन रावणेन पृष्टाः सचिवाः अब्रुवन्—'रामलक्ष्मणौ पाशमुक्तौ जातौ । अत एव सैनिकानां प्रमुदितानामयं कोलाहलः । तन्निशम्य रावणः हताशः सन्नुवाच,—'मृतौ रामलक्ष्मणौ पुनर्जीवितौ ! दैवमेव

---

प्रभावतः प्रथमं रामः स्वस्थीभूय उत्थितः ततः लक्ष्मणोऽपि चेतनामधिगतवान् । गरुडपुराणे सर्पविचिकित्साविषये सविस्तरवर्णनं लभ्यते ।

नागपाशविषये पुराणादिषु लभ्यते—कुशलतया विषधरं सर्पः धृत्वा शून्योदरवंशकाण्डे स्थाप्यते । युद्धसमये च धनुः सहायेन इदं वंशकाण्डं शत्रूपरि निक्षिप्यते । अयं च बाणः लक्ष्यस्थानं प्राप्य तस्मात्सर्पः बहिरागत्य शत्रुं दशति । इदं वेष्टयित्वा वा तं निष्क्रियमचेतनं च विदधाति ।

युद्धे शरमुखात् अग्निर्निर्गत्य शत्रुपक्षेऽग्निकाण्डस्यापि व्यवस्थासीत् । दहनयोग्य पदार्थेन सह एतादृशः शरः प्रस्तुतः अभूत् यो धनुः सहायेन निक्षिप्तः दूरान्तरेऽपि अग्निमुत्पादयितुमलमासीत् ।

बलवत्तरम् !' ततः रावणः युद्धार्थं धूम्राक्षमादिशत् । विविधास्त्रसज्ज दुर्धर्षसैनिकैः सह धूम्राक्षो युद्धार्थं निर्गतः । अजस्रशरनिक्षेपपूर्वकं सरामसैनिकान्निपातयाञ्चकार । तदवलोक्य हनूमान् गदाहस्तः धूम्राक्षमाचक्राम । धूम्राक्षः स्वकीयकण्टकमयीं गदां हनूमतःशिरः लक्ष्यीकृत्याक्षिपत् । हनूमानपि धूम्राक्षगदां स्वगदाघातेन प्रतिहत्य पुनः स्वगदाघातेन धूम्राक्षमस्तकं चूर्णीकृतवान् । हतावशिष्टाः सैनिकाः भयेनार्तनादं विधाय पलायिताः । (कस्यापि रामायणस्य मतेन धूम्राक्षः दिनद्वयपर्यन्तं युद्धमकार्षीत् ।)

धूम्राक्षवधप्रवृत्त्या रावणः अतिविचलितः सन् वज्रदंष्ट्रं युद्धार्थं प्रेषितवान् । मायावी वज्रदंष्ट्रः चतुरङ्गसैन्यपरिवेष्टितः पाशहस्तः कृतान्त इव दक्षिणद्वारे अङ्गदमाक्रमत् । ततः द्वयोरपि द्वन्द्वयुद्धमारभन् । कञ्चित्कालपर्यन्तं मुष्टियुद्धानन्तरं द्वावपि प्राणान्तक भीषणखड्गयुद्धे क्षतविक्षतौ सन्तौ नतजानू भूतले उपविष्टौ । अङ्गदः अकस्मात् तडिद्गत्या एकेनैव खड्गाघातेन वज्रदंष्ट्रमवधीत् । रावण सैनिकाः निरुत्साहाः भयेन चीत्कारपराः पलायामासुः । इत्थं प्रतिदिनं रावणसेनापतयः रामसेनया सह युद्धे निहता जाताः । वज्रदंष्ट्रस्य मृत्युसंवादं प्राप्य रावणः सर्वयुद्धविशारदं अकम्पनं महत्या सेनया सह युद्धार्थमादिदेश । तुमुलसंग्रामानन्तरं हनूमान् कस्यचिद्वृक्षस्याघातेन अकम्पनं धराशायिनमकार्षीत् । ततः रावणः वीर्यवत्सेनापतिं प्रहस्तं

योद्धुं प्रेषितवान् । द्वयोरपि पक्षयोर्मध्ये भयंकरयुद्धमभूत् । असंख्य-सैनिकेषु हताहतेषु रणक्षेत्रं रक्तकर्दमाक्तमभूत् । प्रहस्तः चतुर्दिशः शरजालेनाच्छादयन् नीलमाक्रान्तवान् । परस्परं तुमुलं युद्धमजायत । नीलः प्रहस्तस्य रथाश्वसारथीन् विनाश्य सवीरदर्पमास्फोटयामास । गदाहस्तेन प्रहस्तेनाक्रान्तः नीलः प्रकाण्डशिलाघातेन तं यमसदनं प्राहिणोत् । रामसैनिकानां आनन्दकोलाहलसिंहनादाभ्यां रावण सैनिकानामार्तनादेन च लङ्का प्रतिध्वनिताऽजायत । रावणः चिन्तितोऽभूत् ।

प्रहस्तनिधनवार्तया रावणः विशेषेण चिन्तितः जगाद— 'अस्य शत्रोरधिकावज्ञा नोचिता— अहं स्वयं युद्धे गत्वा रामलक्ष्मणौ हनिष्यामि ।' इत्युक्त्वा स इन्द्रजित्-अतिकाय-महोदर-कुम्भनिकुम्भ-नरान्तक प्रभृतीन् प्रधानवीरान् युद्धोद्यमार्थमादिश्य— स्वयमेकां दुर्धर्ष चतुरङ्गसेनां गृहीत्वा रणक्षेत्रमाययौ । *

---

* कस्यापि रामायणस्य मतेन— रावणं युद्धार्थं प्रस्तुतमवलोक्य राज्ञी मन्दोदरी तच्चरणद्वयग्रहणपूर्वकं क्रन्दन्ती जगाद— 'महाराज! दास्या वचनं श्रूयताम्— युद्धे भवता न गन्तव्यम् । सीतां प्रत्यर्प्य रामेण सार्धं सन्धिः कार्यः । रामं साधारणमानवं न मन्यस्व । अपरं च पतिव्रतानार्या अभिशापेन महदकल्याणं भवेत् ।.... भवन्तं कथमपि रणस्थलं गन्तुं नानुमन्ये ।'

महतीं सेनां गृहीत्वा महाबलरावणं दिव्यरथारूढमवलोक्य रामस्य सचिवाः अति चिन्तिता अभूवन्। सुग्रीवसुषेणनलगयगवाक्षप्रभृतिमहारथिनः गृहीतासंख्यसैनिकाः विभिन्नदिग्भ्यः रावणमाक्रामन्; अस्मिन्समये गदापाणिं विभीषणं वीक्ष्य रावणः क्रोधेन-ज्वलन्निव तं 'कुलाङ्गार' इत्युक्त्वा तं हन्तुं मयप्रदत्तमहाशक्ति बाणमयोजयत्। भीषणशरं विभीषणं नाशयितुमागच्छन्तं वीक्ष्य लक्ष्मणः 'तस्य रक्षा कर्तव्या' इति विचिन्त्य तत्सम्मुखमागम्य शरजालं विस्तार्य तादृशशक्तिप्रतिरोधार्थं प्रायतत; किन्तु तदमोघदिव्यशक्ति-सम्पन्नमस्त्रं निवारयितुमशक्यं सन् लक्ष्मणस्य शरीरं प्राविशत्। लक्ष्मणः एतदस्त्रप्रभावतः मूर्च्छितः सन् भूमौ पपात। लक्ष्मणमित्थं मूर्च्छितमवलोक्य हनूमान्समुत्पत्यागतः रावण वक्षसि प्रचण्डमुष्टिप्रहारं

---

मन्दोदर्याः कातरोक्त्या रावणः क्षणकाल तूष्णीं स्थित्वा दृप्तस्वरेणाभाषत—'अहं निजशक्तिबलवीर्यज्ञान पूर्वकमेव राममवज्ञाय अस्मिन्युद्धेऽवतीर्णः। इदानीं रामस्य पुरतः नतिस्वीकारः कुतः सम्भाव्यते? मृत्युपणः कृतः—रामानुग्रहप्रार्थनाऽसम्भवा। 'सीता दैव्यंशसम्भूता', 'रामश्च स्वयं नारायणः' इति जाने। रामहतेन मरणं श्लाघनीयम्। प्रिये! मा दुःखिता भूः। न कोऽपि कालमति-क्रमितुं समर्थः' इत्युक्त्वा मन्दोदरीं सान्त्वयित्वा रावणः सदर्पं युद्धार्थं निर्गतः।

कृतवान् येन रावणः जानू अवलम्ब्य भूमौ पतितः। क्षणादेव लक्ष्मणः शक्त्यस्त्रप्रभावमुक्तः सन् स्वस्थो जातः।

## रामरावणयुद्धम्

इतः हनूमतः वज्रमुष्टि आघातेन रावणः मूर्च्छितप्रायः कथमपि शनैः शनैः निजरथमारुह्य किञ्चित्स्वस्थीभूय पुनरपि महतावेगेन उन्मत्त इव शरवर्षणेन रामसैन्यं मथितुमारेभे। रावणस्य पराक्रमं न कोऽपि सोढुं समर्थः इति दृष्ट्वा रामः स्वयं युद्धे गन्तुमुद्यतः, स सचिवानां सैनिकानां च आनन्दकोलाहलेन सार्धं धनुषि टङ्कारं दत्त्वा अग्रतश्चलितः * हनूमत्प्रभृतयः रामस्य अङ्गरक्षकाः भूत्वा प्रयाताः। राम-

---

* वाल्मीकिरामायणमते—रामचन्द्रः हनूमत्स्कन्धमारुह्य रावणेन सह योद्धुं प्रययौ। रावणः हनूमन्तमवलोक्य क्रोधेन लङ्कादाहकारिणं अग्नितुल्यशरजालैरविध्यत, इत्यादि। शरक्षेपणार्थं यादृश शक्त्या प्रयोजनं सफलसन्धानार्थं च शरीरस्य यादृशी निष्कम्पशरीरावस्थितिरपेक्षिता—सा अन्य स्कन्धमारुह्यासम्भवा। अतः रामः भूमौ स्थित एव रावणेन सह युद्धमकरोदिति मन्यामहे। युद्धनियमानुसारं रथी रथिना सह युध्येत। किन्तु रावणः निजरथात् रथहीन रामेणेन सह युद्धयमान आसीत् इति हेतोः अनेकटीकाकारा रावणवीरत्वोपरि कटाक्षपातपराजाताः, रामश्च रथविहीनोऽपि दिव्यरथी रावणमपि अस्मिन्युद्धे पराभूतवान्। अतः रामस्य वीरत्वं प्रशंसनीयमासीत्।

धनुष्टंकारेण रावणस्य मुखं विवर्णमजायत। दुन्दुभिशब्देन चतुर्दिशः निनादयन् रामः तारस्वरेणागादीत्—'लङ्केश्वर! प्रतीक्षस्व! प्रतीक्षस्व! ममानिष्टं विधाय कुतोऽपि तव रक्षाऽसम्भवा। मम हस्तात्तव रक्षणमशक्यम्। त्वया लक्ष्मणः शक्त्या घातेन पीडितः, इदानीं

(१) रावणं आहतं हतवीर्यं च विधायापि रामः तं तत्क्षणं नावधीत्। अनया एकमात्रघटनया 'श्रीरामचन्द्रः कीदृशो महान् वीरः नीतिपरायणश्च योद्धा आसीत्' इति प्रमाणीभवति। अस्य रावणस्य वधार्थमेव स समुद्रे सेतुबन्धनं विधाय लङ्कामायातः। 'स एव शत्रुः तेनैव सह युद्ध्यमानः रणक्लान्तो जातः' इति विलोक्य तेन तस्मै विरामो दत्तः। अपरेण एकेनैव शराघातेन तस्मिन्दिने शत्रुं हन्तुं रामः समर्थोऽभविष्यत्। परं तेन तन्न विहितम्। एतेन तस्य वीरत्वमहिमा विस्पष्टो भवति, आत्मशक्तिविषये च स कियद्विश्वस्त आसीत्' इत्यस्यापि सम्यक्परिचयो लभ्यते।

रणक्लान्ते रणप्रतिद्वन्द्विनि अस्त्राघातः समरनीतिविरुद्धः मतः। अस्यानीतेरपि तेन पूर्णतया पालनं कृतम्—एतावन्महान्तं शत्रुं जीवितमेव सोऽत्याक्षीत्। 'समानेन सामनस्य युद्धम्' अर्थात् रथी रथिना सह, पदातिः पदातिना सह युद्ध्येत इयमेवासीत् तदानीं तना समरनीतिः। रामस्य नासीद्रथः, तथापि तेन दिव्यरथी रावण युद्धाह्वानं न प्रत्याख्यातम्। रथहीनेनापि तेन रथिना रावणेन सार्धं

अस्मत्पराक्रमं सहस्व। मम सुतीक्ष्णशरः सपुत्रकलत्रं त्वां नाशयिष्यति।' इत्युक्त्वा क्रुद्धो रामः एकदैव निक्षिप्तशरशतः रावणस्य रथाश्वसारथीन् शूलखड्गौ च विच्छिद्य रावणवक्षसि सुतीक्षणशराघातमकार्षीत्।

---

युद्धं विहितमेतेनापि रामस्य वीरत्वमहिमा घोषितो भवति। 'रथारूढस्य तव मया सह युद्धमनुचितमिति तेन रावणं प्रति नोक्तम्।

रामः अखण्डभारते तत्कालीन भारतेतरदेशेषु च सर्वश्रेष्ठः वीर आसीत् इत्यत्र नास्ति कोऽपि संदेहः। यां ताडकां पराक्रमिणः क्षत्रियनृपतयः दण्डयितुं नाशक्नुवन् तां ताडकां ससैन्यामपि रामः केवलं पञ्चदशवर्षीयः व्यनाशयत्। तथैवास्मिन्वयसि हरधनुर्भङ्गोऽपि (यद्धनुः रावणोऽपि उत्थापयितुमसमर्थः तथा भारतीया आर्यानार्याः शतशो राजानः—यस्य पुरतः स्वपराभवं स्वीकृतवन्तः) तस्यासाधारण वीरत्वस्य साक्षी। क्षत्रियहन्ता परशुरामः—येन दीर्घकालपर्यन्तं आबालवृद्धवनिता निर्विशेषं क्षत्रियाणां संहारः कृतः, यत्पराक्रमपुरतः सर्वे क्षत्रियपार्थिवाः नतशिरसो जाताः, तं परशुरामं केवलं पञ्चदशवर्षीयो रामः पराभूतवान्।

स एतादृशाधिकं संदयाकानां दिव्यराक्षसमानवास्त्राणां अधिकारी आसीत् यत् तेन तुल्यः योद्धा तदानीं सम्पूर्णभारते कोऽपि नासीत्। तस्य दिव्यास्त्राणि एतावन्ति शक्तिशालीनि आसन् यत

रावणः अनेन शराघातेन मूर्छाग्रस्तोऽभूत् । तस्य हस्ताद्धनुश्च स्रस्तम् । रामः अर्धचन्द्रबाणेन तस्य खण्डितं किरीटं भूमावक्षिपत् उक्तवांश्च—'लङ्केश्वर ! त्वं परिश्रान्तोऽसि, युद्धं कर्तुमसमर्थः अतस्तवोपरि शराघातं नोचितं मन्ये (१) त्वं लङ्कां प्रत्यावर्तस्व । विश्रामं च विधेहि । स्वस्थीभूय पुनः प्रत्यागत्य अस्मत्पराक्रमं द्रक्ष्यसि ।' रावणः रामशरेण दृढं विद्धः सन् हृतदर्पः लज्जितश्च भूत्वा रथमारुह्य लङ्कां प्रति यातः ।

## कुम्भकर्णस्य निद्राभङ्गः युद्धयात्रा च

रामहस्तेन इत्थं पराभूतः सन् रावणः अतिचिन्तितो जातः । रामेण सार्धं संमुखं युद्ध्यमानेन तेन रामपराक्रमस्य कियदाभासोऽपि तस्मिन्दिने प्राप्तः । इदमेवासीत् तस्य विशेषोत्कण्ठाकारणम् । सुवर्णसिंहासनोपविष्टः स सचिवानब्रवीत्—'रामस्याधिका उपेक्षा

---

तेषां सहायेन सागरपरतीरमगत्वापि स रावणं पराभवितुं समर्थोऽभविष्यत् । तेन तन्नकृतम्—सम्मुखयुद्धे एव रावणं हतवांश्च विधाया-वधीत् । एकेनैव तीक्ष्णशरेण वालिवधः रामस्यासामान्यसमरशक्तेः परिचायकः । वाली रावणादपि अधिक शक्तिशाली अभूत् । रामस्य बाहुबलमनन्यसाधारणम् । सोऽतिदूरमपि शरक्षेपणे समर्थ आसीत् । तेन स स्वयमक्षतः सन् सहस्रशः शत्रून् हन्तुमलमभूत् ।

नोचिता। लङ्कायाः एतद्विपद्वारणं युष्मत्प्रयत्नाधीनम्। मम वीरभ्रातरं कुम्भकर्णं विगतनिद्रं कुरुत। अस्यां विपदि यदि तत्सहायं न प्राप्यते तर्हि तस्येन्द्रतुल्यविक्रमेण कोऽर्थः?'

रावणादेशेन परिचारकाः विविधोपायैः कुम्भकर्णस्य निद्राभङ्गमकार्षुः। जागरितः कुम्भकर्णः विशेषविरक्तिप्रकाशपूर्वकमपृच्छत्—'असमये किमर्थं मां विनिद्रितं कृतवन्तो यूयम्? अपि राज्ञः कुशलम्! अपि कापि विपदुपस्थिता?

तदानीं यूपाख्य सचिवेन युद्धस्य वार्तायां तत्फलाफलयोश्च वर्णितयोः कुम्भकर्णः सक्रोधमुक्तवान्—'निश्चिन्तैः युष्माभिः राजा वक्तव्यः 'मया प्रतिज्ञायते—अद्यैव ससैन्यं रामलक्ष्मणयोः वधं करिष्यामि, लङ्कां च विपद्विमुक्तां विधाय पश्चाद्राजानं द्रक्ष्यामि।'

सचिवः महोदरोऽब्रवीत्—'प्रथमं भवता राजा द्रष्टव्यः; तस्य वचनं निशम्य कर्तव्यनिश्चयः कार्यः।*

---

*अब्दरामायणानुसारं युद्धदिनदिनांकाः पूर्वप्रकाशितात्पराः—

१ इन्द्रजित्प्रभृतिभिः सह युद्धं फाल्गुन शुक्ल प्रतिपदः चतुर्थीपर्यन्तम्—४ दिनानि।

२ अतिकायस्य युद्धम्—फाल्गुन शुक्लपञ्चमीतः सप्तमीपर्यन्तम्—३ दिनानि।

३ कुम्भनिकुम्भयोर्युद्धं— फाल्गुन शुक्लाष्टमीतः द्वादशीपर्यन्तम्— ५ दिनानि ।

४ मकराक्षप्रभृतिभिर्युद्धम्—लक्ष्मणस्य मूर्छा च—फाल्गुन शु० त्रयोदशीतः कृष्णद्वितीयापर्यन्तम् ५ दिनानि ।

५ युद्धविरामः फाल्गुनकृष्णतृतीयातः सप्तमीपर्यन्तम्—५ दिनानि ।

६ लक्ष्मणेन्द्रजितोर्युद्धम्—इन्द्रजिद्वधश्च—फाल्गुनकृ० अष्टमीतः त्रयोदशीपर्यन्म्—६ दिनानि ।

७ रावणस्य यज्ञ फाल्गुन कृ० चतुर्दशी ।

८ पुनरपि रावणस्य युद्धे आगमनम्—फाल्गुन कृ० अमावास्या।

९ रावण सैन्यवधः—चैत्रशुक्लप्रतिपदः पञ्चमी पर्यन्तम् ५ दिनानि ।

१० महापार्श्वादि वधः—चैत्रशुक्लषष्ठीतः अष्टमीपर्यन्तम् ३ दिनानि।

११ लक्ष्मणस्य 'शक्तिशिलेव' पतनम्—'मृतसञ्जीवनी' आनयनम्—चैत्रशुक्लनवमी ।

१२ युद्धविरतिः चैत्रशुक्लदशमी ।

१३ इन्द्रद्वारा पुष्पकरथ मातल्योः प्रेषणम्—चैत्रशुक्ल एकादशी।

१४ रामरावणयोः युद्धम्, रावणवधश्च—चैत्रशुक्लद्वादशीतः चैत्रकृष्णचतुर्दशीपर्यन्तम् १८ दिनानि ।

एतदाकर्ण्य कुम्भकर्णः * प्रभूतमद्यमांसास्वादनपूर्वकं मत्तः सन् रावणसमीपं गत्वा तमभिवाद्य च पुरतः स्थितः। रावणश्च लङ्काविपत्ति

---

* वाल्मीकिरामायण वर्णितः कुम्भकर्णः एकः अद्भुतः जीवविशेषः पर्वताकारः देहः, एकयोजनविस्तृतप्रासादे तस्य निवासः, ब्रह्मणः शापेन मासषट्कपर्यन्तं निद्रित आसीत्। ततः एकस्मिन्दिने जागरितः शतशो हस्त्यश्वहरिणोष्ट्रगर्दभमहिषवराहाणां मांसं भक्षयित्वा, अनेकशतकलशरक्तं सहस्रशो कलशमद्यं च पीतवान्। तालवृक्षैः सालवृक्षैः पर्वतशिखरैश्च स युद्धं कृतवान्—युद्धक्षेत्रे सहस्रशः सैनिकान्धृत्वा भक्षयामास, पदाघातेन मुष्टयाघातेन च सर्वमपि अचूर्णयत्। तस्य गात्रलोमानि एणी (साही) कण्टकतुल्यानि, मुखगह्वरं पातालतुल्यम्, नासापुटद्वये राक्षसा गमनागमनपरा अभूवन्—तस्य निश्वासेन शतशो राक्षसा अतिदूरमक्षिप्यन्त।....

असमये तस्य निद्राभङ्गकरणमपि कोऽप्यद्भुतो व्यापारः दशसहस्रराक्षसा आवश्यका आसन् कुम्भकर्णस्य निद्राभङ्गहेतोः! सहस्रं गजाः तच्छरीरस्योपरि गमनागमनपरा अभूवन्, भेरीशंखमृदंगानां महान्ध्वनिरक्रियत। शतशः राक्षसास्तस्य गात्रे मुद्गराघातमकुर्वन्। केऽपि तस्य कर्णाकुञ्चनं चक्रुः। केऽपि तन्नासिकोपरि खड्गाघातमकार्षुः। कर्णविवरे शतशः कलशैः जलमपात्यत। एतादृश सुखस्पर्शैः कुम्भकर्णस्य निद्राभङ्गोऽजायत।

तस्य समीपं सविस्तरं वर्णयामास। ततः कुम्भकर्णः हसित्वाभाषत—'एतद्विपत्तिविषये तु मया पूर्वमेव उक्तमासीत्—तदस्मद्वचनं त्वया नाकर्णितम्। मन्दोदर्या विभीषणेन च यदुक्तमासीत् तदनुसारं यदि कृतं स्यात् तर्हि मङ्गलमभविष्यत्।'

तन्निशम्य रावणः सभ्रुकुटिभङ्गमुवाच—'उपदेशार्थं त्वं मया नाहूतः। यस्यां दिशायां चरणौ सम्प्रक्षालितौ ततस्तौ न प्रत्यावर्तिष्यतः। तव भ्रातृस्नेहः विक्रमश्च यदि स्यान्नाम तर्हि एषा विपद् निवार्यताम्।'

रावणं क्रुद्धमवलोक्य कुम्भकर्णस्तं सान्त्वयन्नुवाच—'राजन्! मा दुःखितो भूः, प्राणपणेनापि तव दुःखस्य कारणं विनाशयिष्यामि। रामलक्ष्मणसुग्रीवहनूमन्तः सर्वेऽपि मया हनिष्यन्ते—अहमेकाकी एव सकलारिध्वंसं विधास्यामि। अवलोकयतु लोकोऽस्म-

---

रामेण सह युद्धे हस्तपादच्छेदेऽपि करचरणविहीनः कुम्भकर्णः युद्ध्यमान आसीत्। वाल्मीकिः कुम्भकर्णं प्राणिरूपेण न वर्णितवान् अपि तु यन्त्रविशेषरूपेण!

वाल्मीकि वर्णने इदमप्यवलोक्यते—देवदानव यक्षरक्षोगन्धर्वकिन्नराः सर्वेऽपि धृतस्थूलदेहाः शरधनुर्दिव्यास्त्रैः शूलखड्गयष्टिकशाघातैः, मनुष्यैः सह अयुध्यन्त। तैः सह वार्तालापमकुर्वन्। मनुष्येभ्यः अमोघं अभिशापं आशीर्वादं च ददुः!

द्विक्रमम् ।' इत्युक्त्वा कुम्भकर्णः ससिंहनादं करकृतसुवर्णमण्डित-महाशूलः युद्धार्थमुद्यतः । रावणः निजहस्ताभ्यां कुम्भकर्णं मणिमय-हाराङ्गदशिरस्त्राणैर्भूषयित्वा प्रभूतचतुरङ्गसेनया सार्धं युद्धादेशं दत्तवान् । रावणं प्रणम्य प्रदक्षिणीकृत्य च कुम्भकर्णः युद्धार्थं प्रस्थितः । ततः रणवाद्यानां तुमुलशब्दः उत्थितः । सागरं पर्वतान् युद्धक्षेत्रं च प्रकम्पयन् कुम्भकर्णः वज्रनिर्घात सहोदरं महानिनादमकरोत्। रामपक्षीयाः सैनिकाः वृक्षैः शिलाभिश्च कुम्भकर्णोपरि आक्रमणं चक्रुः । 'तान्सर्वांस्तिरस्कृत्य सैनिकान् मथ्नन् विध्वंसयंश्च कुम्भकर्णः अग्रसरः परापतति ' इत्यवलोक्य हनुमान् गृहीत गिरिप्रमाणशिलाखण्डः कुम्भकर्णोपरि आघातमकार्षीत् । सोढ तादृशाघातः कुम्भकर्णः हेमवर्ण दिव्यशूलेन विदीर्णाञ्जनेयवक्षाः गर्जितुमारेभे । मुह्यमानमारुति-मवलोक्य नीलशरभगवाक्षांगद प्रभृतयो यूथपतयः समवेतास्तेन सह योद्धुमागताः । किन्तु कुम्भकर्णः तान्सर्वान्पराभूय आस्फोटनपरो जातः यदवलोक्य रामसैनिकाः भयेन किं कर्तव्यमूढा अभूवन् ।

चतुर्दिक्षु महान् कोलाहलः व्याकुलता च प्रसृता । तदानीं सुग्रीवः महतीं शिलां गृहीत्वा कुम्भकर्णेन योद्धुं प्रयातः । सुग्रीवप्रक्षिप्त शिलाखण्डं कुम्भकर्णवक्षसि लग्नं चूर्णितमभूत् । साट्टहासं कुम्भकर्णः गृहीतैकतीक्ष्णशूलः सुग्रीवं हन्तुमागतः हनुमानुत्प्लुत्य तं शूलं छित्वा द्विखण्डितं कृतवान् ।

कुम्भकर्णः बृहच्छिलाघातेन सुग्रीवं मूर्छितं विधाय तं गृहीत्वा च लङ्कां प्रति प्रचलितः। सुग्रीवः अधिगत संज्ञः आत्मानमसहायं ज्ञात्वा मुष्टयाघातेन कुम्भकर्णस्य मुखनासिकं भंक्त्वा द्रुतगत्या निज-सैनिकान्प्रत्यागतः।....

किञ्चित्स्वस्थः कुम्भकर्णः गृहीतभीषण लोहगदः पुनः युद्धार्थ-मागतः। लक्ष्मणस्तमवरुध्य शरजालावृतमकार्षीत्। कुम्भकर्णः किञ्चिद्विहस्य लक्ष्मणमुक्तवान्, 'त्वं निर्भयः सन् मया साधं योद्धु-मागतः। एतेनैव तव वीरत्वं प्रमाणितम्; अहं चातीव प्रसन्नोऽस्मि। त्वं तु बालकः नातः समानयोद्धा। मुच्यतामिदानीं पन्थाः अहं रामेण साधं योद्धु गन्ता।'

लक्ष्मणमतिक्रम्य संमुखागतस्य कुम्भकर्णस्य वक्षःस्थलं एकेन तीक्ष्णरुद्रबाणेन न्यदारयत्। कुम्भकर्णस्य गदा हस्तात् पतिता—तथापि सास्फोटं गदामुत्थाप्य स्खलितपदं तेन रामः समाक्रान्तः। रामः वायव्यास्त्रेण कुम्भकर्णस्य सगदं दक्षिणहस्तं अच्छिनत्। तदानीं कुम्भकर्णः अन्यहस्तेन वृक्षमेकमुत्पाटय सहुंकारं राममाक्रान्त-वान्। रामः ऐन्द्रास्त्रेण कुम्भकर्णस्यावशिष्टं हस्तं अर्धचन्द्रबाणेन च पादद्वयमच्छिनत्।

तेनापि कुम्भकर्णः न मृतः। छिन्नकरचरणः सः सलुण्ठनं सगर्जनं च मुखं व्यादाय अभिमुखमागतः। अधुना रामः सक्रोधं

कुम्भकर्णं प्रति सुतीक्ष्णं प्रभञ्जनवेगं ऐन्द्रशरं चिक्षेप यः दशाऽपि दिशः समुज्ज्वलयन् कुम्भकर्णस्य पर्वतशिखरसमं मस्तकं चिच्छेद ।

(वाल्मीकि रामायणमतेन) कुम्भकर्णस्य प्रचण्डो देहः समुद्रे पतितः येन वृद्धं समुद्रजलं वेलातिक्रमं चकार । तेन च पर्वतप्राय-देहघट्टनेन मकरमत्स्य सर्पप्रभृतयोऽसंख्यजलचरा अमृयन्त ।

## रावणस्य शोकः

कुम्भकर्णमृत्युप्रवृत्तिः रावणमचेतनमकार्षीत् । देवान्तक नरान्तक त्रिशिरोऽतिकाय प्रभृतयो रावण पुत्रा अपि पितृव्यनिधन वार्तया सहस्रशः लङ्का वासिभिः सह क्रन्दनपरा बभूवुः । महोदर महापार्श्वावपि वैमातृभ्रातृमृत्युना अतिशोकसन्तप्तौ बभूवतुः । अधिगतचेतनः रावणः क्रन्दमान उवाच—'हे शत्रुदर्पहारिन् महाबल भ्रातः! अस्मच्छत्रुनाशं विनैव त्वं यमसदनं प्राप्तः? इदानीं रामसैन्यं लङ्कां ध्वंसयेत्! कुम्भकर्णशून्यलङ्कया जीवनेन च ममेदानीं किं प्रयोजनम्? सीतां गृहीत्वापि किं करवाणि? त्वं तु मम दक्षिणहस्त इव अभूः—मम बलमवलम्बश्च । को मामिदानीं शत्रु-कवलीभवनाद्रक्षिष्यति?'....

कुम्भकर्णनिधनेन आनन्दिता देवगन्धर्वाः श्रीरामं स्तोतु-मारेभिरे । महर्षिनारदोऽभाषत—'हे देवदेव! हे जगन्नाथ! हे

परमात्मन्! हे नारायण! हे जगदाश्रय! हे विश्वसाक्षिन्! नमस्ते। त्वं विशुद्धज्ञानस्वरूपः।....या श्रुतिः त्वां निर्विकारं शुद्धं ज्ञानस्वरूपं चेति कीर्तयति सैवश्रुतिः पुनस्त्वां 'सर्वजगत्स्वरूप' इति निर्दिशति। त्वं मायाश्रयः साकारः वस्तुतस्तु निराकार एव।....अहं सर्वदा तव सगुणस्वरूपं हृदये ध्यात्वा जीवन्मुक्तः। अत एव सकलदेवानां पूज्यः सन् लोकत्रये विचरामि' इत्यादि।

इत्थं राममभिष्टुत्य नारदः ब्रह्मलोकं प्रयातः।....

## त्रिशिरो नरान्तक देवान्तकमहोदरमहापार्श्वानां मृत्युः

कुम्भकर्णस्य अकालमृत्योरनन्तरं रावणः आत्मानं विशेषतया असहायममन्यत। तदानीं त्रिशिराः रावणमाश्वासयन्—'पितः! भवत्सदृशस्य वीरस्य कृते एतादृशी हताशता नोचिता। गरुडः यथा सर्पनाशपरो भवेत् तथैव वयं शत्रून् समूलं नाशयिष्यामः। तदाकर्ण्य देवान्तकनरान्तकातिकाया अपि सिंहनादपरा जाताः। रावणस्तेनानन्दितः तत्कण्ठेषु विजयमालाः समर्प्य तानालिङ्गय च युद्धार्थमन्वमन्यत। महोदरमहापार्श्वावपि तैः सह प्रेषितवान्। गृहीतचतुरङ्गबला रावणपुत्रा युद्धार्थं प्रयाताः।....

द्वयोरपि पक्षयोः कतिपयदिवसपर्यन्तं रोमहर्षणं जन्यमजनि। अस्मिन्युद्धे अङ्गदः विशेषवीरतां दर्शयामास। तेन मुष्टिप्रहारेण

नरान्तकः भूमौ पातितः। देवान्तक त्रिशिरो महोदरैः सह अङ्गद-नीलहनूमतां तुमुलं युद्धमभूत्। रावणपुत्राः सर्वेऽपि वीराः युद्धप्रियाः कुशलाश्च। तैः अमिता रामसैनिका विध्वस्ताः। हनूमान् देवान्तक-वधेन अतिगर्वितोऽभूत्। चिरयुद्धानन्तरं महाबलः नीलः महोदरं प्रचण्डशिलाघातेनाबधीत्। त्रिशिराः हनूमतः पराक्रमं सोढुमसमर्थं आसीत्। हनूमान् त्रिशिरसः खड्गमाच्छिद्य तस्य मस्तकं द्विखण्डितं च विधाय सास्फोटं स्थितः। महापार्श्वोऽपि वीरत्वे महानासीत्। स लोहपट्टिशगदाघातैः अमितरामसैन्यममशात्; अन्ते च ऋषभमपि अचेतनमकार्षीत्। किन्तु ऋषभश्चेतनामासाद्य महापार्श्वं भूपतितं विधायावधीत्।

## अतिकायस्य वधः

भ्रातृणां पितृव्यस्य मृत्योः प्रतिशोधार्थं क्रुद्धः सर्वशास्त्रविशारदः अतिकायः अजेय सैनिकैः सचिवैश्च परिवृतः युद्धार्थं प्रस्थितः।

नीलमैन्द द्विविदप्रभृतयः सचिवाः क्रुद्धाः अतिकायेन सार्धं अतिभयङ्करं युद्धमकुर्वन्। अतिकायोऽपि विशेषवीरतां दर्शयित्वा सकलानपि विनिर्जितवान्। एतदवलोक्य लक्ष्मणः कुपितः महाधनु-र्ज्यामाकर्षन् सहसा अतिकायमाक्रान्तवान्, किन्तु हीरकभूषितेन अतिकायस्यामेधवर्मणा लक्ष्मणस्य सर्वे बाणाः प्रतिहताः। तदा

पवनदेवेन ब्रह्मास्त्रप्रयोगार्थं उपदिष्टो लक्ष्मणः धनुषि दिव्यब्रह्मास्त्रं योजयित्वा अतिकायं लक्षीकृत्य तन्मुमोच। ब्रह्मास्त्रमागतं वीक्ष्य अतिकायः गदापट्टिशशरशूलचर्मप्रभृतीनां सहायेन ब्रह्मास्त्रप्रतिघातार्थं विविधप्रयत्नमकार्षीत्। किन्तु सर्वमपि निष्फलीभूय तद्दीप्तिमद्ब्रह्मास्त्रं अतिकायस्य किरीटशोभितं मस्तकं स्कन्धच्युतं विधाय पुनर्लक्ष्मण-समीपं प्रत्यागतम्। अतिकायः दिनत्रयव्यापि भयङ्करयुद्धे असंख्य-रामसैनिकान् निहतवान्।

## इन्द्रजितः युद्धयात्रा

पुत्राणां भ्रातृणां च मृत्युवार्तया हतचेतनं रावणं सान्त्व-यन्निन्द्रजित् यज्ञस्थानोपविष्टः यथाविधि होमं च समाप्य दैवबलेन बलीयान् ब्रह्ममन्त्रविशारदश्च भूत्वा स्वकीयधनुरस्त्ररथप्रभृतीन् मन्त्र-सिद्धानकार्षीत्। अतिशौर्ययुक्तः चतुरङ्गसैन्यपरिचालनपरश्च सन् वायुरयगामिखरवाहितं रथमारुह्य युद्धार्थं प्रस्थितः।

इन्द्रजित् अदृश्यः सन् ब्रह्मास्त्रेण विविधदिव्यास्त्रैश्च काला-न्तकरुद्र इव रामसैनिकान्विनाश्य हनूमानादिवीरसचिवान् सन्त्रासयितु मारेभे। तदा रामः लक्ष्मणमब्रवीत्—'इन्द्रजित् ब्रह्मणः वरेण प्रदीप्तः, अनेन सहेदानीं योद्धुमशक्यम्; अनेन ब्रह्मास्त्रेण दिव्यास्त्र-जालेन च समग्रसेनाभिभूता। अहमपि निर्व्यापारः स्थितः। अयं (इन्द्रजित्) सजयश्रीलाभः लङ्कां प्रत्यागमिष्यते।

ब्रह्मास्त्रव्याहताः सर्वेऽपि परास्ता इव मृतवत्पतिताः आसन् । इन्द्रजिदपि रावणसमीपं प्रत्यागत्य विजयवार्तां घोषयांचक्रे ।

## हनूमतः औषधि–आनयनम्

तस्यां रजन्यां हनूमान् विभीषणश्च उल्मुकहस्तौ मृतप्राय जाम्बवत्समीपमागतौ । जाम्बवांश्च क्षीणस्वरेण हनूमन्तं कैलासपर्वतादपि पश्चात्स्थितौषधिपर्वतात् मृतसञ्जीवनी, विशल्यीकरणी, सावर्ण्यकरणी, सन्धानी च इति महौषधिचतुष्टयमानेतुमुपदिष्टवान् । हनूमानपि तत्क्षणमेव त्रिकूटपर्वतसकाशात् वायुवेगेन प्रस्थितः निमेषमात्रेण औषधिपर्वतं गत्वा विविधधातुसमन्वितमौषधिशृङ्गमुत्पाट्य महावेगेनाकाशवर्त्मना लङ्कामागतः । औषधिमाघ्राय रामलक्ष्मणौ सैनिकाश्च सुस्थाः संजाताः ।....ततः हनूमान् निमेषमध्ये औषधिपर्वतं यथास्थानं स्थापयित्वा पुनरपि लङ्कामुपस्थितः ।....

## अकम्पन प्रजङ्घशोणिताक्षधूम्राक्षकुम्भनिकुम्भ वधः

'रामलक्ष्मणौ सैनिकाश्च ब्रह्मास्त्रप्रभावमुक्ताः पुनरपि युद्धार्थं प्रस्तुताः' इति वार्तां चरमुखात् अधिगम्य लङ्केश्वरः किं कर्तव्यविमूढः सन् समर सचिवानाहूय रामलक्ष्मणवधार्थं लङ्कारक्षाविषये च परामर्शपरो बभूव ।

इतः कुम्भकर्णस्य रावणस्यान्य भ्रातॄणां च मृत्युसुयोगेन सुग्रीवः स्वसचिवैः सह कृतमन्त्रणः रामादेशेन लङ्काक्रमणार्थं प्रस्तुतः। सूर्यास्तानन्तरं शतशोऽल्कातहस्ताः सैनिकाः सुग्रीवनेतृत्वे लङ्कामभिप्रस्थिताः। सैनिकाः क्रमशः प्राकारमतिक्रम्य तोरणे प्रासादादिकेषु च अग्निप्रदानं कर्तुमारब्धाः। कतिपयक्षणेष्वेव वायुप्रेरितोऽग्निः सर्वत्र प्रसृतः सन् लङ्काऐश्वर्यं भस्मसाच्चकार। लङ्कावासिनः दग्धावस्थायां स्त्रीपुत्रैः सह व्याकुलाः पलायनपराश्च सुग्रीवसैनिकैः अपहृतप्राणा बभूवुः। रामलक्ष्मणौ सधनुष्टङ्कारं सैनिकान् लङ्काध्वंसकार्ये उत्साहयां चक्रतुः।

अत्र लङ्कापुर्याः रक्षार्थं चिन्तितः रावणः कुम्भकर्णपुत्रौ कुम्भनिकुम्भौ योद्धुं प्राहिणोत्। द्वावपि पितृतुल्यपराक्रमौ युद्धविशारदौ च। ते यूपाक्षशोणिताक्षप्रजङ्घप्रमुखैः सह सुसज्जितचतुरङ्गवाहिनीकाः अग्रेसरा जाताः। अयं च भीषणसंग्रामः अविराम पञ्चदिनपर्यन्त प्रचलितः। पक्षद्वयमपि प्राणपणेन युद्धयमानं विजयाभिलाषि अभूत्। विविधं रणकौशलं प्रदर्श्य तेजस्वी कुम्भः सुग्रीवसैनिकान् सचिवांश्च पीडितान्विध्वस्तांश्चाकार्षीत्। सुग्रीवेण सह तस्य द्वन्द्वयुद्धमभूत्। अन्ते सुग्रीव एकेन वज्रमुष्टिप्रहारेण कुम्भं भूतलशायिनं कृतवान्।

तदानीं निकुम्भः यमदण्डतुल्यं परिघं भ्रामयित्वा योद्धुमारभत। भ्रातृवधपरिशोधेच्छया सुग्रीवसैन्यविध्वंसपरः हनूमन्तं पुरो विलोक्य तस्य वक्षसि परिघं न्यक्षिपत्। परं परिघ एव चूर्णीभूतः। ततः हनूमान् निकुम्भं भूमौ पातयित्वा तद्वक्षः समारुह्य कण्ठे च चरणं निधाय मर्दयित्वावधीत्। चतुर्दिक्षु हाहाकारध्वनिरुत्थितः।

## मकराक्षवधः

कुम्भनिकुम्भवधवार्तादुःखितः रावणः अतिशोकान्वितः सन् खरपुत्रं मकराक्षमाहूयोक्तवान्—'वत्स! त्वया ससैन्यं गत्वा रामलक्ष्मणौ रामसैनिकांश्च सर्वानपि विनाश्य आगन्तव्यम्।'

इदमाकर्ण्य रावणं प्रणम्य प्रदक्षिणीकृत्य च मकराक्षः हुङ्कारेण चतुर्दिशः प्रकम्पय्य विपुलसेनापरिवृतः युद्धार्थमुपस्थितः शरवर्षेण च सकलान् त्रासयित्वा राममवलोक्योक्तवान्—'त्वामवलोक्याति क्रुद्धोऽहम्। अद्य पितृवधपरिशोधं कर्तास्मि। तव मांसं गृध्रशृगालानां भक्ष्यं भविष्यति। आह्वयामि त्वां द्वन्द्वयुद्धार्थम्। अस्त्रेण गदया बाहुभ्यां वा यथेच्छं युध्यमानः दृश्यतामस्मत्पराक्रमः।'

रामः सहास्यमुवाच—'हे वाग्युद्धपटो! स्थिरीभूय स्थितो भवेः। शीघ्रमेव त्वां त्वत्पितृसमीपं प्रेषयिष्यामि।'

द्वयोरपि तयोर्घोरयुद्धं प्रावर्तत। रामः दिव्यास्त्रप्रयोगेन मकराक्षस्य धनूंष्यस्त्राण्यनाशयत्। रुद्रदत्तमहाशूलेन मकराक्षः राममा-

क्राम्यत। रामः बाणचतुष्टयेन शूलं विखण्डितं विधाय पावकास्त्रेण मकराक्षवक्षः विदीर्णं कृतवान्। निहतः मकराक्षः भूतललुण्ठितोऽभूत्।

## मायासीता वधः रामस्य मूर्छा

'मकराक्षो निहतः' इत्याकर्ण्य रावणः क्रोधोद्दीपितः सन् इन्द्रजितमगादीत् —'वीर! दैवबलेन बलीयास्त्वं रामलक्ष्मणौ विनिहत्य आयाहि।'

इन्द्रजित् पितरं प्रणम्य यज्ञभूमिमायातः होमान्ते च अग्निदेवं सन्तर्प्य अदृश्यरथमारुह्य च सन्ततशरवर्षणेन रामलक्ष्मणौ सैनिकांश्च क्षतविक्षतान् जर्जरितांश्च कर्तुमारेभे।...

रामलक्ष्मणौ पीडितौ हतचेतनौ चावलोक्य इन्द्रजित् अकस्मात् लङ्कां प्रत्यावृत्य मायासीतामूर्तिमेकां रथे स्थापयित्वा पुनरपि युद्धस्थलमागतः। ससैन्यो हनूमान् युद्धार्थमागत्य अपश्यत्— रथोपरि उपवासक्लिष्टां मलिनवसनां एकवेणीधरां शोकातुरां सीतां इन्द्रजित् कोशमुक्तासि हस्तः सकेशाकर्षणं तां प्राहरत्; सीतां च 'हा राम! हा राम!' इत्युक्त्वा आर्तनादमकरोत्। तदवलोक्य हनूमान् क्रोधेन इन्द्रजितं प्रति प्रचण्डशिलामेकामक्षिपत्। अस्मिन्समये इन्द्रजित् तीव्रखड्गाघातेन अश्रुकृद्दन्तीं सीतां हत्वा विविधाक्षैः

रामसैनिकान् ध्वंसयितुमारभत। तदवलोक्य शोकाभिभूतो हनूमान् सैनिकान् युद्धात्प्रति निवर्त्य उक्तवान्—'यस्याः कृते प्राणानपि तिरस्कृत्य यूयं युद्धार्थं प्रस्तुताः सा सीतैव हता—किमधुना युद्धेन प्रयोजनम्? आगच्छत, रामायैमां दुःखवार्तां निवेदयामः।'

ससैन्यं हनूमन्तं प्रत्यावर्तमानमवलोक्य इन्द्रजित् सविजयघोषणं प्रयातः।

हनूमन्मुखात् 'सीता हता' इति निशम्य रामः मूर्छितः सन् भूमौ पतितः बाल इव रोदनपरोऽभूत्। लक्ष्मणस्तमालिङ्ग्य अनेकविधं सान्त्वयन् व्याहृतवान्—'आर्य उत्तिष्ठतु भवान्। परित्यज्यतां शोकः तव स्पर्शपूर्वकं सशपथमभिदधामि—अहं सीताहन्तारं इन्द्रजितं पराक्रमेण हनिष्यामि।'

अस्मिन्नेव समये विभीषणः आगत्य शोकसन्तप्तराममब्रवीत्—'सीतावधोऽसम्भवः। रावणः कदापि सीतावधस्य अनुमतिं न दास्यति। मया चरमुखेन ज्ञातम्—जानकी सीता अशोकवने विद्यते; इन्द्रजित मायाबलेन हनूमन्तं सैनिकांश्च मोहितानकार्षीत्। यस्याः सीतायाः वधः अक्रियत सा खलु मायासीता। अद्य सः निकुम्भिलायज्ञं विधास्यति तत्र देवानाहूय यज्ञसमाप्तिं कर्तुं शक्ष्यति चेत्स सुरासुरैरजेयः भवेत्। अत एव रामः त्वं मिथ्याशोकं परित्यज्य लक्ष्मणं यज्ञध्वंसार्थं

इन्द्रजिद्वधार्थं चानुमन्यस्व। लक्ष्मणः तीक्ष्ण शराघातेन यज्ञस्थगनं करिष्यति। इन्द्रजिद्वधस्य नास्ति कोऽप्यन्य उपायः।'

इत इन्द्रजित् मायासीतावधं विधाय निकुम्भिलायज्ञार्थं प्रस्तुतः सन् शोकपीडितपितरमागत्योक्तवान्—'हे महामते! देव हन्तः राजेन्द्र! अहं महाबलो मेघनादः, मयि जीवति किमर्थं भवान् दुःखित? अहं शत्रुवधपूर्वकं भवद्दुःखपरिहारं विधास्यामि। मायासीतावधेन रामं सुग्रीवं सैनिकांश्च हतवीर्यानकार्षम्। अधुनैव निकुम्भिलायज्ञागारे सद्यः अग्निदेवस्य प्रसादेन सांग्रामिकास्त्रशस्त्र रथादिकं प्राप्य शत्रुसंहारं करिष्यामि। पितः! भवान्निश्चिन्तो भवेत्।'

इति व्याहृत्य इन्द्रजित् यथाविधि दीक्षितः सन् यज्ञारम्भं कृतवान्। विभीषणमुखात्सर्वां वार्तामाकर्ण्य राम उक्तवान्—, 'इन्द्रजितं निखिलराक्षसविनाशि—आग्नेयास्त्रद्वारा विनाशयितुमहमेव यास्यामि।' तं विभीषणोऽब्रवीत्—इन्द्रजित् नान्यैर्वध्यः 'या व्यक्तिः द्वादशवत्सरपर्यन्तं आहारनिद्रावर्जिता तस्या हस्तेनैव दुरात्मनः मृत्युः'—इदमेव ब्रह्मणः विधानम्। अत एव हे राघवेन्द्र! लक्ष्मणहस्तेनैव इन्द्रजिन्मृत्युर्भवेत्।' रामः तत्क्षणमेव लक्ष्मणमाकार्योक्तवान्—'त्वया प्रभूत सेनया सार्धं यज्ञविध्वंसं विधाय रावणपुत्रो हन्तव्यः।'

लक्ष्मणः सहुंकारं दिव्यशरासनं जग्राह। विभीषणेन हनुमत्प्रभृति यूथपतिभिश्च सह दुर्जयप्रभूतवाहिनीं गृहीत्वा निकुम्भिला

यज्ञध्वंसपूर्वकं इन्द्रजिद्वधार्थं लङ्कानगर्यां प्रविवेश। रावणसैनिकेषु प्रतिरोधपरेषु लक्ष्मणः शतशः तीक्ष्ण शरनिकरैः चतुर्दिशः आच्छाद्य अग्रेसरो जातः। पक्षद्वयस्य तुमुलं युद्धमारभत। किन्तु 'लक्ष्मणः तीक्ष्ण शराघातमसहमाना रावणसैनिका हतोत्साहा सकोलाहलं पलायनपरा जाताः' इति विलोक्य इन्द्रजित्परित्यक्त होमः यज्ञशालातः बहिरायातः महता कोपेन च रथमारुह्य गृहीतशरासनः सौमित्रिं युद्धार्थमाहूयोक्तवान्—'हे सौमित्रे! अहं मेघनादः नास्मि तव मोक्षः मम हस्तात्; पुरत एव विभीषणमवलोक्य अवज्ञयोवाच—'त्वमस्मत्पितुः सहोदरो भ्राता * अत्रैव तव जन्माभूत्। इदानीं स्वजनैः सह शत्रुतान्यवहारं करोषि। त्वमतिपापी दुर्बुद्धिश्च! धिक् त्वा! पितृव्य इति कृत्वा न तव प्राणापहरणं कुर्याम्, अपसर।' इत्युक्त्वा अभिलक्ष्णममग्रसरो जातः। इन्द्रजितमवलोक्यैव दाशरथिः लक्ष्मणः क्रुद्धः सन् तं प्रति वज्रतुल्यशरसन्धानं विहितवान्। एतेन शराघातेन इन्द्रजित् क्षणमात्रं अचेतनावस्थायां स्थितः आरक्तलोचनः उत्थाय एकसमयावच्छेदेन बाणशतं विसृज्य लक्ष्मणविभीषणौ हनूमन्तं च

---

* पुराणाद्यनुसारं विभीषणः रावणस्य वैमात्रभ्राता। रावणादीनां पितुः महर्षि विश्रवसः तिस्रः पत्न्यः आसन्, पुष्पोत्कटागर्भे रावणकुम्भकर्णौ, मालिनीगर्भे विभीषणः राकागर्भे च खरस्य शूर्पणखायाश्च जन्म अभूत्।

दृढतरमविध्यत् । लक्ष्मणोऽपि मत्तः सन् शरवृष्टिं कर्तुमारेभे । इन्द्रजितः स्वर्णप्रभं वर्म लक्ष्मणस्य तीक्ष्णबाणैः खण्डशो भूत्वा पतितम् । रावणात्मजः महता पराक्रमेण लक्ष्मणं प्रति सहस्रनिशितशरसन्धान परो जातः ; परस्परं प्रति आक्राम्यतोस्तयोः अतिभीषणं जन्यं समारब्धम् । द्वावपि सर्वांगेषु शरनिकराच्छन्नौ शोणिताक्तशरीरौ चाजायेताम् । द्वावपि महाबलौ ; कयोरपि जयपराजयौ अनिश्चितौ । अस्मिन्नेव समये वीरलक्ष्मणः पञ्चभिस्तीक्ष्णशरैः इन्द्रजितः रथाश्व-सारथीन्विनाश्य हस्तलाघवप्रदर्शनपूर्वकं तस्य कार्मुकमच्छिनत् । इन्द्रजित् सत्वरमेव अन्यद्धनुर्गृहीत्वा तस्योपरिप्रत्यञ्चा समारोपणसमये एव लक्ष्मणः बाणत्रयेण तच्छरासनमपि छिन्नं कृत्वा सास्फोटं तस्थिवान् । इन्द्रजित् पुनरपि गृहीतान्यशरासनः सूर्यसन्निभानेकनिशितशरैः लक्ष्मणं रामसैनिकांश्च व्याकुलान् विध्वस्तांश्च कर्तुमारब्धः । तदानीं लक्ष्मणः मन्त्रपूतमेकं दिव्यमैन्द्रास्त्रं आकर्णाकृष्टशरासनः इन्द्रजितं प्रत्यक्षिपत् । तस्यामोघबाणस्याघातेन इन्द्रजितः उष्णीषसंपन्नं उज्ज्वलं कुण्डलशोभिनं सुन्दरमस्तकं विच्छिन्नं सत् भूतले पतितम् । इन्द्रजिता सह लक्ष्मणस्य दिनषट्कव्यापियुद्धे अनेक सैनिकाहता हता लङ्का च विशेषतो विध्वस्ता बभूव ।

## रावणस्य क्षोभः

इन्द्रजिद्वधानन्तरं रणक्लान्तः लक्ष्मणः रक्ताक्तशरीरः विभी-षणहनूमत्स्कन्धाववलम्ब्य आगतः रामचन्द्रं च प्राणंसीत् । तं गाढमा-

लिङ्ग्य मस्तकावघ्राणं च विधाय रामः गद्गदस्वरेण लक्ष्मणमुवाच—सौमित्रे! त्वयातिदुष्करं कार्यं सम्पादितम्। इन्द्रजिद्वधेन रावणस्य दक्षिण हस्त एव च्छिन्नः! इदानीं सीतोद्धारः सम्भवेत्।'....

सुषेणः औषधप्रयोगेन लक्ष्मणं सुस्थं कृतवान्। आहत सैनिकाश्च चिकित्सया नीरोगा जाताः।...

इतः 'महाबलः मेघनादः लक्ष्मणेन हत' इत्याकर्ण्य रावणः मूर्छितः भूलुण्ठितश्चाभूत्। अनन्तरं किञ्चिदाश्वस्य कातरतया विलपितुमारब्धः—'हा पुत्र! हा इन्द्रजयि वीर! त्वं यौवराज्यं, लङ्कां मातरं भार्यां सुहृद्वृन्दं च विहाय क्व प्रयातोऽसि? अद्य देवाः लोकपालाः महर्षयश्च तव निधनेन सुखनिद्रामनुभविष्यन्ति। तव विरहेण सकानना पृथिवी त्रिलोकी च शून्याजनि इति मन्ये त्वयि प्रयाते ममापि यमसदनगमनमेव श्रेय आसीत्। रामलक्ष्मणसुग्रीवादयः जीविताः ममैतादृशशल्योद्धारं विनैव कथं त्वमग्रतः प्रचलितः!'

अनन्तरं अतीव क्रुद्धः रावणः सन् शत्रुविनाशार्थं दृढसंकल्पः सन् सैनिकान्युद्धयात्रार्थमादिशत्, पुत्रशोकेन च अतीव सन्तप्तः दिग्विदिक् ज्ञानशून्यश्च निर्मलमेकमाकाशवर्णं खड्गं गृहीत्वा सीता-वधार्थं धावितः। स्त्रोसचिवाश्च तमनुजग्मतुः। रावणोग्रमूर्तिदर्शनेन चेटीवृन्दवेष्टिता सीता भयेन मूर्छितामवलोक्य सुपार्श्वो नाम रावणस्य

को बुद्धिमान् मन्त्री रावणमुक्तवान् —'राजन्! पश्यतु पश्यतु भवान्, सीता भवतः भयात् मूर्च्छिता। एतामबलां हत्वा भवतः किमिव पौरुषं स्यात्? सीतया तु तव न कोऽपि अपराधः कृतः। हे वीर्यवन्! भवान् कुलीनः, यथाविधि वेदाध्ययनं ब्रह्मचर्यपालनं च कृत्वा त्वया समावर्तनस्नानमाचरितम्। भवान् स्वधर्मपरायणः वीरश्रेष्ठश्च। क्रोधवशेन स्वधर्मं परित्यज्य कुतः वैदेही हत्यार्थं प्रयाति? भवान् पौरुषबलेन अचिरादेव रामलक्ष्मणौ युद्धविनाश्य सीतां प्राप्स्यसि।'

सुपार्श्ववचनमाकर्ण्य रावणः सीतावधान्निवृत्य सत्वरं मन्त्रणागारमेत्य सचिवैः सार्धपरामर्शपरो बभूव।....

आरोहिभिः सह सहस्रशो हस्तिनः अश्वान् असंख्यान्सैनिकांश्च युद्धनिहतानवलोक्य लङ्काया प्रतिगृहं क्रन्दनध्वनिरुत्थितः। तं निशम्य रावणः दीर्घनिश्वासपरः ओष्ठदंशनं कुर्वन् आरक्तनयनः— सचिवान् युद्धयात्रायाः समग्रायोजनार्थमादिदेश। रावणस्याज्ञया महोदरमहापार्श्वविरूपाक्ष प्रभृतयोऽमात्या महत्पृतन्यासज्जिता; रावण सञ्चालितं संख्यातीतहस्त्यश्वखरोष्ट्रयुतं अमितपदातिकं विशालं सैन्यमपि युद्धयात्रार्थं निर्गतम्। रावणः स्वयं दिव्यास्त्रसम्पन्नः नानालङ्कारभूषितश्च सन् युद्धार्थं प्रस्तुतः। आशीर्वादग्रहणार्थं शुक्राचार्यगुरुसन्निधं गतः; ते प्रणम्य च कृताञ्जलिरुक्तवान् —' हे

भगवन्! राघवरामचन्द्र इत्थं यूथपतिभिः सह लङ्कानगरीप्रध्वंसपरः। मम पुत्रा आत्मीयाश्च सर्वेऽपि निहताः। भवान् सद्गुरुः विद्यमाने भवति कथमीदृशं मम दुःखम्? कंचिदुपायमुपदिशतु भवान्।' गुरुः शुक्राचार्यः उक्तवान्—'हे राजन्! त्वं मत्सकाशात् शक्तिमन्त्रमेकं गृहाण। गच्छ शीघ्रं अनेन मन्त्रेण होमं विधेहि यदि निर्विघ्नतया होम समाप्तिर्भवेत् तर्हि अस्माद्यज्ञात् दिव्यरथाश्वशरासनाः अक्षयतूणीरः शरनिकराश्चोद्भवन्ति। एतद्युद्धोपकरणसज्जितस्त्वं सर्वैरप्यजेयः स्याः।'

रावणः गुरुं प्रणम्य तं मन्त्रं च गृहीत्वा तत्क्षणमेव यज्ञभूमिं प्राप्तः; चतुर्दिक्षु सशस्त्रप्राहरिकानवस्थाप्य यथाविधि अभिचारं होमारम्भं च कृतवान्। इतश्च विभीषणः यज्ञस्थले धूमपुञ्जमवलोक्य चरमुखेन रावणस्य यज्ञारम्भप्रवृत्तिमुपलभ्य अत्युद्विग्नः सन् रामचन्द्र प्रति सर्वं ज्ञापयित्वोक्तवान्, 'लङ्केश्वरस्य होमः समाप्तश्चेत्तर्हि स त्रिभुवनेऽपि अजेयः भविष्यति अतः शीघ्रं यज्ञान्तरायप्रत्युत्पादनार्थं सैन्यं प्रेष्यताम्।'

रामचन्द्रः तत्क्षणमेव सुग्रीवेण सह कृतपरामर्शः अङ्गदहनूमत्प्रभृतियूथपतीन् अमितसैनिकैः यज्ञे प्रत्यूहकरणार्थं प्रेषयामास। उच्चप्राकारमुल्लंघ्य सैनिकाः राजप्रासादन्तः पुरं च ध्वंसयामासुः।.... अङ्गदेन ससैन्यं प्राहरिकान्परास्य यज्ञगुहायां प्रविश्य होमद्रव्याणि

होमकुण्डं उपकरणादिकं च प्रणाश्य अपमानितोऽपि रावणः मुद्रितनयनः दृढासनोपविष्ट आसीत्। हनूमान् ससैन्यः अन्तःपुरं प्रविश्य मन्दोदरीप्रभृतिरावणमहिषीः केशाकर्षणपूर्वकं प्रासादाद्बहिरानीतवान्। ताश्च समाकर्षन् रावणस्य पुरत आनीय तासां वस्त्राभरणानि शरीरेभ्यः पृथक्कर्तुमारभन्त। मन्दोदरी रावणस्य पुरतः कातरस्वरेण क्रन्दन्ती उक्तवती—'स्वामिन्। त्वमेतादृशं लज्जाशून्योजातः यत्तवपुरतोऽपि तव स्त्रियः केशपाशमाकर्षन्तः तामपमानितां कुर्वन्ति; तथापि निजपत्नीरक्षां कर्तुमसमर्थस्त्वम्। त्वं पुनर्होमपरोऽसि! कीदृशोऽयं होमः? पापाचरी शत्रुः यस्य पुरतस्तत्स्त्रीमपमानयति तर्हि मृत्युरेव श्रेयान्! हा मेघनाद! हा पुत्र! तव जननी शत्रुणा पीड्यते! त्वयि जीवति ममेदृशी अवस्था भवेत्किमु? तव पितः जीवनरक्षार्थं निजपत्नीमानसम्मानं च त्यक्तवान्!'

रावणः मन्दोदरीविलापेन चञ्चलमानसः ध्यानासनं परित्यज्य उज्ज्वलखड्गहस्तः शत्रून् बहिष्कृतवान्।....सुग्रीवादिसैन्यगणाः यज्ञविध्वंसं विधाय सानन्दं रामसन्निधौ प्रयाताः।

रावणः मन्दोदरीं सान्त्वयन्नब्रवीत्—भद्रे! इदमखिलं घटनाजातं दैवायत्तं खलु। जीवन्ती एतादृशं बहुतरं द्रक्ष्यसि।.... शोकस्त्वया परित्याज्यः अधुनैवाहं युद्धार्थं प्रतिष्ठे। रामलक्ष्मणौ हत्वा

प्रत्यावर्तिष्ये। अथवा राम एव वज्रतुल्यं शरनिकरैर्मामेव विदारयिष्यति। ततस्त्वं सीतां हत्वा मम प्रेतकार्यं सम्पादयिष्यसि। अथवा मयै वसार्धं सहगमनं विधास्यसि।'

रावणस्य वचनजातमाकर्ण्य मन्दोदरी क्रन्दन्ती अभाषत—हे नाथ! रामः न मानुषः स तु स्वयं भगवान् विष्णुः। तेन सह वैरं परित्यज्य सीतां तत्समीपं प्रेषय। वंशमर्यादायां कुलगौरवे रूपगुणयोश्च सीता कस्मिन्नपि अंशे मामतिक्रमितुं न समर्था तथापि त्वं सीतां किमर्थं कामयसे? सीतां प्रत्यर्पय। वैरावसानं जायताम्, ततः आवां विभीषणाय राज्यं समर्प्य वनगमनं करिष्यावः।'

रावणः मन्दोदरीमुवाच—'भद्रे! रणस्थले न केवलं पुत्र भ्रातरः अपि तु सर्वेऽपि लङ्कावासिनः राघवहस्तेन निहता निगृहीताश्च केवलं मदर्थम्। किमर्थमिदानीमहं कापुरुष इव वनवासी भूत्वा जीवनधारणं करिष्यामि? उच्यताम! रामेण सह योत्स्यामि—सुतीक्ष्णरामबाणविदीर्णशरीरः विष्णोः परमपदं प्राप्स्यामि। अहं राघवं विष्णुं, सीतां च लक्ष्मीं प्रत्यभिजानामि—रामहस्तेन मृत्यु प्राप्य परमपदं प्राप्यते इति कृत्वैव मया रामेण सार्धं वैरभाव उत्पादितः सीतापहरणं कृतम्। हे प्रिये! संसारपरिजनपरित्यागपूर्वकं मुमुक्षवः यद्विमलं परमानन्दमयं स्थानं लभन्ते तदेव स्थानं रामहस्तान्मृत्युमवाप्य प्राप्स्यामि। मामेतस्मान्मार्गात्प्रतिनिवर्तितुं मा उपदिश।'....

## रावणस्य युद्धयात्रा

राज्ञीं मन्दोदरीमालिङ्ग्य भीषणाकृतिरावणः घोरतरयोद्धृवृन्द-परिवृतः भयावहं दृढतरं रथमारुह्य सहसा युद्धार्थं प्रस्थितः। अयं रथः पिशाचतुल्यभीषणमुखैः क्रूराश्वविशेषैः परिचालितः सर्वविधास्त्रशस्त्रैः युद्धोपकरणैश्च सुसज्जितः। समरनिष्ठुरं भयावहरावणं युद्धावतीर्णमवलोक्य सुग्रीवसैन्यं भयाकुलं पलायनपरं च जातम्।....

पक्षद्वयस्य तुमुलं युद्धमारब्धम्। विरूपाक्षखड्गाघातेन सुग्रीवः मूर्च्छितोऽभूत्। ततश्च स लब्धसंज्ञः सन् विरूपाक्षस्य मस्तकं प्रचण्डमुष्ट्याघातेन तं धराशायिनमकरोत्। अनन्तरं महोदरेण सार्धं सुग्रीवः खड्गयुद्धे प्रवृत्तः अभूत्। महोदरेण सुग्रीवस्य वर्मणि प्रचण्डाघातः कृतः येन खड्गं वर्मणि सक्तमभूत्। महोदरः खड्गाकर्षणपरो जातः तदैव सुग्रीवः प्रचण्डखड्गाघातेन तस्य मस्तकं स्कन्धच्युतमकार्षीत्। महावीरोऽङ्गदः परिघं निक्षिप्य महापार्श्वस्य धनुर्बाणौ उष्णीषं च भूमिलुण्ठितं विधाय वज्रमुष्ट्याघातेन तस्य वक्षश्चूर्णीकृतवान्।

## लक्ष्मणः शक्तिशेलाहतः

सचिवाभिहतानवलोक्य क्रोधान्वितः रावणः स्वसारथिमुवाच-रामस्य सम्मुखं रथं प्रापय। रावणमवलोक्यैव रामः प्रचण्डज्या-

निर्घोषमकार्षीत् । लक्ष्मणोऽपि योद्धुं पुरतः उपस्थितः । रावणस्तं तिरस्कृत्य राम प्रति शरक्षेपणपूर्वकमग्रतश्चलितः— रामः पावकास्त्रेण रावणनिक्षिप्तानखिलानपि शरान् खण्डितांश्चकार । तदानीं रावणं महता-क्रोधेन निजं प्रति मयनिर्मित महाद्युतिमद्रौद्रास्त्रक्षेपणपरमवलोक्य रामः गन्धर्वास्त्रेण लीलयैव तन्न्यवारयत् । तदानीं रावणः क्रोधेन दिग्विदिग् ज्ञानशून्यः समन्त्रोच्चारणं सौरास्त्रं प्रयुयोज— यस्माज्ज्वलच्चक्रसमूहो निर्गत्य चतुर्दिशः ध्वंसयामास । रामः दिव्यास्त्रेण तदपि सर्वं निवारितवान् । इतः लक्ष्मणस्य प्रचण्डशराघातेन रावणस्य ध्वजधनुः सारथिषु विनष्टेषु विभीषणभीषणगदाघातेन अश्वमस्तकानि चूर्णीभूतानि । विभीषणमवलोक्य रावणः क्रोधेन रथादवतीर्य तं प्रति शक्तिनिक्षेपं कृतवान् किन्तु सा शक्तिः लक्ष्मणदिव्यशराघातेन छिन्ना । तेन रावणः पुनः महाद्युतिमत्प्रचण्डशक्त्यस्त्रं हस्ते गृहीत्वा लक्ष्मणमब्रवीत् —'अरे बलदर्पित! त्वं शूलाघातेन विभीषणं परिरक्ष्य मम शूलं व्यर्थीकृतवान् । इदानीमेतच्छक्त्याघातात् आत्मरक्षां कथं विधास्यसीति अवलोकयामि!' इत्युक्त्वा मयनिर्मितं अष्टघण्टासमन्वितं भीषणशक्त्यस्त्रं लक्ष्मणं प्रति महता वेगेन न्यक्षिपत् । इयं दीप्यमाना शक्तिः लक्ष्मणदेहं विदीर्य तं भूपतितमकरोत् ।

तदवलोक्यापि रामः शोकानभिभूतः सन् सर्वप्रयत्नेन रावण-वधार्थं युद्धपरोऽभूत् । सैनिकान् लक्ष्मणस्य शरीरात् शक्त्युद्धारप्रयत्ने

ऽसफलीभूतान्विलोक्य रामः सत्वरमागत्य तां शक्तिमुत्पाटय भग्नां चकार। इतश्च रावणः मर्मभेदिशरवृष्टिमारभत। किन्तु रामस्तेनापि अविचलितः लक्ष्मणमालिङ्गय सुग्रीवं हनूमन्तं चाब्रवीत,—'यूयं लक्ष्मण रक्षापरा भवत। इदानीं मम चिराभिलषितपराक्रमप्रदर्शनसमयः उपस्थितः। शीघ्रमेव द्रक्ष्यथ मही अरावणः अरामः वा जायेत।' इत्युक्त्वा रामः रावणं प्रति जलवृष्टिमिव दिव्यास्त्रशरसन्धानमारभत। अल्पक्षणेनैव रावणः आहतो निपीडितश्च भूत्वा बलादिव परित्यक्तरण-स्थलः जातः।...

## लक्ष्मणार्थं रामस्य शोकप्रकाशः

रावणे प्रयाते रामः लक्ष्मण समीपमागत्य गद्गदकण्ठं सुषेण-मुक्तवान्—, 'मम प्राणाधिकः प्रियो भ्राता शक्तिशेलविद्धोऽचेतनश्च पतितः। किमर्थमहं युद्धयेयम्! जीवनेनापि मम किं प्रयोजनम्?

देशे देशे पत्नी प्राप्येन भातृ बान्धवा अपि सुलभाः किन्तु लक्ष्मणसदृशः सहोदरभ्राता न कुतोऽपि लभ्येत; अयं सर्वास्वपि विपत्सु मम छायेवावस्थितः। एनं हारयित्वा राज्यसिंहासनमपि कण्टकाकीर्णमिति मन्ये। अयोध्यां प्रत्यावर्त्य कौसल्यासुमित्रामातरौ किं वक्ष्यामि?'

रामं शोकविह्वलमवलोक्य सुषेणस्तमाश्वासयन्नुवाच,—'हे नरशार्दूल! शोकस्त्वया परित्याज्यः। लक्ष्मणः न गतप्राणः स

केवलं शक्ति-आच्छन्नः—इदानीं तस्य हृदयस्पन्दनं न स्थगितम्। शीघ्रमेव स स्वस्थीभूय उत्थास्यति।' ततः स हनूमन्तं लक्ष्यीकृत्योवाच—'त्वया त्वरितमोषधिपर्वतसकाशात् विशल्यकरणी, सावर्ण्यकरणी, सञ्जीवनी सन्धानी च एताश्चतस्रः महौषधयः आनेतव्याः।'

हनूमानपि द्रुतमोषधिशैल गतः औषधिसंग्रहकार्ये विलम्बो भवेदिति विचार्य पर्वतशृङ्गस्यांशमेकमुत्पाटय आनीतवान्। सुषेणेन औषधिसंग्रहपूर्वकं प्रयोगे कृते एव लक्ष्मणः सुस्थः सन्नुत्थितः तदवलोक्य रामः लक्ष्मणं वक्षसालिङ्ग्याब्रवीत्—'भ्रातः! भाग्यक्रमेण त्वां स्वस्थमवलोकयामि। त्वयि प्रयाते सीतोद्धारः, विजयलाभः, जीवनं वा सर्वमपि निष्फलमिवाभविष्यत्। रामस्य सप्रेमवचनं निशम्य आनन्देन लक्ष्मणः वक्तुमपि असमर्थः बभूव। ततः सः रामे कृतदृष्टिपातः अगादीत्—'आर्य! मा भवान् शत्रुवध प्रतिज्ञां विस्मार्षीत्। यथाशीघ्रं शत्रुवधो विधातव्यः।

## रावणस्य पुनरपि युद्धक्षेत्रे आगमनम्

तत्क्षणमेव रावणः किञ्चिदाश्वस्तः सन् षोडशभीषणाकृतिखरयोजितरथमारुह्य रणभूमिं प्रत्यावृतः रामे तीक्ष्णशरवर्षणपरश्च बभूव। *

---

* अब्दरामायणानुसारं रामरावणयोरवशिष्टमायोधनं अष्टादशदिनव्यापि अभूत्। सप्तदशदिनपर्यन्तं युद्धं विधाय अष्टादशदिने राम

अस्मिन्समये इन्द्राज्ञया मातलिः सरथः युद्धभूमिमागत्य राममगादीत्,—'राघवेन्द्र! देवराज इन्द्रः तव विजयसूचकं रथं, ऐन्द्रं धनुः, शरकवचे, शक्तिं च प्रेषितवान्। भवता इमं रथमारुह्य युद्धे रावणः हन्तव्यः।'

---

बाणेन रावणस्य मृत्युर्जातः। एतस्माद्युद्धात्पूर्वमपि रावणेन सह रामस्य द्विवारं युद्धमभूत्। (अधिकांशरामायणमतेत एकवारमेव) (१) दिनत्रयं (२) दिनं च। द्विवारमपि रावणं विशेषरूपेणाहतमवलोक्य रामेण तस्योपरि अधिकमस्त्राघातो न कृतः, अपि तु तं लङ्कां प्रत्यावर्तयितुमुपादिशत्। रावणेनापि तदेव कृतम्। अवशिष्ठ युद्धं यत् अष्टादशदिनव्यापि अभूत् तस्मिन्नपि रावणः द्वित्रिवारमाहतो भूत्वा रणस्थलपरित्यागार्थं बाधितो जातः। रामचन्द्रस्य रथो नासीत्। तेन, यथापूर्वं भूतलस्थितेनैव रथिना रावणेन सह युद्धमक्रियत। अत्रापि रावणस्य दौर्बल्यं नीतिविरुद्धमाचरणं च स्फुटी भवति।

अवशिष्टयुद्धस्य प्रथमदिवसे एव इन्द्रेण रामस्य कृते रथः प्रेषितः अथवा यस्मिन्दिने रावणवधो जातः तस्मिन्नेव दिने इन्द्ररथमारुह्य रामचन्द्रः रावणेन सार्धं द्वन्द्वयुद्धमारभत, तद्वर्णनोल्लेखः कुत्रापि रामायणे न दृश्यते। तेन मन्यामहे केवलं रावणवधदिवसे एव इन्द्ररथ आगतः यमारुह्य युद्ध्यमानो रामः रावणं पराजेतुं हन्तुं च

निशम्यैतद्रामः प्रमुदितः सन् तं रथं प्रदक्षिणीकृत्य आरूढवान् । तदानीं रामरावणयोः रोमहर्षणं भयङ्करं द्वन्द्वयुद्धं समारब्धम् । परमास्त्रवित् रामचन्द्रः गान्धर्वास्त्रद्वारा गान्धर्वबाणान् देवबाणैश्च दैवास्त्राणि निवार्य रावणोपरि शतशो दिव्यास्त्र सन्धानं

---

समर्थोऽभूत् । 'रामः स्वयं कीदृशास्त्रप्रयोगेन रावणं हतवान्' अस्मिन्विषयेऽपि सर्वरामायणानां नास्ति ऐकमत्यम् ।....

कविः वाल्मीकिः स्वरामायणग्रन्थे लङ्काकाण्डम्—१३० सर्गैः ५६२४ श्लोकैश्च रचयामास । किन्तु एतादृशविस्तृतयुद्धकाण्डपठनेन सर्वमपि सदृशमेव प्रतिभभाति । नास्ति तत्र किमपि युद्धवर्णनवैचित्र्यम् । सर्वत्रापि सुग्रीवसैन्यं सचिवाश्च वृक्षप्रस्तरपर्वतशिखरैरेव युद्धरता जायमाना दृश्यन्ते । कोटिशः सैनिकाः महतो वृक्षान्गृहीत्वा युद्धप्रसक्ता इत्येका विचित्रा घटना खलु !

सुग्रीवः तस्य सैनिकाश्च केषामपि शस्त्रास्त्राणामुपयोगं नाजानन् किमु ? क्वचिद्गदायाः खड्गस्य वा उपयोगः दृग्गोचरो भवति । कविः वाल्मीकिः सुग्रीवसैनिकानां कृते खाद्यसामग्रीरूपेण यथा फलमूलकन्दपत्राणां व्यवस्थां कृतवान् तथैव तेषां युद्धार्थं वृक्षप्रस्तरादिकमेकीकृत्य स्थापितवानिव ! वाल्मीकिमतेन रामसैनिकानां संख्या 'एकसहस्रकोटिः' रावणसैन्यसंख्या च दशसहस्रकोटिः'

कर्तुमारभत । रावणो अतिगर्वितः कुपितश्च भूत्वा शतशो बाणवर्षणेन अक्लिष्टकर्माणं रामचन्द्रं पीडयित्वा इन्द्रसारथिं मातलिं रथाश्वांश्च अविध्यत् *। ततः पुनरेकबाणेन इन्द्ररथस्य सुवर्णमयध्वजं छित्वा

---

अर्थात् दशगुणादपि अधिकसंख्य सैनिकैः सह रामसैन्यं युद्धरतमभूत्। एतादृशी विशाल सैनिकसंख्या अविश्वास्या-अवश्यमेव 'कोटिशब्दः सम्यक्संख्या वाचको न वा' इत्यपि विवादग्रस्तम् ।

* इन्द्रः देवानामीश्वरः देवाश्च सूक्ष्मशरीरिणः । किन्तु अपीन्द्रः स्थूल देही? अपि तस्य सारथिः रथः अश्वाश्च सर्वेऽपि जागतिकपाञ्चभौतिकदेहिन इव स्थूलशरीरधारिणः ये रावणशरैर-विध्यन्त?....कस्यापि रामायणस्य मतेन अगस्त्यऋषिः रामस्य कृते रथसमवेतानि अनेकशस्त्राणि प्रेषयामास । अगस्त्यप्रेषितं रथमारुह्य अवशिष्टकतिदिनपर्यन्तं रामः रावणेन सह अयुद्धयत एतदतीव स्वाभाविकं प्रतिभाति ।

रावणः देवानपि पराजितवान् —मेघनादः इन्द्रोपरि विजयान्वितः अभूत् । एतद्घटनाजातमपि दुर्बोध्यं प्रहेलिकापूर्णमिव! एते सर्वे देवाः स्वर्गलोक वासिनः अथवा देवतोपाधिधारिणः? देवलोक-वासिसूक्ष्मदेहधारिभिः सार्धं मर्त्यलोकनिवासिनां स्थूलदेहिनां युद्धं कथं सम्भवम्? मन्त्रशक्तिसहायतः अस्त्रशस्त्रैः सह वा? अयमपि विस्मय विषयः!

पातितवान् । तदवलोक्य रामचन्द्रः अतीव कुपितः सन् आसुरास्त्रजालैः रावणमाहतं कृतवान् ; येन रावणोऽपि सक्रोधमारक्तनेत्रः सिंहनादं कृत्वा शत्रुविदारक—अतिदारुण शूलास्त्रं रामं प्रति निक्षिप्तवान् । तद्वीक्ष्य हस्तलाघवप्रदर्शनपूर्वकं शतबाणैरेतं शूलं अन्तरिक्ष एव चूर्णीचकार । अतिकोपान्वितश्च सन् रावणं प्रति वासवदत्तं शक्त्यस्त्रं न्यक्षिपत् । इतश्च रामः शक्ति—अस्त्रनिक्षेपेण सार्धं शतशरैः रावणस्य अश्वानाहतवान्, एकेनाशनितुल्यबाणेन च रावणललाटमाविध्य सास्फोटमतिष्ठत् । रामबाणैरतिविद्धः सन् रावणः अतिखिन्नः क्लिष्टश्चाभूत् ।

## आहतरावणस्य रणस्थलपरित्यागः

किन्तु क्षणकालानन्तरमेव रावणः महता क्रोधेन समुद्यत-शरासनः राघवं प्रति रथं प्रेरयितुं सारथिमादिशत् । मेघो वारि धारामिव च रामस्योपरि शतशो बाणवृष्टिं कर्तुमारब्धवान् । तेनापि किंचिदप्यविचलितः रामः कठोरस्वरेण रावणं 'चोरः' असहायनारी अपहारकः, दुष्कृतिपरायणः, दुर्मतिः कापुरुष इत्युक्त्वा तिरस्कारपरः दिव्यास्त्र स्मरणं कृतवान् । अस्त्रदेवता आविर्भवन्तीः विलोक्य रामः महता उल्लासेन रावणोपरि शरवृष्टिप्रवृत्तोऽभूत् । रावणमत्यन्तमाहतं धनुराकर्षणे शरक्षेपणे चासमर्थं वीक्ष्य तस्य सारथिः द्रुतं रणस्थलात्

तं गृहीत्वा प्रस्थितः।...क्षणकालानन्तरं रावणो लब्धचेतनः सक्रोधं सारथिमुक्तवान्—'दुर्बुद्धे! अस्मदभिप्रायमजानन्नेव किमर्थं त्वया रथं अपसार्य आनीतः? अस्मत्कीर्ति तेजोवीर्याणि नाशयित्वा शत्रोः पुरतः मम कापुरुषत्वं प्रस्थापितम्।—ध्रुवं त्वया शत्रोः सकाशात् उत्कोचं स्वीकृत्य एतादृशं निन्दनीयं कृत्यमाचरितम्! मया कथमपि न क्षन्तव्योऽसि त्वम्।' रावणस्य परुषवचनं निशम्य सारथिः विनीतभावेनोक्तवान्—'महाराज! न मया भीतेन प्रमत्तेन स्वीकृतोत्कोचेन वा एतादृशं कार्यमकारि। भवन्तं रणक्लान्तं क्षीणबलं अश्वांश्च आहतानवलोक्य मया रथः परावर्त्य आनीतः। भवद्यशोवृद्ध्यर्थमेव मयेदमाचरितम्। शान्तेन भवताहं क्षन्तव्यः।' सारथेः वचनेन तुष्टः रावणः तस्मै स्वहस्ताभरणं उपहारी कृत्य पुनरपि रथं रणस्थलं प्रेरयितुमादिदेश।

## रणस्थले देवैः सह अगस्त्यऋषेरागमनम्

देवैः सह रणस्थलमेत्य अगस्त्यमुनिः रामं संबोध्योक्तवान्—'हे महाबाहो! तुभ्यमहं सर्वशत्रुविनाशनं सनातनमेकं अतिगुह्यं आदित्यहृदयस्तवं पाठयामि *; त्वया एतेन स्तवेन सर्वमङ्गल-

---

* सम्पूर्णोऽपि आदित्यहृदयस्तवः वाल्मीकिरामायणे विद्यते। अस्माभिः सारानुवादः अत्र दीयते।

निदानस्य पापराशिनाशिन: चिन्ताशोकप्रशमनकारिण: देवासुरवन्दितस्य भुवनेश्वरसूर्यदेवस्य उपासना कार्या। अचिरादेव त्वं शत्रुवधे समर्थ: स्या:। अयमेव स स्तव: — हे सर्वदेवमय! तेजस्विन्दिवाकर! भवाँल्लोक स्रष्टा ब्रह्मा, लोकपालको विष्णु:, त्रिलोकसंहारको महेश्वरश्च।....अविनाशि ब्रह्मविद्यासहायेन भवाञ्ज्ञानयोग्य:।....देवमातु: अदितेर्गर्भे जातोऽसि अत: भवान् अदिति पुत्र:, परमानन्द आकाशस्वरूप: अतो भवान् शब्द:। ऋक्सामयजुषां प्रतिपाद्यविषयोऽपि भवानेव। भवत्स्वरूपं द्वादशप्रकारं अतो भवान्द्वादशात्मा। नमो भवते! भवान् पूर्वगिरि:। भवते नम:! भवान् पश्चिमाद्रि: दिनाधिपतिश्च भवते नम:। भवान् ब्रह्मलोकपर्यन्तं सकललोकस्य जयप्रद:।.... सहस्रशो जीवा: भवदंशस्वरूपा: अतो भवान् सहस्रांशु:।— असकृद्भवते नम:। भवान् सृष्टिकर्तारं ब्रह्माणं, स्थितिकर्तारं नारायणं, संहारकर्तारं रुद्रं च स्वस्वकार्येषु प्रवर्तयसि—नमो भवते! भवान् तमोघ्न:, हिमघ्न:, शत्रुघ्न:; भवानमितात्मा। भवान् कृतघ्नान्नाशयति। भवांश्चिदानन्द:ज्योतिस्वरूप:....भवान् लोक साक्षी नमो भवते! इत्यादि। तत: अगस्त्य उक्तवान् —'हे रामचन्द्र! दुर्गमस्थाने, भये आपदि दु:खे वा दिवाकर नामकीर्तनेन न कोऽपि क्लिश्यते। राम! त्वं एकाग्रचित्तेन इमं जगत्पतिं देवदेवं दिवाकरं पूजयित्वा त्रिवारमेतदादित्यहृदयं पठे: तेनैव युद्धे जयं प्राप्नुया:। महाबाहो!

एतेन त्वं मुहूर्तमात्रेणैव रावणं हन्तु समर्थः स्या इति ध्रुवम् ।' इत्युक्त्वा अगस्त्यमुनिः प्रस्थितः । ऋषिप्रवरागस्त्यमुनेः आदित्यहृदयं प्राप्य महातेजस्वी रघुनन्दनः विगतशोको जातः । संयतेन्द्रियश्च सन् त्रिवारमाचमनपूर्वकं प्रीत्या एकाग्रचित्तः आदित्यविनिहितदृष्टिः 'आदित्यहृदयं' जपं समाप्य अतुष्यत् । ततो वीर्यवान् रामः रावण मग्रतः समागतमवलोक्य धनुर्बाणौ गृहीत्वा हृष्टचित्तः तद्विजयप्रयत्न-शीलो बभूव । *

---

* रावणवधार्थं अध्यात्मरामायणवर्णिता श्रीरामचन्द्रस्य 'अदित्य-हृदयप्राप्तिः, तस्य त्रिवारजपेन च ज्ञायते केषुचित्पुराणेषु रामायणेषु च—श्रीरामचन्द्रः दुर्गादेव्याः अकालबोधनं विधाय दिनत्रयपर्यन्तं पूजां कृतवान् इति सविस्तरं वर्णितम् । तेषु सर्वरामायणपुराणेषु दृश्यते । रामचन्द्ररावणवधार्थं दुर्गादेवीमकालबोधितां विधाय युद्धक्षेत्रे दिनत्रयानुष्ठानरूपेण पूजां कृतवान्—सैव च शारदीया दुर्गापूजा' ।

पुराणादिषु प्राप्यते—प्रजापतिर्ब्रह्मापि देव्या अकालबोधनं कृतवान् ।

तस्याः प्रथमं बोधनं राज्यभ्रष्टमिन्द्रं स्वर्गराज्ये प्रतिष्ठापयितुम् ।

पुनः द्वितीयमकालबोधनं रावणवधार्थं रामचन्द्रं शक्तिशालिनं विधातुम् ।

 

## रामरावणयोर्द्वन्द्वयुद्धम्

रावणस्य निर्देशेन सारथिः हृष्टमानसः रथं रणक्षेत्रमनीतवान्। शत्रुसेनामर्दनकारी अयं रथः ध्वजपताका शोभितः काञ्चनमालालंकृतः

---

अत्रापि ब्रह्मैव अकालबोधनं कृतवान् (न तु रामचन्द्रः) ब्रह्मैव देवशत्रुरावणवधार्थं देव्या अकालबोधनेन रामचन्द्रं शक्तिशालिनमकरोत्।

धर्मशास्त्रवचनमपि प्राप्यते—उदगयनं देवानां दिनम्। दक्षिणायनं च देवानां रात्रिः, इत्यादि ; अर्थात् दक्षिणायने संक्रान्तितः उत्तरायणसंक्रान्तिपर्यन्तं (श्रवण संक्रान्तितः मकर संक्रान्तिपर्यन्तं) देवानां रात्रिः ; अर्थात् देवा अस्मिन्समये निद्रिताः सन्ति। तदा देवतानां बोधनमेव अकालबोधनमित्युच्यते। पुनः माघतः आषाढ-संक्रान्तिपर्यन्तं उत्तरायणं देवानां दिनम्।

रामचन्द्रस्य लङ्काक्रमणेऽपि रावणेन सार्धं युद्धारम्भः माघ-शुक्लद्वितीयातः ; इत्थमिदं युद्धं मासद्वयं पञ्चविंशति दिनानि च प्रचालितम्। रावणवधः चैत्रकृष्णचतुर्दश्यां जातः। लङ्कायां यद्रामरावणयोर्युद्धमभूत् तदुत्तरायणसमये अतः लङ्कायुद्धक्षेत्रे यदि रामचन्द्रेण दुर्गापूजा कृता स्यात् सा शारदीया अकालबोधन

अनेकयुद्धोपकरणसमन्वितः अतिवेगवांश्चासीत् । स्वघर्घरशब्देन शत्रुहृदयं सन्त्रासयन् अयं रथः रामस्याभिमुखं प्रचलितः । रामचन्द्रमवलोक्यैव रावणः क्रोधारक्तचक्षुः सन् शतशो बाणवर्षणेन तं पीडयितु-

---

दुर्गापूजा न स्यात् । वालिवधं कृत्वा सुग्रीवं किष्किन्धासिंहासनाधिष्ठितं च विधाय रामचन्द्रः लक्ष्मणेन सह श्रावणमासतः कार्तिकमासपर्यन्तं चतुरो मासान् किष्किन्धायाः कस्यांचिद् गुहायां उवास । अयं समयः दक्षिणायनम् । अस्मिन्समये किष्किन्धायां रामचन्द्रेण दुर्गापूजा कृता चेत्तर्हि सा 'अकालबोधन' मित्युच्येत । किन्तु 'किष्किन्धायां रामचन्द्रः दुर्गापूजां कृतवान्' इति कुत्रापि कश्चिदुल्लेखः न प्राप्यते । अतः ब्रह्मा रावणवधार्थं (ब्रह्मलोके) देव्या यदकालबोधनं कृतवान् तदेव रामचन्द्रस्य अकालबोधनरूपशारदीयदुर्गापूजात्वेन कस्मिन्नपि पुराणे वर्णितमास्ते ।

एतच्छारदीयदुर्गापूजाविषये कालिकापुराणे प्राप्यतेशरत्काले महानवमीदिने दुर्गातन्त्रमन्त्रद्वारा दुर्गायाः महोत्सवः बलिदानं च कर्तव्यम् । आश्विनमासशुक्लपक्षस्य याष्टमी तिथिः सा देव्या अतिप्रिया 'महाष्टमी' ति विख्याता, तदनुसारितिथिः 'महानवमी' त्युच्यते । ततश्च अस्मिन्पुराणे दुर्गापूजाया विशेषविधिः फलश्रुतिश्चवर्ण्यते ।

मारेभे। शरजालाच्छन्नो रामः गृहीतेन्द्रधन्वा सटङ्कारं सूर्यरश्मि-सदृशान् कान्तिमतः अतिरथशालिनः शतशो ऐन्द्रबाणान् रावणं प्रति क्षिप्तवान्। तदानीं क्रुद्धसिंहयुगलतुल्यपरस्पर-वधाभिलाषिणोस्तयोर्वीरयोस्तुमुलं भयावहं च युद्धं प्रारभत। तेजस्वी रामः शतशो बाणैः द्यावाभूमी आच्छादयन् रावणमपीपिडत्। तद्रथध्वजच्छेदनं च कृत्वा सास्फोटमवस्थितः। रावणः एतेन शराघातेन अविचलितः अक्लान्तः सन् मायानिर्मितानि असंख्यगदा परिघ-चक्रमुसलशूलपरशुप्रभृतीनि अस्त्राणि रामं प्रति न्यक्षिपत् अन्यदपि सहस्रबाण सन्धानं चाकरोत्। प्रत्येकबाणः लक्ष्यभेदकरणसमर्थोऽभूत्। तेन रामः अतिक्रुद्धः उभयपार्श्वतः धनुः सञ्चालनपरः घोरदिव्यास्त्राणि

---

तत्पश्चाद्वर्णितम्—पूर्वं रामं प्रति अनुग्रहार्थं रावणवधार्थं च ब्रह्मा रजन्यां एतादृशं महादेवी बोधनं कृतवान्। फलतः महादेवी प्रबोधिता सती रावणवासभूमिं लङ्कां गतवती। तत्र च गत्वा स्वयमंतर्हिता सती रामरावणौ युद्धप्रवृत्तौ विधाय तयोर्युद्धे सप्ताह-कालपर्यन्तं तत्र स्थितवती। एतस्मिन्सप्तरात्रे व्यतीते जगन्मयी महामाया रामद्वारा रावणं पार्थिवशरीरान्मोचितवती। यस्मिन्सप्तरात्रे देवी सानन्दं तयोर्युद्धलीलामद्राक्षीत् तस्मिन्नेव समये समुदिता देवा तां पूजितवन्तः इत्यादि। कालिकापुराणेऽपि ब्रह्मैव देवी बोधनं कृतवान्; देवाश्च तां पूजितवन्त इत्येव सूच्यते।

संयोज्य एकस्मिन्नेव समये रावणस्य अश्वान् पातयित्वा तस्य सर्वाङ्गमविध्यत्। एतादृशभयंङ्करयुद्धदर्शनार्थं देवगन्धर्वसिद्धकिन्नराः आकाशे समवेताः। रामः तीक्ष्णशराघातेन रावणस्य कुण्डलशोभितं किरीटमविध्यत्। तदानीं मारुतिरुवाच—'हे राम! उपस्थितः खलु रावणस्य मृत्युकालः। भवता तं प्रति ब्रह्मास्त्रप्रयोगः कार्यः।' तदाकर्ण्य रामः स्मारित इव रावणवधार्थं ब्रह्मास्त्रं गृहीत्वा ब्रह्मस्मरणपूर्वकं शुचिर्भूत्वा आचम्य च ऐन्द्रधनुषि तदेव दिव्यास्त्रं योजयामास। तद्ब्रह्मास्त्रं स्वप्रभया जाज्वल्यमानं शोभन कुसुम शोभितं, सुवर्णमण्डितं सूर्य इव दीप्ति शालि—सधूमप्रदीप्तं विषधर सर्पतुल्यं चासीत्। एतादृशं ब्रह्मास्त्रमवलोक्य रावणमुखं विवर्णीभूतम्। स सारथिं सावधानी विधाय धनुष्टंकारदानपूर्वकं भयानकं राक्षसास्त्रं योजयामास।

इतः रामचन्द्रः वेदोक्तविध्यनुसारं समन्त्रपाठं स्वधनुषि ब्रह्मास्त्रं योजयित्वा रावणवक्षःस्थलं तल्लक्ष्यीकृतवान्। रामधनुर्मुक्तं तदमोघं दिव्यास्त्रं रावणवक्षः विदीर्य रुधिराक्तं सत् पुनः रामतूणीरे प्रविष्टम् * तदानीमाकाशे मङ्गलमयदुन्दुभिध्वनिरुत्थितः देवमुनिसिद्धचारणा रामचन्द्रस्य जयध्वनिं स्तवं च कर्तुमारभन्त।....

* अस्माभिः पूर्वटिप्पण्यां रावणवध पर्यन्तं दिनदिनाङ्कतिथ्युल्लेखः कृतः। अत्र रावणवधात्प्रभृति रामस्यायोध्या प्रत्यावर्तनपर्यन्तं राज्याभिषेकस्य दिवसः इत्यादि अब्दरामायणमनुसृत्य प्रदीयते।

देवैरवलोकितं, सूर्यतुल्यभास्वरज्योतिः रावणदेहान्निर्गत्य रघुवरे प्रविष्टम्। तदवलोक्य देवाः परस्परं व्यवदन्—'सत्त्वगुणप्रधाना देवा एव रामं दयापात्रं किन्तु विष्णुद्वेषी रावणः कथं रामचन्द्रे प्रविष्टः?' तदाकर्ण्य नारदः स्मयमानः देवानगादीत्—'हे देवाः विलक्षणमेव युष्मद्धर्मतत्त्वम्! तथापि अस्मिन्विषये किञ्चिद्विशेषः श्रूयताम्—रावणः सर्वदा रामं प्रति द्वेषवशात् राममेव मनसि भावयामास। रामहस्तेन मृत्युभयात् सर्वत्र निरन्तरं--स्वप्नेऽपि राममेवाद्राक्षीत्।...अनिशं रामचिन्तया रावणः पापमुक्तः जातः; अन्ते रामहस्तेन निहतः सकलबन्धनमुक्तिरूपं रामसायुज्यं प्राप्नोत्। दुरात्मापि यदि रघुकुलतिलकरामचन्द्रं भावयन् देहत्यागं कुर्यात् तर्हि

---

१. रावणस्य प्रेतसंस्कारः—चैत्रकृष्णअमावास्या।

२. विभीषणस्य राज्याभिषेकः—वैशाखशुक्लद्वितीया।

३. रामसीतामेलनम्—वैशाखशुक्लद्वितीया।

४. रामसीतयोः अयोध्या यात्रा—वैशाखशुक्लचतुर्थी।

५. चतुर्दशवत्सरवनवाससमाप्तिः भरद्वाजाश्रमे आगमनम्—वैशाखशुक्लपञ्चमी।

६. रामभरतमिलनं—वैशाखशुक्लषष्ठी।



७. रामराज्याभिषेकः—वैशाखशुक्लसप्तमी।

सोऽपि निर्मलचित्तः शतशोजन्मार्जिताखिलपापविमुक्तः सन् अचिरादेव रामरूपिणः विष्णोः सुरवरवन्दितं आद्यवैकुण्ठधाम गच्छेत् ।'

नारदस्येदमद्भुतं वचनं निशम्य देवा विमुग्धाः । रावणं हत्वा भूतलस्पर्शि शरासने दत्तहस्तः स्थितः सन् रामः बाणमेकं दक्षिणहस्ते धारयन् स्वमनसि व्यघूर्णयत् । तस्य चक्षुःप्रान्तौ आरक्तौ शराघातैः शरीरं क्षतविक्षतम् । रामः उदासीनः स्थितः आसीत् । अस्मिन्नेव समये हनूमत्सुग्रीवांगदादियूथपतयः तमागत्य प्राणंसिषुः ; तदैव रामः प्रकृतिस्थ इव सकलान्सस्नेहमवलोकयन् अब्रवीत्—, 'युष्मद्बाहुबलेनैवाहं रावणं हन्तुमशक्नुवम् । यावच्चन्द्रदिवाकरौ युष्माकमेषा विमलकीर्तिः स्थास्यति ।' इत्युक्त्वा सोऽखिलान्गाढमालिलिङ्ग ।

## विभीषणस्य शोकः

निहतस्य रावणस्य सैनिकाः पर्याकुलतया पलायामासुः । राम सैनिकेषु जयध्वनिः कोलाहलश्चोत्थितः । वायुः प्रशान्तः सन् वातुमारेभे, सर्वा दिशः निर्मला आकाशमपि स्वच्छमभूत् ।....

इतः ज्येष्ठभ्रातुर्मृत्युना विभीषणः शोकाकुलः सन् रावणस्य मृतशरीरमवलोक्य विलपितुमारेभे । हा वीर ! हा पराक्रमिन् ! हा विख्यात ! हा नीतिनिपुण ! भवान् महामूल्यशय्याः परित्यज्य भूशयनं किमर्थं कृतवानसि ? हे लङ्कागौरव ! हे शूर ! भवतोऽभावे

लङ्काद्य श्रीहीना जाता। शत्रवः लङ्कोपरि स्वाधिकारं स्थापयित्वा सर्वानपि बहिष्करिष्यन्ति । भवतोऽनुपस्थितावद्य लङ्कावासिनः स्वामिहीना जाता! अपि भवान् रणक्लान्तः विश्राम्यसि? ब्रह्मा तु भवतेऽमरत्ववरं ददौ, तथापि त्वं मृत्युमुखे पतितः?' ततः श्रीरामचन्द्रं सम्बोध्य विभीषण उवाच—, 'जीवितावस्थायां अनेन यथाविधि होमः विविधभोग्यवस्तु भोगः कृतः। भृत्येभ्य याचकेभ्यश्च मुक्तहस्तेन दानमपि दत्तम्; अयं च विपन्नानां बन्धुः रिपोश्च सन्त्रासकर आसीत्। अयमाहिताग्निः महातेजस्वी वेदशास्त्रज्ञपण्डितश्चाभूत्। इदानीं भवदनुज्ञानुसारं अस्य प्रेतकार्यं विधातुमभिलषामि।

विभीषणवचनं निशम्य रामः प्रसन्नोऽब्रवीत्—, 'विभीषण! त्वं भ्रातुर्विषये योग्यवचनमेव भाषसे। मरणान्तमेव वैरम्। तदिदानीं समाप्तम्। त्वमिवायं ममापि सुहृदेव संवृत्तः। इदानीमनेन सार्धं न कापि शत्रुता। अतः त्वयास्य और्ध्वदेहिकक्रिया यथाविधि सम्पादयितव्या।' *

---

* ब्राह्मणक्षत्रियवैश्यशूद्राणां चातुर्वर्णिकानां मृत्योः पश्चात् अशौचान्तं श्राद्धादिकं च कर्तुं स्मृतिकारैर्व्यवस्था कृतास्ते। रावणोऽपि ब्राह्मण आसीत्। एकादशदिने तस्यापि प्रेतकार्यविधानं समुचितमासीत्। परंतु रामचन्द्रः तस्य सद्य एवाशौचमुक्तेः व्यवस्थां कृतवान्।

## मन्दोदरीप्रभृतीनां विलापः

रावणः समरशय्यामाश्रितः। तस्य स्त्रियः सार्तनादाः कृतवक्षः कराघाता क्रन्दन्त्यः मन्दोदरीं पुरस्कृत्य रावणस्य मृतदेहसमीप-

---

अतः अनेकेषां मनसि प्रश्न उद्भवति—श्रीरामचन्द्रः रावणमृत्युना सार्धमेव (एकादशदिनसमाप्तिपूर्वमेव) प्रेतकार्यादिकरणार्थं विभीषण-मादिश्य शास्त्रविरुद्धमाचरितवान्किमु? अस्योत्तरं मनुसंहितायां याज्ञवल्क्यसंहितायां च दृश्यते।—

"न राज्ञामघदोषोऽस्ति व्रतिनां न च सत्रिणाम्।
ऐन्द्रं स्थानमुपासीना ब्रह्मभूताहि ते तदा।
राज्ञां माहात्मिके स्थाने सद्यः शौचं विधीयते।
प्रजानां परिरक्षार्थमासनं चात्र कारणम्।

महीपतीनां नाशौचं हतानां विद्युता तथा (मनुसंहिता ५।९७,९८)

गो ब्राह्मणार्थं संग्रामे यस्यचेच्छति भूमिपः। याज्ञवल्क्य—प्रायश्चित्ताध्यायः

एतेन स्पष्टं भवति—श्रीरामचन्द्रः सर्वत्र शास्त्रमर्यादां पालितवान्।

मुपविश्यानेकशः शोकं प्रकटयामासुः। पुनः शतशः पुरनारीणां क्रन्दनपूरणेनाकाशं भाराक्रान्तमिवाजायत। मन्दोदरी शिरसि कराघातपरा मूर्च्छिता अभूत्। ततः 'हा नाथ! हा नाथ! मां विहाय त्वं क्व प्रयातोऽसि?' इति वदन्ती रावणमृतदेहमालिङ्ग्य विलपितुमारेभे—'हा! यः इन्द्रचन्द्रयोरपि भयकारणमासीत् यश्च देवदानवैरवध्यः तेन विधिविधानेन कस्यचित्साधारणमनुष्यस्य हस्तेन प्राणास्त्यक्ताः! हे नरश्रेष्ठ! अथवा नास्ति तव कोऽपि दोषः; दैवमेव अस्मत्सर्वनाशतत्परम्! हा महाबाहो! अहं तव प्रिया मन्दोदरी; त्वामहमाकारयामि; किमर्थमुत्तरं न दीयते त्वया? हा राजन्! धिक् चञ्चलां राजलक्ष्मीम्! हा स्वामिन्! त्वं वदनकान्त्या चन्द्रेण, औज्ज्वल्ये सूर्येण, सौन्दर्ये च पद्मेन तुल्योऽसि? भ्रूयुगलमपि तव कीदृशं सुन्दरम्? कोमला त्वक् उन्नता नासिका, सुन्दरकिरीटेन प्रदीप्तकुण्डलाभ्यां च सुशोभितोऽसि! तव सुन्दरमुखे सहास्य वचनमतिमधुरमासीत्। अस्मिन्क्षणे रामबाणेन छिन्नं सत् तद्वदनं विकृतं जातम्! दैववशतः तत्त्वया न ज्ञातम्। अस्मद्वचनमपि न श्रुतं त्वया। अचिन्तनीयं खलु विधिविधानम्। इदानीं मम वैधव्यदशा उपस्थिता। हा! 'दानवराजा मयः अस्मत्पिता, लङ्केश्वरः स्वामी, सुरेन्द्रविजयी मेघनादश्च मम पुत्रः' इति वदन्ती गर्विताहमासम्। इदानीमहं सामान्या नारी जातास्मि। तव विरहे मम प्राणधारणमसम्भवम्।

अहं त्वया सहगमनं विश्रास्यामि। हा! धिङ्मम हृदयम्! धिक् प्राणान्! तव विनाशेऽपि अहं प्राणधारणपरास्मि। मन्दोदरीत्थं सदीनभावं विलपन्ती मूर्च्छिता। सपत्नीगण: क्रन्दन् शोकविह्वल: मन्दोदरीं सान्त्वयन् तां स्वस्थां कर्तुं प्रयत्नशीलोऽभूत्।

तदानीं पुरनारी: विलपन्तीरवलोक्य राम: विभीषणमब्रवीत्—'त्वं स्त्रियः सान्त्वयित्वा भ्रातृसंस्कारपरो भवे:।*

---

* वाल्मीकि रामायणमतेन (लङ्काकाण्डे त्रयोदशाधिकशततम सर्गः, श्लोका: ९१—२५) विभीषण: रावणसंस्कार विषयेऽसम्मत: सन्नब्रवीत्—'रावण: परस्त्रीपीडक: सर्वेषामपि अनिष्टरतोऽभूत्; मम ज्येष्ठ भ्राता गुरुतुल्योऽपि सन् न मम पूजनीय:। नाहं तस्य संस्कारे और्ध्वदेहिकक्रियायां चोत्सुक:। एतेन लोकेऽहं निष्ठुर इति भाषितो भवेयम्। किन्तु रावण दुष्कर्म विरोधस्वरूपं ममेदमाचरणं सर्वेऽपि समर्थयिष्यन्ति।' तं रामो जगाद—'किन्तु रावण: तेजस्वी, महाबल: देवैरप्यजेयोऽभूत्। अस्य मृत्युना आवयो: परस्पर-वैरभाव: अवसानं प्राप्त:। इदानीं त्वया यथाशास्त्रमग्निसंस्कार: कार्य:। एतेन तव यश: कीर्तिश्च वर्स्यत:।' रामवचनेन विभीषण: निरुपाय: सन् रावणस्य अग्निसंस्कारार्थं प्रस्तुतो जात:।

वाल्मीकि रामायणस्य इदं विवरणं अन्यरामायणै: न समर्थितम्। इदं विवरणं किंचिदस्वाभाविकमिवप्रतिभाति।

विभीषणः रामादेशेन रावणस्यान्तिम संस्कार व्यवस्थामकरोत् चन्दनकाष्ठागरुप्रभृतिगन्धद्रव्याणि, मणिमुक्ताप्रवालादिपूर्णशकटः, अग्निः याजकादयश्च सर्वे श्मशाने प्रेषिताः। अनन्तरं रावणं बहुमूल्य क्षौमवस्त्रभूषितं विधाय तं वाहकाः स्वर्णमयशिबिकाया दक्षिणाभिमुखीकृत्य नीतवन्तः। विभीषणमाल्यवत्प्रभृतिप्रवीरान्पुरतः कृत्वा तूर्यध्वनिभिः सह श्मशानयात्रायां विविधसचिवाः योद्धारश्च प्रचलिताः। भृशं रुदन्तः पुरवासिनः जनपदवासिनश्च शवमनुजग्मुः। मार्गे ब्राह्मणेभ्यः अत्यधिकधनानि प्रदत्तानि। दाहस्थानमागत्य माल्यवान् कार्यारम्भमकार्षीत्—यथाविधि यज्ञानन्तरं विभीषणः साश्रुनयनः रावणस्याग्निसंस्कारं तर्पणादिकं च समापयामास।...

## विभीषणस्य राज्याभिषेकः

ततः विभीषणे नम्रतया रामचन्द्रं प्रणम्य पुरतः स्थिते रामः लक्ष्मणमुवाच—'लक्ष्मण! अयं विभीषणः मम भक्तः अनुरक्त

---

विभीषणमनसि एतावान्धर्मबुद्ध्यभावः कूपमण्डूकवृत्तिश्चासीत् इति वक्तुं न शक्यते। मृत्योरनन्तरमपि ज्येष्ठभ्रातरं प्रति वैरवृत्तिपोषणमिव अनुदारताऽक्षमाभावश्च विभीषणकृते शोभनं नासीत्। यद्यपि वाल्मीकिः कविः रावणस्य चरितं घृणितं दुष्कर्मपरायणं च चित्रितवान् तथापि रामचन्द्रः उक्तवान्—'रावणः अनेकसद्गुणवान् सद्वृत्तिः तपस्यादिषु चाधिकारी आसीत्।

उपकारी च; इमं लङ्का राज्येऽभिषिक्तं कुरुष्व।' रामेच्छानुसारं लक्ष्मणस्तत्क्षणमेव सुवर्णघटे महासागरजलमानाय्य विभीषणं च स्वर्णमयसिंहासने समुपवेश्य तं विविधमांगलिकविधिभिः देवविधानानुसारं स्वर्णघटजलेन लङ्कावासिनां समक्षं लङ्कासिंहासनेऽभिषिषेच। तदानीं पुरवासिनः जनपदवासिनश्च दध्यक्षतमोदकलाजपुष्पादिभिः नवनृपतिमभ्यनन्दयन्।

## सीतासमीपं हनूमतः प्रेषणम्

विभीषणं राज्याभिषिक्तमवलोक्य रामः पुलकितशरीरः कृताञ्जलिं सम्मुखस्थं हनूमन्तमुक्तवान्—'वाग्मिवर! त्वया वैदेही-समीपमुपगम्य रावणस्य निधनं मम सुग्रीवलक्ष्मणयोश्च कुशलं च श्रावयित्वा तस्या अपि कुशलवार्ताऽऽनेतव्या।'

श्रीरामाज्ञानुसारं हनूमान्तत्क्षणमेव अशोकवनं गत्वा सीतां प्रणम्य रामप्रवृत्तिं ज्ञापयामास। तन्निशम्य आनन्देन सीतादेवी वक्तुमप्यसमर्थाऽऽसीत्। सा आनन्दाश्रूणि विसर्जयन्ती बाष्पस्तम्भित-कण्ठं कम्पितस्वरं सावेगं च हनूमन्तमब्रवीत्—'महावीर! जगति एतादृशं किमपि वस्तु न दृश्यते यत्तुभ्यं समर्प्य यथेष्टं सुखी स्याम्। त्रिलोकी राज्यमपि तवैतादृशप्रियप्रवृत्त्यर्थं नोपयुक्तः पुरस्कारः। तव बलं, वीर्यं, शरीरतेजः, विक्रमः, औदार्यं, शत्रुविजयशक्तिः,

क्षमा, धृतिः, स्थैर्यं, विनयः इत्यादि सर्वोत्तमगुणनिचयः शतगुणितं वर्धताम्। रघुपतिश्च तव हृदये निरन्तरं वसतु।' तदाकर्ण्य हनूमान् सानन्दं सीतामसकृत्प्रणम्योक्तवान्—'देवि! एताः सर्वाश्चेटयः भवतीं बहुविधमुत्पीडयांचक्रुः। तवानुमतिश्चेत्तदर्थं यथोचितदण्डदानेन ताः सर्वा हनिष्यामि।' सजलनयना सीतोक्तवती—'हनूमन्! मा तत्कार्षीः। एतास्तु केवलं दास्यः। राजाज्ञयैव एता ममोत्पीडनपरा जाताः। इदानीमेता न किमपि करिष्यन्ति! मयैतासु क्षमा कृतास्ते। मया भाग्यदोषेण दुःखमनुभूतम्; न तदर्थमेता दोषभाजः। अन्यच्च अपराधिभिः वधार्हैर्वा सदयव्यवहार एव उचितः अपराधस्तु सर्वैरपि विधीयते।'

सीतावचनेन हनूमान् अतिप्रभावितः सन्नुवाच—'श्रीरामचन्द्रस्य धर्मपत्न्या योग्यवचनमेव भवत्या भाषितम्। इदानीं रामसमीपं प्रयातुं मामनुमन्यस्व। जानकी प्रत्यब्रवीत्—'अहमचिरादेव स्वकीयं धर्मवत्सलपतिं द्रष्टुमभिलषामि।' तदाकर्ण्य हनूमान् सीतानन्दवर्धनपरो जगाद—'देवि! शची यथा सुरराजमिन्द्रं पश्येत् तथैव भवत्यापि अद्य लक्ष्मणेन सह स्वस्वामिनमवलोकयिष्यसि।'

## सीताप्रत्याख्यानम्

हनूमान्प्रत्यागतः राममभिवाद्य तस्मै सीताकुशलप्रवृत्तिं श्रावयित्वाभिहितवान्—'शोकसन्तप्ता सीता द्रष्टुं भवतः समुचितम्

सातीवावेगपूर्वकमुक्तवती—'अहं स्वामिनं द्रष्टुमिच्छामि ।' हनूमतः वचनेन अकस्मात् रामचन्द्रस्य मनसि भावान्तरमुपस्थितम्, हृदयावेगेन पीडितः दीर्घनिःश्वासपरः स विभीषणमाहूयोक्तवान्—'सखे ! त्वया शीघ्रं सीतासमीपं गन्तव्यम् तां च स्नापयित्वा दिव्याङ्गरागेण सर्वालङ्कारैश्च भूषितां मत्समीपमानय ।'

विभीषणः सीतासमीपमुपगम्य कृताञ्जलिः रामादेशं श्रावयामास; सीतापि स्नानादिकं वेषभूषां च समाप्य शिबिकामारुह्य उष्णीष धारिप्राहरिकैः रक्षितासती विभीषणेन सह रामस्य समीपं गतवती ।

'सीता आगता' इति निशम्य रामः तां त्वरितमानेतुमादिशत् । प्राहरिकाः वेत्रहस्ताः समवेतजनापसारणपरा इति विलोक्य रामः व्यथितमानसः अब्रवीत्—'एते एतादृशं किमर्थमपसार्यन्ते ? सीता शिबिकातोऽवतीर्य पद्भ्यामेव आगच्छतु सर्वे च जननीमिव मैथिलीमवलोकयन्तु ।' तदाकर्ण्य सीता शिबिकातोऽवतीर्य शनैः शनैः पद्भ्यामेव रामसमीपमागत्य अवनतमुखेन स्थिता । रामस्यैतादृशाशोभनव्यवहारेण लक्ष्मणसुग्रीवहनूमत्प्रभृतयः विशेषतः व्यथिताः किन्तु तदादेशव्यतिक्रमे नासीत्कस्यापि साहसम् ।

समीपमागतां सीतां लक्षी कृत्य रामः जगाद—'मया युद्धे रावणवधं कृत्वा त्वदुद्धारोपायः विहितः । अस्मदनुपस्थितौ रावण-

स्त्वामहार्षीत्; अयं तु दैवकृतो दोषः। मया पौरुषबलेन तस्यापि क्षालनं कृतम्, मङ्गलमस्तु तुभ्यम्! एतत् त्वया ज्ञातव्यम्—अयं रणपरिश्रमः असाध्यसाधनोपायाश्च त्वत्प्राप्त्यर्थं मया न विहिताः। स्वकीयकर्तव्यपालनार्थं, अपवादखण्डनार्थं, वंशमर्यादारक्षणार्थं च इदमखिलं कर्तव्यमासीत्। त्वया रावणगृहे अनेकदिवसपर्यन्तं निवासः कृतः। तेन पापदृष्ट्या त्वमवलोकितासि, दुष्टाभिलाषया स त्वामपाहरत्। इदानीं तव पुनः स्वीकारः अस्मत्पक्षे महदपयशस्करः भवेत्। अत एव त्वं स्वतन्त्रासि यत्रेच्छसि तत्र गन्तव्यम्। दशदिशोऽपि त्वदर्थं प्रतिबन्धरहिताः। यथेच्छं समाचर, तत्र न किमपि मम वक्तव्यम्। मया गभीरविचारपूर्वकमेवेदमुच्यते। त्वां प्रति मम नान्यत्किमपि कर्तव्यम्। त्वं लक्ष्मणभरतशत्रुघ्नसुग्रीवविभीषणेषु यस्य कस्यापि समीपं गन्तुमभिलषसि तं प्रति गच्छेः।'

## सीतायाः अग्निपरीक्षा *

एतत्क्षणपर्यन्तं सीता भयचकितमृगीव विशालाश्रुपूर्णलोचना राममवलोकयन्ती स्थितासीत्। लोकानां पुरतः रामस्य मुखात् स्वकीया-

* सीताग्निपरीक्षाविषये विद्यते महान्मतभेदः। मार्कण्डेय-ऋषिवर्णितरामोपाख्याने दृश्यते—रावणवधानन्तरं वृद्धामात्याः अविन्ध्यविभीषणप्रभृतयः सीतां यदा रामसमीपमानीतवन्तः तदा रामः

निष्टमपवादं निशम्य सा लज्जया मृतप्राया सती निजशरीराभ्यन्तर-प्रविष्टेव जाता! दृष्टिप्रमार्जनपूर्वकं पदाङ्गुष्ठेन भुव विलिखन्ती

---

सीतापातिव्रत्यविषये सन्दिहानः सन् तां कठोरवचनपूर्वकं परित्यक्तवान्। तदानीं पद्मयोनिर्ब्रह्मा इन्द्राग्निवायुवरुणादिदेवान्गृहीत्वा दशरथेन सार्धं विमानेन रामसमीपमुपस्थिताः।

रामेणतिरस्कृता सीता तेषां सर्वेषां पुरतः रामं संबोध्य उक्तवती—'चेन्मया किमपि पापाचरणं कृतं स्यात् तर्हि सर्वभूतस्थ वाय्वग्निजलाकाशपृथिव्यादयः मां परित्यजन्तु। मया त्वां विना कश्चिदपरः स्वप्नेऽपि न चिन्तितः। अत एव त्वं देवतामतानुसारं मम स्वामी स्याः।'

सीता वचसि समाप्ते एव वाय्वग्निवरुणेत्यादिदेवाः सीतां निष्पापां घोषयित्वा तां स्वीकर्तुं रामचन्द्रमुपादिशन्। रामोऽपि देवानां दशरथस्य चोपदेशेन सीतामङ्गीकृतवान्।....पुनः कस्मिन्नपि पुराणे दृश्यते—सीताशुद्धीकरणं रामेश्वरेऽनुष्ठितमभूदिति। रावण-वधानन्तरं लङ्कां परित्यज्य सीतया लक्ष्मणादिभिश्च सार्धं अयोध्या-प्रत्यावर्तनसमयेऽध्वनि रामः दिनमेकं समुद्रतीरे न्यवसत्। तदैव मुनिऋषिदेवानां समक्षं सीताशुद्धिकार्यं सम्पन्नम्, रामचन्द्रश्च (मतान्तरे सीता) रामेश्वरे शिवलिङ्गप्रतिष्ठापनमकार्षीत्। अनेक-

पूर्णाहुतिमिव अनले पतितामवलोक्य आर्तस्वरेणरुदन्त्यः रामचन्द्रं निन्दितुमारब्धाः। ....

## देवानामागमनं रामायोपदेशप्रदानं च

इतः इन्द्रादिदेवाः महेश्वरः ब्रह्मा च विमानेन लङ्कामागत्य राममब्रुवन्—'त्वं सर्वलोककर्ता, साक्षी विज्ञानमूर्तिः अष्टवसुषु ऋतधामा प्रजापतिश्च। त्वमेवादिमध्यावसानेषु विद्यमानः। एवं सत्यपि त्वं प्राकृतजन इव वैदेहीं किमर्थं परित्यजसि?' रामोऽब्रवीत्—'अहं तु आत्मानं दशरथपुत्ररूपेणैव जानामि। भगवन्! वस्तुतः कोऽहमिति भवानेव ब्रवीतु।'

तदानीं ब्रह्मा श्रीरामचन्द्रं प्रणम्योक्तवान्—'त्वं खलु त्रिलोकस्थितिमूलं देवो विष्णुः। तत्त्वज्ञानिनः स्वहृदये त्वां ध्यायन्ति।.... त्वं परात्परः, अद्वितीयः, सत्यमात्रः, सर्वेषामन्तर्यामि ज्ञानस्वरूपश्च त्वां प्रणमामि।.... त्वं मायातीतो माधवः जगदादिश्च; त्वमनादिः परिमाणशून्यश्च; त्वमज्ञाननाशकः, मुनिभिर्वन्दनीयः, योगिभिश्चिन्तनीयः योगमार्गप्रवर्तकः परिपूर्णश्च; त्वमसुरसंहारी, वीरवेशधारी, श्रीरामः त्वामभिवादयामः। हे माधव! त्वमिन्द्रियागोचरः स्वयमिन्द्रियशून्यः मुनिगणमाननीयश्च; अभिमानमूढः कः खलु जनः त्वां विज्ञातुं समर्थः? त्वं तु शिवप्रभृतिभिरपि वन्दनीयः—त्वां स एव परमसुख

मूलं रामः त्वां नमस्करोमि । वेदप्रभृतिनानाशब्दप्रतिपाद्यः नित्यानन्दः निर्विकल्पः ज्ञानस्वरूपः अनादिश्च भूत्वापि अस्मत्प्रार्थनया गृहीतमानवरूपः ; मरकतप्रभायोध्यानाथाय नमो रामाय !' (अध्यात्मरामायणम्, लङ्काकाण्डम्, त्रयोदशोध्यायः)

इत्थं ब्रह्मकृत श्रीरामवन्दनानन्तरं लोकसाक्षी विभावसुर्हुताशनः अक्षतसीतां क्रोडे कृत्वा चितातः उत्थितः सन् तत्रोपस्थितः ; सीतां रामहस्ते समर्प्य चोक्तवान् —'मनोवाक्कायैरियं शुद्धा ; अङ्गीक्रियतामेषा ।'

तेन रामः आनन्दितः सन्नब्रवीत् —'सीता चिरं रावणगृहे स्थिता अतः एतादृशापरीक्षया प्रयोजनमप्यासीत् । नो चेज्जना अवदिष्यन् —दशरथपुत्रो रामः बोधशून्यः कामुकश्च इति । 'सीता अनन्यहृदया स्वीयतेजोरक्षिता च' इत्यहं जानामि । निजकीर्तिमिवाहं सीतां कदापि त्यक्तुं न शक्नोमि । भवतां हितवचनमवश्यमहं पालयेयम् ।'

## महेश्वरस्याविर्भावः इन्द्रवरप्रदानं च

रामसीतायोगपुण्यक्षणे महेश्वरः राममभिवाद्योक्तवान् — 'त्वमिदानीं सीतालक्ष्मणाभ्यां सह अयोध्यां गत्वा कौसल्यादिमातृगणं भरतं सुहृद्वृन्दं चानन्दय । हे राघव ! राज्येऽभिषिक्तं त्वां द्रष्टु-

महमयोध्यामागमिष्यामि ।....दृश्यताम्, तव पिता दशरथोऽपि देवैः सहात्रोपस्थितः ।'

## दशरथस्यागमनम्

विमानस्थपितरमवलोक्य रामलक्ष्मणौ तं प्राणंसिष्टाम् । राममालिङ्ग्य दशरथोऽब्रवीत्, 'तव विरहात्स्वर्गवासो मेऽसह्यो जातः । मया देवेभ्यो ज्ञातम्—त्वं परमपुरुषो विष्णुः देवकार्यसाधनार्थं मानुषरूपेणावतीर्णः । वनवासस्य चतुर्दशवर्षाणि उत्तीर्णानि ; इदानीं सीतालक्ष्मणौ गृहीत्वा अयोध्यां प्रत्यावर्तस्व गृहीतराजदण्डश्च प्रजापालनपरो भवेः ।'

कृताञ्जली रामः प्रत्यब्रवीत्, 'पितः! भवान् कैकेयीं भरतं च प्रति प्रसन्नः स्यात् । भवता भरतजननीं प्रति उक्तमासीत्—'पुत्रेण सह त्वां परित्यक्तवानहम् । सोऽभिशापः तयोः किमपि अनिष्टं न कुर्यात् ।' दशरथः स्वाभिशापं प्रत्याहृत्य लक्ष्मणमालिङ्ग्य चाब्रवीत—'हे पुत्र! रामे प्रसन्ने तव धर्मार्थकामाः सिद्ध्येरन् । त्वया सीतया सार्धं रामस्य सेवा कर्तव्या ।'

सीता कृताञ्जलिः समीपमेवावस्थिता आसीत । दशरथस्तां मधुरवचनमभाषत । पुत्रि! रामस्योपरि मा रोषिता भूः । तव हितकाम्यया जगतः पुरतः आदर्शमुपस्थापयितुमेव रामेण त्वत्त्यागविषयी प्रस्तावना

कृतासीत्। त्वया यदलौकिकं चरित्रबलं दर्शितं तेन अन्यासां नारीणां यशः म्लानीभूतम्। तव पतिसेवोपदेशमपि कर्तुमनुचितम्, तथापि अभिधास्ये—'पतिरेव परमदेवः।' दशरथः रामं पुनरालिङ्ग्य तन्मस्तकावघ्राणं च कृत्वा रथमारुह्य सुरलोकमगात्।

तदानीं सुरपतिः राममब्रवीत्—'अहं तव कार्येण सन्तुष्टोऽस्मि। अस्माकमागमनं निष्फलं न जातम्। किन्तु उच्यतां किमभीष्टमिच्छसि?

रामोऽगादीत्—'यदि प्रसन्नः स्याः तर्हि मदर्थं युद्धनिहता वीरा पुनर्जीवन्तु।'

इन्द्रः तथास्तु इत्युक्त्वा अमृतसिञ्चनेन अखिलमृतयोद्धॄन् जीवितानकार्षीत्। अनन्तरमिन्द्रादयोदेवा अमरलोकमगुः।

## अयोध्यायात्रा

अन्येद्युः प्रभाते विभीषणः रामं प्रणम्योक्तवान्—'हे देव! अनुगृहाणास्मान्। अस्मासु तव प्रीतिश्चेत् अद्य सीतालक्ष्मणाभ्यां सह कृतमङ्गलस्नानः अलंकृतो भवेः।

रामः विहस्याब्रवीत्—'सखे! त्वया सुग्रीवादयः सर्वेऽपि स्नानार्थं निमन्त्रितव्याः। कोमलाङ्गो भरतः ब्रह्मचारी सन् मत्प्रतीक्षापर

आस्ते। इदानीं स्नानवेशभूषादिषु नास्ति ममाभिलाषः। यथा वयं शीघ्रमयोध्यां गच्छेम तथा प्रयतितव्यम्।'

विभीषणः अतिविनीतः सन्नुवाच—'राजपुत्र! तत्र नकोऽप्युपरोधः स्यात्। अस्मद्भ्रातुः कुबेरस्य पुष्पकविमानमत्रैव विद्यते*

*वाल्मीकि रामायणे यथा व्योमयानेन भ्रमणस्य वर्णनं प्राप्यते तथैव अन्यदेशानां रूपककथोपकथासु च मनुष्याणां आकाशभ्रमणस्य विचित्रघटना वर्ण्यन्ते। प्राचीनग्रीसदेशे 'डेडेलस' नामकशिल्पिनः (Daedalus) बन्दि-अवस्थातो मुक्त्यर्थं सिक्थनिर्मितपक्षाभ्यां आकाशमार्गेणोड्डयकथा प्रचलिता आसीत्। अरबीयोपन्यासगता (Magic Carpet) इन्द्रजालकटकथा अस्मिन्देशे च किंवदन्तीषु कल्पितकथासु च प्रागैतिहासिकसमयादारभ्य मनुष्यस्यान्तरेऽसीमदिगन्तररहस्योद्घाटनार्थं विचित्रप्रयत्ना एव लक्ष्यन्ते।

वस्तुतः आकाशोड्डयनकल्पना सर्वप्रथमं याथार्थ्यं प्राप्ता खिस्तीय षोडशशतकस्य प्रतिभावान् इटलीदेशीयशिल्पी 'लिओनार्दो दा विंसि' इत्यस्यालेख्येषु। किन्तु प्रयोगक्षेत्रे आकाशगामि यानस्य प्रथमपरिकल्पना १७७३ खिस्ताब्दे आंग्लदेशीय 'Sir George Cayley' इत्यस्य परीक्षार्थप्रतिमानिर्माणेन विकसिता। यथाज्ञानं ऐतिहासिकयुगे मानवस्य आकाशोड्डयने प्रथमप्रयासः फ्रांस देशे १७८३ खिस्ताब्दे

तेन त्वमेकस्मिन्दिने एव अयोध्यां गन्तुं शक्ष्यसि। मां प्रति स्नेहवशतः त्वया सीतालक्ष्मणाभ्यां सह ससैन्य मत्रातिथ्यं स्वीकर्तव्यम्।' विभीषण-वचनं निशम्य रामः सावेगमभाषत—'सखे! तव मन्त्रित्वसौहार्द-सहायैः अहमतीव सत्कारभाराक्रान्तः। जानकी-उद्धारे तव सहाय-माजीवनं कृतज्ञतया स्मरिष्यामि। तवानुरोधस्य पालनमस्मत्कर्तव्य-

---

'Pilatre de Roziers' इत्येतन्निर्मितेन आकाशयानेन (Baloon) अधिगतम्—यत्कतिचित्क्षणपर्यन्तं आकाशे अनवलम्बमभ्रमत। एतस्यानन्तर १८५२ ख्रिस्ताब्दे फ्रांसदेशीयः Henri Gifford वायुयानस्य इच्छानुसारं सञ्चालन प्रदर्शने प्रथमतया सफलप्रयत्नः जातः। एकोनविंशति शताब्द्यां मानवचालित—'उड्डयन पतङ्ग' विसर्पिणीनां (Glider) बहुविधपरीक्षानन्तरं १९०३ ख्रिस्ताब्दे संयुक्तराष्ट्रे 'मार्किन्' तथा 'राइट्' (Wright) भ्रातृद्वयेन व्योमयाने विमाने वा चालकेन सह आकाशोड्डयनसाफल्यं प्रदर्शितम्। विमानाविष्कारस्य क्रमिकैतिहासपर्यालोचनया इदमेव स्पष्टीभवति—प्रयोगक्षेत्रे यथेष्टोन्नतिं विना—नवनवशक्तिप्रभवस्य (यथा विद्युत् पेट्रो-लियम् प्रभृतेः) अन्वेषणं विनाविमानकल्पनासार्थकता अभविष्यन्नवा इति संदिग्धम्। अतः अस्माकमन्यदेशानां पुराणग्रन्थेषु प्राचीन साहित्ये च विमानानां (उड्डीयमानरथानां वा यः उल्लेखः अवलोक्यते तादृशोल्लेखः 'दुःसाहसिक कल्पनामात्र'मिति परित्याज्यम्।

 

मास्ते। किं तु भरतं द्रष्टुमस्मन्मानसं अतीवव्याकुलम्। चतुर्दशवर्षानन्तरमेव 'अहं त्वां द्रक्ष्यामि' इदमपि तं प्रति मयोक्तमासीत्—ममास्यां प्रतिज्ञापूर्तौ त्वं सहायको भवेः। सखे! अखिलमिदं विचार्य हृष्टचित्तेन त्वया मह्यं गमनानुज्ञा दातव्या। रामः क्षणकालं विचार्य पुनरब्रवीत्—'सुग्रीवांगदादयः प्राणपणेनापि जानकीमुदद्धीधरन्, त्वं ससैन्य सुग्रीवादीनां सत्कारपरो भव धनरत्नादिदानेन च तांस्तोषय तेनाहमपि तृप्तः स्यात्।'

---

विमाननिर्माणे 'इश्पात्' (लोहविशेषः) एल्युमिनियम् (नवधातुविशेषः) प्रभृति यत्किञ्चिदुपादानमपरिहार्यमास्ते तादृशोपकरणस्य व्यवहारः प्राचीनभारते जगति अन्यत्र वा आसीदित्यत्र न प्राप्यते किमप्यैतिहासिकं प्रमाणम्। यद्यपि आर्यमनीषिणः व्योमयाननिर्माणकल्पनाया नासन्नुदासीनाः तथापि प्रयोगक्षेत्रे कतिपयावश्यकाविष्काराणां ऐतिहासिकपटभूमिका निर्माणात्पूर्वमेव ते विमान निर्माणे समर्था आसन् इति न प्रतिभाति युक्तिसिद्धम्। अन्यच्च यदीदं स्वीकृतमपिस्यात् 'एतद्देशेतिहासस्य आदिपर्वणि आर्यसभ्यता, प्रयोगक्षेत्रेऽपि एतादृशी एव समुन्नता आसीत् यत्फलस्वरूपं व्योमयाननिर्माणं सम्भवमभूत' तदापि अत्र प्रश्नः उद्भवति—आधुनिकयुगे एतादृशाविष्कारस्य ईदृशः निःशेषविलोपः कथमजनि? इयं परम्परैव वा कथं समूलं विनष्टा? आर्यसभ्यताया अन्यानि विशेषावदातानि (विशेषतः ज्या-

रामवचनमाकर्ण्य विभीषणः सुग्रीवादीन् सैनिकांश्च अमूल्य-रत्नधनादिदानपूर्वकं सन्तोषयामास। अनन्तरं, आगतं पुष्परथं, रामः सीतालक्ष्मणाभ्यां सह आरुह्य सुग्रीवं लक्ष्यीकृत्योक्तवान्—'त्वया परमकल्याणकारिणा वयस्येनेव मम हितसाधनं कृतम्। अधुना ससैन्यं निजराज्यं प्रत्यावर्तस्व। विभीषण! तव ऋणशोधनीकरणम-सम्भवम्। अनुमन्यस्व मां यात्रार्थम्।

---

मितिः बीगजणित ज्योतिषं च) पाश्चात्यनवजागरणेऽनेकक्षेत्रेषु सहाय कानि जातानि। त्रेतायुगस्य चेदं व्योमयानवर्णनं (कल्पना) वर्तमान-युगीयव्योमयानोत्पादने सार्थकप्रेरणा प्रदमजायत।

'अलौकिकी अतीन्द्रिया वा शक्तिः एतादृशव्योमयानस्य विशेषकारणमासीत्' इति जातीय युक्तिप्रकाशः केषांचिन्मतेन अवश्यं विद्यते। व्योमयानास्तित्वसम्बन्धे त्रिविधान्वेषणकार्यं जातम्। तत्र अतिबलवती सम्भाव्या च कल्पनास्ते—इदं विमानं सुनि-यन्त्रितराजहंस वाहितमासीत्। बाष्पस्थाल्यामुत्तप्त पारदस्य निर्गमन-प्रसारणशक्तिमेकस्यां लघुनाल्यां चालयित्वा तादृशशक्त्या चालनचक्रं एतादृक् क्रियाशीलं अक्रियत यत् तस्य द्रुतपरिवर्तनेन वायुयानं चालितमभूत्। राजहंसा यानोड्डयनसमर्था—चालकाश्च दिङ्निर्णयं दिङ् निर्देशं कृत्वा तान् प्रेरयति स्म। एतादृशमेकमात्रं विमानं

विभीषणसुग्रीवादयः कृताञ्जलयः प्रोचुः। वयमपि त्वयैव सह अयोध्यां यास्यामः। तवाभिषेकमवलोक्य कौसल्यामातरं प्रणम्य च प्रत्यागच्छामः। रामस्तेन विशेषरूपेणानन्दितः सन्नुवाच—'तर्हि शीघ्रं प्रस्तुतीभूयाऽऽगच्छत।'

एतदाकर्ण्य विभीषणः सुग्रीवश्च अनेक सहचरैः सह रथमारुह्य सुखोपविष्टाः। तदानीं स एव हंसवाहित पुष्पकरथः महाशब्दपरः आकाशे उत्थितः। आकाशमार्गेण गच्छन् रामः सीतां विशेषप्राकृतिक सौन्दर्येण विविधस्थानैश्च परिचितामकार्षीत्।

क्रमेण किष्किन्धामवलोकयन्ती सीता सलज्जमुक्तवती—'सुग्रीवस्य प्रियपत्नीं अन्यपुरनारीश्च अयोध्यां नेतुमभिलषामि।' सीतेच्छानुसारं पुष्पकरथः किष्किन्धायामवातरत्। रामेच्छा प्रकाशेन

---

कुबेरस्यासीत्। एतदपि सत्यं यदेतादृशविमानस्य वेगः अधिको न स्यात्। तथा तदुपरि अधिकसंख्याकाजना गन्तुमसमर्थाः। वाल्मीकिवर्णनानुसारं रामसीतालक्ष्मणाः पुष्पकमारूढाः। ततः ससचिवा विभीषणसुग्रीवांगदहनूमज्जाम्बवत्प्रभृतयः किष्किन्धापुरवासिनश्च तदारुह्य एकस्मिन्नेव दिवसे गोदावरीतटवर्त्मना (पञ्चवटी) भरद्वाजाश्रममागताः।

सुग्रीवः स्वपत्नीमुवाच—'त्वं पुरवधूप्रभृतीः वेषभूषा सज्जिता विधाय समानय।'

ततः ऋष्यमूकपर्वतः पम्पासरोवरादिस्थानानि अतिक्रम्य शुभपञ्चमी तिथौ विमानं यमुनातटे भरद्वाजाश्रममुपगतम्।

## भरद्वाजाश्रमे रामः

रामं पुनरागतं वीक्ष्य भरद्वाजमुनिः अतिप्रमुदितो जातः। रामः ऋषिचरणावभिवाद्य कुशलप्रश्नानन्तरमब्रवीत्—'देव! अपि अयोध्यायाः कुशलम्? भरतः मातृगणश्च कीदृशाः?

भरद्वाजः रामचन्द्रमस्तके स्थापितदक्षिणहस्तः स्मितमुखोऽभाषत—'अयोध्यायां सकलं कुशलम्। भरतोऽपि तवागमनप्रतीक्षापरः। त्वां शत्रुविजयानन्तरं प्रत्यावृत्तमवलोक्य अहमतिप्रसन्नः।.... मम शिष्याः अयोध्यायां तवागमन प्रवृत्तिं प्रापयन्ति। अद्य त्वयात्राश्रमेऽस्मदतिथिसत्कारः स्वीकर्तव्यः।'

रामोऽपि नतमस्तकेन तदन्वमन्यत। अनन्तरं रामः हनूमन्तमब्रवीत्—'त्वया अग्रदूतरूपेण शीघ्रमयोध्यां गत्वा तत्रत्यकुशलवार्तया सार्धमागन्तव्यम्। 'विभीषणसुग्रीवादिभिः सह वयमयोध्यां गच्छामः' इति प्रवृत्तिं भरतं श्रावय। तदाकर्ण्य 'भरतस्य कीदृशो मनोभावः' इति तस्याकारेङ्गितमुखवर्णप्रभृतिभिर्ज्ञातव्यम्।.... यदि स

राज्याभिलाषी स्यात् तर्हि सम्पूर्णराज्य शासनं करोतु ; नाहमयोध्यां यास्यामि । अत एव आगामि दिने अयोध्या यात्रायाः पूर्वमेव त्वया एतादृशी प्रवृत्तिर्मह्यमवश्यं दातव्या । (वाल्मीकिरामायणानुसारम्)

रामादेशेन हनूमान् तत्क्षणमेव 'मनुष्यवेशेन' द्रुतं यात्रां कुर्वन् शृङ्गवेरपुरे गुहं प्रति रामस्य शुभागमनवार्तां निवेद्य ग्रामजनपदान् अतिक्रम्य अयोध्यायाः क्रोशमात्रस्थितनन्दिग्राममागतः ; कृताञ्जलिश्च भरताय रामागमनप्रवृत्तिं निवेदयामास । भरतः हनूमन्तं गाढमालिङ्गय हर्षगद्गदमानसोऽब्रवीत्—'हे सौम्य ! त्वयायं शुभवृत्तान्तो दत्तः । तदर्थं तुभ्यं लक्षं पयस्विनीः शतं ग्रामान् षोडश चन्द्राननाः सालङ्काराः कन्याश्च दास्यामि ।'

हनूमान् भरतं रामस्य वनयात्रारम्भतः रावणवधपर्यन्तं सर्वमपि घटना जातं सविस्तरं वर्णयित्वोवाच—'रामः अद्य भरद्वाजाश्रमे वसेत् । श्वः पुष्यनक्षत्रयोगे सोऽयोध्यायां शुभागमनं करिष्यति ।'

भरतः सहर्षमुवाच—'चिरादस्मन्मनोरथाः पूर्णाः' !

॥ इति दिव्यरामायणे युद्धकाण्डम् ॥

# ॥ उत्तरकाण्डम् ॥

## रामस्यायोध्यागमनम्

'रामः आगतः' इति निशम्य भरतः सानन्दं शत्रुघ्नमब्रवीत्, 'भ्रातः! रामः प्राप्तः। त्वया सर्वदेवमन्दिरेषु विद्वद्भिर्ब्राह्मणैर्विविधोपचारपूजायोजनं विधेयम्। सूतवैतालिकबन्दिनः स्तुतिपाठकाश्च रामसंवर्धनार्थं प्रस्तुता भवन्तु। राजपत्न्यः अमात्याः हस्त्यश्वरथपदादयः सैनिकाः ब्राह्मणाः पुरवासिनः सामन्ताश्च ये अत्रोपस्थिताः सन्ति ते सर्वे राघवाभिनन्दनार्थं प्रत्युद्गमनं कुर्वन्तु।' भरतनिर्देशानुसारं राजपुरीतोरणद्वारं राजपथाश्च जलसिक्ता भवितुमारब्धाः। सर्वेऽपि रामदर्शनाभिलाषिणः सन्तः बहुविधराजोचितवस्तुहस्ताः वृन्दशनिर्ययुः। शतशोऽश्वाः गजाः सुवर्णसूत्रालंकृता असंख्यरथाश्च तैः साकं प्रचलिताः। राजपत्न्यः शिविकारूढा विनिर्गताः। शिरसिकृतपादुकायुगुलः भरतः कृताञ्जलिः शत्रुघ्नेन सार्धं पद्भ्यामेवाचलद्रामाभिवन्दनार्थम्।

इतश्च अयोध्यानगरे अशोकविजयसिद्धार्थप्रभृतयो दशरथनृपतेः सचिवाः पुरोहितनेतृत्वे रामाभ्युदयार्थं नगरशोभासम्पादनार्थं च संमन्त्र्य आदिदिशुः 'रामचन्द्रविजयार्थं राज्याभिषेकार्थं

च यत्किमपि मङ्गलाचरणं कर्तव्यं तदर्थं प्रस्तुता भवन्तु' पुरोहिता मन्त्रिगणश्च एतादृशायोजनार्थमादिश्य रामचन्द्रसंवर्धनार्थं सत्वरं नगराद्बहिर्निर्गताः ।

सीतालक्ष्मणाभ्यां बन्धुभिश्च सार्धं तुमुलजयध्वनिषु नन्दीग्रामे रथादवतीर्णं रामं हस्त्यश्वरथयानस्था जना सत्वरं भूमाववतीर्य कृताञ्जलयः स्वागतं व्याजह्रुः । राममवलोक्यैव भरतः तं साष्टांगपातं प्राणंसीत् । रामचन्द्रोऽपि तमुत्थाप्य गाढमालिलिङ्ग । इदमुभयमिलनदृश्यं उपस्थितजनवृन्दस्य अत्यधिकानन्दहेतुरभूत् । अनन्तरं भरतः जानकीं लक्ष्मणं च यथोचितमभिवाद्य (मनुष्यरूपधारि जाम्बवदङ्गदप्रभृतीनालिङ्ग्य कुशलमपृच्छत् * । भरतः पुनः सुग्रीवमालिङ्ग्य अभाषत,—'युष्मत्सहायतयैव रामस्य विजयलाभसम्भवो जातः । सुग्रीव ! वयं चत्वारो भ्रातरः अभूम । त्वमस्माकं पञ्चमो भ्राता जातोऽसि ।'....

---

* वाल्मीकि महाकवेर्वर्णनं एतावदलौकिकालम्बं यत्तस्य याथार्थ्येन स्वीकारः सर्वदैव मनुष्यस्वीकारायोग्यम् । पूर्वमस्माभिः पठितम्—रामचन्द्रः अपराह्णे भरद्वाजाश्रमे गतमात्रः सपदि हनुमन्तं मनुष्यवेशे द्रुतगामि दूतरूपेण अयोध्यायां भरतसमीपं प्रेषयामास ।.... पुनरिदमप्यवलोक्यते—सुग्रीवजाम्बवदङ्गदप्रभृतयः सर्वेऽपि मनुष्य-

रामः कौसल्या कैकेयी सुमित्रा प्रभृतिमातृः प्रणम्य वसिष्ठ-प्रभृतिगुरुजनस्य चरणौ अभिवाद्य स्मितमुखेन पुरजनपदवासिनः आनन्दयन् सकलान्प्रति कुशलप्रश्नादिकं कृतवान् ।

तदानीं भरतः रामस्यचरणयोः पादुके परिधाय प्रणतः सन्नब्रवीत्—'हे राघव ! अद्य मम सौभाग्यदिनम् ! भवान् शत्रुजयं विधाय प्रत्यावृत्तः । इदं राज्यं मया न्यासरूपेण रक्षितमासीत्, इदानीं तुभ्यं समर्प्यते । सम्पूर्णा अद्य मे मनोरथाः ! भवता गृहं धनागारं सैन्यं च परिद्रष्टव्यम्; भवत्तेजसाऽहं सर्वत्र दशगुणं वृद्धिं प्रापितः । भवता अस्मन्मातृसम्मानरक्षा विहिता; मह्यमेव राज्यं प्रदत्तम् । धारयस्व पुनरपि एतद्राज्यभारम् । सर्वेऽपि भवदभिषेक-दर्शनेन आनन्दिता भवन्तु । रामः शनैः प्रत्युवाच—'तथास्तु' ।

---

रूपधारिणो जाताः । एतस्य कोऽर्थः ? अप्येते मनुष्यवेशभूषायुक्ता अथवा इच्छामात्रेण भिन्नरूपधारिणः—अर्थात् वानरभल्लूकादिरूपं परित्यज्य मनुष्यरूपं धृतवन्तः ? अपि तस्मिन्युगे एतादृशी कापि जातिरासीत् या इच्छामात्रेण स्वकीयशरीरे परिवर्तनसमर्थाऽभूत् ? अथवा तदानीं सर्वेऽपि वानरा भल्लूकादयश्च स्वेच्छया अन्यदेहधारणसमर्था आसन्; महाकवेः वर्णनेन एतादृशघटनानां जटिलता वृद्धिं गता ।

तदानीं शत्रुघ्नाज्ञया निपुणक्षौरकारः रामस्य जटाभारं अवमुक्तं कर्तुमारेभे। लक्ष्मणसुग्रीवविभीषणप्रभृतीनामपि केशादि-परिष्कारोऽक्रियत। सर्वेऽपि स्नानानन्तरं बहुमूल्यवसनभूषणानि, माल्यचन्दनादिचित्रानुलेपनादिकं चाधारयन्। राघवः सुषमास-मुज्ज्वलोऽजनि। दशरथपत्न्यः सीताप्रसाधनं कृतवत्यः। कौसल्या सहस्तेन सुग्रीवपत्न्यादीः वेषभूषा सज्जिताः कृतवती।

एतस्मिन्समये सारथिः सुमन्त्रः चतुरश्वसंयोजितं सूर्यसन्निभं रथं गृहीत्वा उपस्थितः। तदा सत्यपराक्रमः रामः रथमारुह्य अयोध्या नगराभिमुखं यात्रामकरोत्। भरतो धृताश्वरश्मिः शत्रुघ्नश्च राममस्त-कोपरि लवलछत्रं धारयामास; लक्ष्मणश्च व्यजनसञ्चालनपरोऽभूत्। विभीषणोऽपि श्वेतचामरहस्तः पार्श्वे स्थितः। सुग्रीवोऽपि रथारूढः सन्

---

शृङ्गवेरपुरमार्गेण प्रयागस्य अयोध्यायाश्च दूरत्वं शताधिक-क्रोशार्धापेक्षयापि अधिकम्। अत्यधिकद्रुतगामी दूतः कृतेऽपि एकस्यां रजन्यां एतादृशमार्गातिक्रमं कृत्वा भरतविचारपरिचयपूर्वकं प्रत्यावर्तन-मसम्भवम्। किन्तु आदिकविः वाल्मीकिः मनुष्यरूपहनूमता तदकारयत्।

इतः भरतस्य मानसं ज्ञातुं दूतप्रेषणं नितान्तमयोग्यमिति भाति। रामचन्द्रः भरतं प्रति एतादृशमनार्योचितसन्देहं कर्तुं

चामरमचालयत्। सुग्रीवान्तः पुरवासिभिः सह सीतापि शिबिकामारुह्य अयोध्यायात्रापराऽभूत्। भेरीखशंमृदङ्गपणवपटह प्रभृतयोऽवाद्यन्त। सैनिका मधुरवाद्यध्वनिभिः रामम्नुजग्मुः। कुलध्वजं प्रभुं रामं अयोध्याप्रत्यागतमवलोक्य नगरवासिनः आनन्दिताः। रामस्तदानीं

---

शक्नोति' इति भावनायामपि कुण्ठिता वयम्। पुनः महाकविः रामचन्द्रमुखेनोक्तवान्— सुखसमृद्धं पैतृकराज्यं प्राप्य कस्य मनसि परिवर्तनं न भवेत्! यदि स राज्याभिलाषी स्यात् तर्हि समस्तं राज्यं शास्तु। अस्माकं अयोध्यागमनात्पूर्वमेव तस्य मानसं ज्ञात्वा त्वया शीघ्रमागन्तव्यम्। महाकवेः उद्देश्यं उच्चतरं भवेत् किन्तु एतादृशी उक्तिः रामचन्द्रस्य भरतं प्रति उच्चधारणा परिपोषं कुर्यादिति न प्रतिभाति।

हनूमता महाकविः स्थाने अस्थाने च अनेकानि अप्रयोजनीयानि, अलौकिकानि असम्भवानि कार्याणि कारयति— यथा एकयाप्लुत्या समुद्रोल्लङ्घनं, ततः लङ्कायां अनेकदुष्करकार्याणि— एकस्यामेवरात्रौ हिमालय परपारगमनपूर्वकं औषधपर्वतानयनम्, तस्य च पुनः यथास्थानं स्थापनम्, यदा तदा विभिन्नशरीर धारणं अणुमहदाकारस्वीकरणम्, इत्याद्यनेका घटना वाल्मीकिरामायणे प्राप्यन्ते। परंतु एतस्या अलौकिकशक्ते एकोऽपि प्रयोगः युद्धक्षेत्रे न प्राप्यते।

धृतमहार्घकिरीटः, रत्नाभरणावृतदेहः, अरुणकमलविशाललोचनः चित्ररत्नसूत्रग्रथितपीताम्बरपरिधानः, पीनबाहुः पीवरवक्षस्थलः, उत्तम-मुक्ताहारभूषितश्च शुशुभे। सुग्रीवविभीषणप्रभृतिपराक्रमिराजन्यवर्ग-सेवितं सूर्यसन्निभकान्तिम्, अनुलिप्तकस्तूरिकं, चन्दनानुलिप्तदेहं, कल्पवृक्षपुष्पमालाधारिणं, नवदूर्वादलश्यामं रघुकुलतिलकं रामचन्द्रं दीर्घकालानन्तरमवलोक्य पुरवासिनामान्तरं हर्षपूरितं जातम्।

## रामचन्द्राभिषेकः *

सीतालक्ष्मणाभ्यां सह अन्तःपुरं प्रविश्य विमातृचरणावभिवन्द्य रामः भरतमब्रवीत् —, 'सखायं सुग्रीवं अस्मद्वासभवने स्थातुमनुमन्यस्व, विभीषणादिकांश्च सर्वोत्तमप्रासादेषु स्थापय। कस्यापि केनापि प्रकारेण कष्टं न स्यात्।' भरतोऽपि तदखिलमकार्षीत्।

अनन्तरं संयमी वृद्धगुरुर्वसिष्ठः रामचन्द्रस्याभिषेके प्रस्तुतोऽभूत्। चतुःसमुद्राणां पञ्चशतनदीनां च सलिलमानीतमासीत्।

---

एतादृशासंभवघटनाभारेण रामायणस्य वास्तविकता विशेषतया विकृताऽप्राकृता च भवति एतादृशात्युक्तिकल्पनापुरःसरं रामचन्द्र-जीवनस्य 'देवमानव' तदवदानं च अतिमात्रं क्षुण्णं जायते।

* रामराज्याभिषेकवर्णनं पूर्णतया अध्यात्मरामायणादृगृहीतम्।

रामसीते रत्नमयपीठोपविष्टे वसिष्ठवामदेवजाबालिगौतमवाल्मीकि प्रभृतयः सर्वेऽपि यथाविधि अभिषेककार्यमारब्धवन्तः, रामस्य मस्तके वंशपरम्परागतरत्नमयकिरीटः परिधापितः। तस्मिन् शुभलग्ने देवदुन्दुभयोऽवाद्यन्त; चतुर्दिक्षु च पुष्पवृष्टिः पपात। रघुवरः सीतया सार्धं दिव्याम्बरैः दिव्यभूषणैः, दिव्यगन्धानुलेपनैः विविध-दिव्यपुष्पैश्चालङ्कृतः वेदपारगमुनिगणैः सह विरराज। लक्ष्मणः दिव्यछत्रं धारयामास। भरतशत्रुघ्नौ तालवृन्तसंचालनपरावभूताम्। श्रीमान् विभीषणः दर्पणमर्पयामास। महातेजाः जाम्बवान् रुचिर-पुष्पमालां समर्पयामास। सुग्रीवः रत्नमयं कलसं धृतवान्। वालिपुत्रः अङ्गदः सकर्पूरं ताम्बूलं प्रतिपादितवान्। हनूमता दीपकः सुषेणेन शुभध्वजश्च दत्तः। सृष्टिः जयन्तः, विजयः, सौराष्ट्रः, राष्ट्रवर्धनः, अकोपः, धर्मपालः सुमन्त्रश्च एतेऽष्टमन्त्रिणः महात्मानं रामचन्द्रमभितः सेवापरा बभूवुः। अनेके जनपदाधिपाः नरश्रेष्ठाः राजानः, शास्त्र दृष्टयः पौरवृद्धाः नवाभिषिक्त रामचन्द्रस्य उपासनापरा अभूवन्। कमलापतिर्यथा देवैः सह परमाकाशे लीनः सन् विराजते तथैव श्रीमान् नृपश्रेष्ठः रामचन्द्रोऽपि मित्रैः राजन्यैः द्विजश्रेष्ठैः किंकरैश्च परिवृतः अयोध्यायां शुशुभे। इन्दीवरदलश्यामं, पद्मनिभाननं, आजानुलम्बितबाहुं, कम्बुग्रीवं, चित्राभरणभूषितं, पीताम्बरधारिणं, रघूत्तमं हरिं अभिषिक्तं देव्या जानक्या सह समासीनमवलोक्य विमानस्थसुरगणा गन्धर्व-

चारणाश्च सानन्दं जयध्वनिपूर्वकं रामचन्द्रमस्तवन् देवदेवः शंकरः देवमुनिराजन्यानामानन्दवर्धनपरः उक्तवान्—'यः मूलप्रकृतिः नित्यपरमात्मा सच्चिदानन्दस्वरूपः, विश्वरूपी विधातारं श्रीरामचन्द्र नमामि। हे राम! त्वं निरन्तरमानन्दकन्दमूलम्, जगतत्रयकृतानन्द मूर्तिः दिव्यदेहो विष्णुः; नमस्तुभ्यम्! हे सर्वरूप! त्वं ब्रह्मेन्द्रपूज्यः शंकराभयप्रदः, विष्णुस्वरूपः; तुभ्यं नमो नमः। त्वमुत्पत्तिस्थिति संहारकारी, त्रिगुणात्मा, नमोऽस्तु ते! त्वं निर्गतोपाधिस्वरूपो महात्मा भूत्वापि अनयैव विद्यारूपिण्या सीतादेव्या सोपाधिकोऽसि, नमस्ते! युवां रामसीते जगतः प्रकृति पुरुषरूपिण्यौ—युवाभ्यां नमः! जगतः पितरौ जानकीरामचन्द्रौ अभिवादये। जानकी प्रपञ्चरूपिणी, त्वं प्रपञ्चरूपी—नमो वाम्! जानकी ध्यानस्वरूपिणी त्वं योगि ध्येयमूर्तिः—नमो युवाभ्याम्। युवामुभौ परिणामापरिणाम शून्यौ नमो वाम्! कूटस्थ रूपिण्यै सीतायै राघवाय च तुभ्यं नमः। सीता लक्ष्मीः, त्वम् विष्णु; सीता गौरी त्वं शिवः सीता स्वयं सावित्री त्वं चतुर्मुखो ब्रह्मा; सीता शची त्वमिंद्रः; सीता स्वाहा त्वमग्निः; सीता संहारिणी देवी त्वं यमस्वरूपः; सीता सर्वसम्पत्तिः त्वं कुबेरः! हे रघूत्तम! सीता रुद्राणीदेवी त्वं च महाबलो रुद्रः; सीता रोहिणी देवी, त्वं च लोकसुखहेतुः सुधाकरः; सीता छाया त्वं सूर्यः; सीता रात्रिः त्वं दिवसः; सीतादेवी महाकाली त्वं च नित्य-

महाकालः; इत्थं जगति यत्किञ्चित्स्त्रीवाचकं तदखिलं जानकी, यच्चकिमपि पुंवाचकं तदखिलं त्वमेव। हे देवेश! त्वं सर्वत्र सर्वस्वरूप, सीता सर्वाधारस्वरूपिणी; त्वं सर्वत्राणकर्ता, तव शक्तिः सीता विश्वधारिणी।....हे राम! त्वं जगत्पूज्यः त्वमस्माकं नित्यपूज्यः। गौरी त्वन्नाम जपनिरता अहं च तव मन्त्रजपरतः। मणिकर्णिकायां तीरनीरस्थ मुमूर्षुव्यक्तेः कर्णे अहं तव तारकब्रह्मनामः (उपदेशं) यच्छामि अत एव हे जानकीनाथ! त्वं ध्रुवं परमं ब्रह्म त्वन्मायामोहितः भूत्वा प्राणिनः त्वामवगन्तुं न शक्नुवन्ति। तुभ्यमसकृन्नमोनमः।'....

## रामस्य धनरत्नादिवितरणं वरदानं च

अभिषेक कार्ये समाप्ते रामः ब्राह्मणेभ्यः अनेकधेनु वृषाश्वान्, सुवर्णरत्नवस्त्राणि भोज्यद्रव्याणि च अदासीत् भक्तवत्सलराघवः सूर्यसन्निभकाञ्चनमयीं मालां प्रीतिपूर्वकं दिव्यकेयूरयुगुलमङ्गदाय च ददौ। रामः कोटिचन्द्रसन्निभं मणिरत्नखचितं हारं प्रीतिपूर्वकं सीताकण्ठे समर्पयामास। सीता सलज्जं निजकण्ठात् तं हारमवतार्य हनूमद्दिशायां दृष्टिपातमकरोत्। तदैव रामः अभाषत—'यस्योपरि त्वं प्रसन्नासि तस्मै एव हारमेतं समर्पय।' सीता राघवस्य पुरत एव तेजोधैर्ययशसां दाक्ष्यसामर्थ्यविनयानां नीतिपौरुषविक्रमाणां बुद्धेश्चाधाराय हनूमते तं हारमुपहारीकृतवती। पवननन्दनः सीताप्रदत्तेन तेन हारेण शोभितः सन् गौरवान्वितो जातः। रामोऽपि हनूमन्तं प्रति

प्रसन्नः सन्नुवाच—'हनूमन्! अहं तवोपरि प्रसन्नोऽस्मि; प्रियतामभिलषितो वरः। दुर्लभमपि वरं तुभ्यं प्रदास्यामि।

हनूमानतिभक्तिपूर्वकं रामं प्रणम्योक्तवान्—'हे राम! अस्मन्मानसे भवन्नामस्मरणेच्छा नान्तमेति। अत एव भवन्नामस्मरणासक्त एवाहं जगति स्थास्यामि। संसारे यावत्कालं तव नाम स्यात् तावन्मम शरीरमपि स्थास्यति। अयमेव ममाभिलषितो वरः। रामः तस्मै 'तथास्तु' इति वरं प्रदायोक्तवान्—, 'इदानीं त्वं जीवन्मुक्तः सन् तिष्ठेः। कल्पावसाने मया सह सायुज्यं प्राप्स्यसि।' नास्त्यत्र कोऽपि सन्देहः। जानकी आशीर्वचनपूर्वकं हनूमन्तमब्रवीत्—'हे पवननन्दन! त्वं यस्मिन्कस्मिन्नपि स्थाने स्याः, अस्मदिच्छया तव भोज्यपदार्थलाभविषये कोऽप्यभावो न भवेत्।'

रामसीतयोः सकाशात् वरप्राप्तेरनन्तरं हनूमानात्मानं कृतकृत्यं भाग्यवन्तं च मन्यमानः कृतज्ञहृदयः आनन्दाश्रुपरिपूरितः तावुभौ असकृत्प्राणंसीत्। ततः रामः गुह्यकं कृताञ्जलिं पुरतःस्थितमवलोक्य जगाद—'सखे! त्व नित्यं मच्चिन्तनपरोऽभूः। अन्ते ध्रुवं त्वं अस्मत्सायुज्यलाभं करिष्यसि।' इत्युक्त्वा रामचन्द्रः गुह्यकाय रमणीयाभरणानि विस्तृतराज्यं चादासीत्। विभीषणं सुग्रीवं तयोरनुचरांश्च रामः यथोचितं सम्मानितान्विधाय सर्वेऽपि राजानः हृष्टचित्ताः स्वकीयराज्यानि प्रययुः।

उदारप्रकृतिः, धर्मज्ञः वृद्धसेवीरामः गृहीतराज्यभारः लक्ष्मणमुवाच—'धर्मज्ञ! अस्मत्पूर्वपुरुषाः यथाशक्ति राज्यभारमवहन्, त्वमपि यौवराज्याभिषिक्तो भवेः।' लक्ष्मणेनेदं नानुमोदितम्। तदा रामः भरतं यौवराज्येऽभिषिक्तवान् *

राज्यपदे प्रतिष्ठितो रामः वाजपेयाश्वमेधप्रभृति अनेकयज्ञानुष्ठानेन देवब्राह्मणान्तोषयामास। तेन, क्रमेण दशवारं अश्वमेधयज्ञः कृतः।

## अगस्त्यादिऋषीणामागमनम्

राज्यपदाभिषेकानन्तरं रामाय आशीर्वादप्रदानार्थं अगस्त्यविश्वामित्रयवक्रीत श्रीरैक्यच्यवनकण्वगार्ग्यधौम्यअत्रिकश्यप जमदग्निभरद्वाजप्रभृतयः ऋषिसत्तमाः अयोध्यायामुपस्थिताः। ऋषीन्प्रत्युद्गम्य स्वागतं च श्रावयित्वा पाद्यार्घ्यप्रभृतिभिः रामस्तान्सम्मानया-

---

* अध्यात्मरामायणमतेन अन्यकतिपयरामायणानुसारं च अनिच्छुकमपि लक्ष्मणं रामः यौवराज्यपदेऽभिषिक्तवान्। पुनः एतदपि कुत्रापि रामायणे प्राप्यते—लक्ष्मणस्य मृत्योरनन्तरं रामचन्द्रं भरतं यौवराज्याभिषिक्तं कर्तुं वसिष्ठगुरुमन्वरुध्यन। किन्तु तद्भरतस्यानुमतं नासीदिति दृष्ट्वा कुशलवौ तस्मिन्पदे नियुक्तवान्।

मास। रामचन्द्रभक्त्या प्रसन्नः अगस्त्योऽब्रवीत्—'हे राम! त्वं स्वयं परब्रह्मस्वरूपः; तथापि लोकशिक्षार्थं विप्रानित्थं सेवया संमानितवान्! वयं तुभ्यं हार्दिकाशीर्वचांसि प्रतिपादयामः। अस्मत्सौभाग्यवशादेव त्वं रावणं हत्वा जानक्या सह मातृभिः भ्रातृभ्यां च सह मिलितः राज्यपदासीनोऽभूः। एतादृशदुष्करकार्यसम्पादनेन त्वदभिनन्दनं कर्तुमेव वयमत्रोपस्थिताः।

ऋषिषु सुखोपविष्टेषु रामस्य प्रश्नेऽगस्त्यः रावणादीनां जन्मविवरणं, तस्य दुस्तरतपस्या, मेघनादजन्म, रावणतपसा तुष्टेन ब्रह्मणा कथं तस्य सुरासुरैरवध्यो भवितुं मन्त्रोपदेशः कृतः एतदखिलं वर्णयामास। ब्रह्मा रावणमगादीत्—'एतन्मन्त्रसंकीर्तन मात्रेण त्वं युद्धेऽजेयो भविष्यसि।' इति। मन्त्रस्तु अयम्—'हे सुरासुरनमस्कृतदेवदेवेश! व्याघ्राजिनधारिन् महादेव! त्वं भूतं भविष्यत् बालः वृद्धश्च; हरिवत्पिङ्गलनयनः, अत एव नमस्करोमि त्वाम्। हे देव! त्वं त्रिलोकी प्रभुः ईश्वरश्च, अत एव त्वमस्माकमर्चनीयः। त्वं हरः, हरितनेत्रः, युगान्तदहनः, बलः, गणेशः, लोकशम्भुः, महाभुजः, लोकपालः, महाभागः, महाशूली, महादंष्ट्रः, महेश्वरः नमस्करोमि त्वाम्। त्वं कालबलरूपी, नीलग्रीवः मनोहरः, वेदान्तपः, तपस्यापारगामी, अव्ययपशुपतिः—नमामि त्वाम्। त्वं शूलपाणिः, वृषकेतुः, नेता गोप्ता हरः जटी मुण्डी शिखण्डी महायशाः, मुकुटी

नमस्ते। त्वं भूतेश्वरः, गणाध्यक्षः, सर्वात्मा सर्वभावनः, सर्वगः, सर्वहारी, स्रष्टा, अव्ययः गुरुः—तुभ्यं नमः। त्वं कमण्डलुधरः, देवता, पिनाकी, धूर्जटिः, माननीयः, ॐ कारः, वरिष्ठः, ज्येष्ठसामगः, मृत्युः, मृत्युभूतः, पारियात्रः, सुव्रतः—नमामि त्वाम्। त्वं ब्रह्मचारी, गुहावासी, बालसूर्यसदृशः, दर्शनीयः, अमरः—त्वां नमस्करोमि। त्वं श्मशानवासी, भगवान्, अनिन्दितः उमापतिः—नमस्ते। त्वं जगद्धाता, कर्ता, शाश्वतपुरुषः, ध्रुवः, धर्माध्यक्षः, विरूपाक्षः, त्रिधर्मा, भूतभावनः—नमामि त्वाम्। त्वं त्रिनेत्रः, बहुरूपः, अयुत-सूर्यसमप्रभः, देवदेवः, अतिदेवः, चन्द्राङ्कितजटः—नमस्ते। त्वं नर्तकः, लासकः पूर्णचन्द्राननः, ब्रह्मण्यः, भरण्यः सर्वजीवमयः तुभ्यं नमः। पद्मयोनिर्ब्रह्मा रावणाय इममेव पुण्यजनकं शरणार्थिशरण्यं शत्रुजयिनं मन्त्रं प्रदाय ब्रह्मलोके प्रस्थितः।

## वेदवती उपाख्यानम्

अथागस्त्यः रामचन्द्रमगादीत्—'सीताहरण फलस्वरूपः य रावणस्य मृत्युरभूत् स तु विधात्रा पूर्वमेव निश्चित आसीत्। मया नारदमुखात् अस्मिन्विषये यदाकर्णितं तदेव त्वां कथयामि। शिवभक्तः दशग्रीवः तपसा महादेवं प्रीणयित्वा तस्मात् चन्द्रहासनामकं अतिदीप्तिमत्खड्गमेकं 'रावण' इति नाम च प्राप्य त्रिभुवनं पीडयन् हिमाचलगिरेः समीपस्थवने प्राप्तः कृष्णमृगचर्मपरिदधानां सुन्दरीं

यौवनसम्पन्नां कन्यामेकां तपस्यापरामवलोक्य काममोहितः सन् तामपृच्छत्—'भद्रे कस्य कन्यासि? किं च तव व्रतम्? एतादृश-कठोरतपोऽनुष्ठानं न त्वादृश रमणीयोग्यम् । त्वं यं प्रति प्रसन्ना भवेः स एव नरः पुण्यवान्! कथ्यतां मां प्रति तव पूर्णः परिचयः तव रूपलावण्यं मां कामोन्मत्त विह्वलं चाकार्षीत् ।'

सा तपस्विकन्या रावणस्यातिथ्यं विधायोक्तवती—'अहं अमितप्रभबृहस्पतिपुत्रब्रह्मर्षिकुशध्वजस्य वाङ्मयी कन्या तेन पिता मम 'वेदवती'ति नाम कृतवान् । अनन्तरं देवगन्धर्वयक्षरक्षांसि सर्वेऽपि पितुः समीपं मद्विवाहार्थं प्रार्थितवन्तः । किन्तु स तेषां मध्ये कस्मैचनापि मां विवाहे न दत्तवान् । यतः त्रिभुवनपतिः सुरेश्वरः विष्णुर्मम जामाता भवेदिति आसीत्तस्याभिलाषः ।....एतेन बलदर्पितो दैत्यपतिः शुम्भः कोपान्वितः सन् निशि सुप्तं मम पितरमवधीत् । शोकार्ताजननी पितृदेहमालिङ्ग्य अग्निं प्रविवेश । ततः प्रभृति पितुरिच्छां यथार्थीकर्तुं अहं तमेव नारायणं ध्यात्वा तं स्वहृदये धारयामि । स नारायणो विष्णुरेव मम पतिः । तं पुरुषोत्तमं विष्णुमधिगन्तुमेव ईदृशं कठोरं तपः मयारब्धम् ।...हे पौलस्त्यनन्दन! ज्ञातं मया तवाभिलषितम् । त्वया गन्तव्यमितः; वृथा तपोभङ्गं मा कृथाः।' इत्याकर्ण्य कामशराहतो रावणः रथादवतीर्य वेदवतीं बलाद्गृहीतुं धृततत्केशपाशः तदाकर्षणपरो जातः तेन वेदवती

अतिक्रोधान्विता निजहस्ताभ्यां केशानाच्छिद्य रावणकबलादात्मानं मोचयित्वा च कृतमरणनिश्चया क्रोधेन ज्वलन्तीवाब्रवीत्—'हे अनार्य ! त्वयाहं धर्षितास्मि किन्तु न त्वं मत्प्राणस्पर्श क्षमो भवेः । त्वत्समक्षमेवाहं अग्निं प्रवेक्ष्यामि । तव वधार्थं चाहं पुनरपि धरातले सती अयोनिजा च भूत्वा कस्यापि धार्मिकव्यक्तेः कन्यारूपेण जनिष्यामि ।' इत्युक्त्वा वेदवती ज्वलन्तमग्नौ प्राविशत् । हे महाबाहो ! सा वेदवती एव जनकराजकन्यारूपेण जाता त्वत्सहधर्मिणी अभूत् । त्वं च एव सनातनो विष्णुः । पूर्वं वेदवती क्रोधेन यं शत्रुं निजघान तमेव त्वं अमानवशक्त्या अवधीः । वेदवती एव रावणवधार्थं सीतारूपेणाजायत । सीताहरणमेव रावणमृत्युकारणमभूत् ।'

## सीताहरणहेतुकथनम्

इदमुपाख्यानं समाप्य अगस्त्यः रावणस्य दिग्विजयकथां, अनेकबलवतां राज्ञां चरित्रवर्णनम्, मरुत्तस्य यज्ञे रावणभयात् देवानां तिर्यग्योनिषु आत्मगोपनम्, यमरावणयोर्युद्धम् निवातकवचस्य, वरुणपुरस्य, बलेः, सूर्यलोकस्य, मान्धातुः चन्द्रलोकस्य कपिलस्य चोपाख्यानं वर्णितवान् । ततः शूर्पणखायाः, इन्द्रजितः कुम्भीनस्याः मधोश्चोपाख्यानानि समाप्य अगस्त्यः रावणस्य इन्द्रलोकजयं, रम्भानलकूबरसंवादं, इन्द्रस्य पराजयं, कार्तवीर्यार्जुनरावणयोर्युद्धं वालिरावणयोः सौहार्दं, हनूमतः पूर्ववृत्तान्तं बलवीर्यकथां च

सविस्तरं वर्णयामास। तदाकर्ण्य रामोऽब्रवीत्—'मुनिसत्तम! भवत्प्रसादेन विविधविस्मयकरपुण्यकथाश्रवणेन धन्योऽस्मि जातः।' आगस्त्यस्तेन प्रसन्नो जगाद—'अहमेकामपरां दिव्यां गुह्यां च कथां त्वां श्रावयामि। तेन 'रावणः सीतां किमर्थमपाहरत्' इति ज्ञास्यसि। पुरा सत्ययुगे रावणः प्रजापतितनयं सनत्कुमारं पप्रच्छ—'देवानां मध्ये कः बलवत्तमः देवानां हस्तेन मृत्योः कीदृग्गतिलाभः जायते? तं सनत्कुमारः उक्तवान्—'नारायणो हरिरेव सर्वश्रेष्ठः; सर्वे देवासुरास्तेन पराभूताः। ये देवताहस्तान्मृत्युमधिगच्छन्ति ते स्वर्ग लाभपरा भवन्ति तथा चक्रधरो जनार्दनः यान्हन्ति ते तस्यैव निलये आश्रयं प्राप्नुवन्ति। तस्य क्रोधोऽपि वरतुल्य एव।' रावणः विस्मितः सन् चिन्तयामास। यद्यहं केनाप्युपायेन महासमरे विष्णुं प्राप्स्यामि तस्य च हस्तेन मृत्युलाभं करिष्यामि, तर्हि ममाऽपि विष्णुलोक लाभो भवेत्। तदा सनत्कुमारोऽब्रवीत्—'महाबाहो! सिद्धो भवेत्तवाभिलाषः भगवान् हरिः त्रेतायुगे इक्ष्वाकुकुले रामरूपेणावतीर्णो भविष्यति; देवी लक्ष्मीः जानकीरूपेण तस्य पत्नी भविता।' रावणः चिन्तयामास—'कथं हरिणा सह मम विरोधः स्यात्? हरिणा सह विरोद्धुं रावणः सीतापहरणं कृतवान्। अनन्तरमगस्त्योऽब्रवीत्—'हे राम! रावणः तव हस्तेन निहतः सन् सुरलोकप्राप्त्यर्थं सीतामपहृत्यापि मातृवत् तद्रक्षामकार्षीत्। राम! त्वं

विज्ञानचक्षुः त्रिकालदर्शी अभ्रान्तः परमेश्वरः; भूतभविष्यवर्तमानानि तवावगतानि। हे ईश! त्रिलोकपूजितोऽपि त्वं भक्तानां सुयोग्यपथ-प्रदर्शनार्थं मानुषरूपेण सकलकर्मतत्परो भवसि।

## अगस्त्यस्य राज्ञां च प्रस्थानम्

रामचन्द्रः ऋषिमुखात् एतादृशदिव्यकथा श्रवणेन प्रसन्नोऽभूत। सुग्रीवविभीषणौ, जनकादिनृपतयः, अमात्याः समवेताः धार्मिकब्राह्मणक्षत्रियवैश्यशूद्राः सर्वेऽपि सानन्दाः सस्पृहनयनैः रामम-सकृदवलोकयां चक्रुः। ततः महातेजस्वी अगस्त्यः रघुनन्दनमब्रवीत्— 'तव दर्शनेन अहमात्मानं अतिसम्मानितं मन्ये। साधयामोऽधुना वयम्।' इत्थं सर्वेऽपि रामेण पूजिताः सन्तः गन्तुमनुमोदिताः।

## रामचन्द्रस्य राज्यशासनं प्रजापालनं च

रामः नित्यं नियमेन प्रातः सान्ध्यकृत्यानि देवपूजादिकं च समाप्य पुरजनपदवासिप्रजा आनन्दयित्वा राजकार्यतत्परोऽभूत्। तेन राजर्षिरूपेण एकपत्नीव्रतं स्वीकृतम्; निरन्तरं स पवित्राचरणश्चासीत्। इत्थं तेन लोकेभ्यः गृहस्थाश्रमाचारशिक्षा अदीयत। कतिचिद्दिनानन्तरं विदेहराजो जनकः, केकयराजो युधाजित्, रामस्य वयस्यः काशीराजः प्रतर्दनः अन्ये च राजानः रामेण विशेषतया सत्कृताः पूजिताश्च। तेन सह कतिचिद्दिनानि सानन्दं यापयित्वा

सर्वे स्वकीय राजधानि प्रयाताः। प्रयाणात्पूर्वं रामप्रीतिकामनया अनेकानि हस्त्यश्वयानानि चन्दनाभरणानि, मणिमुक्ताप्रवालान्, रूपवती दासीः छागमेषप्रभृतींश्च रामचन्द्राय उपहारीकृतवन्तः। रामः तदखिलं योग्यजनेभ्यः प्रतिपादितवान्। सर्वेऽपि प्रीताः सन्तः रामजयगानतत्पराः स्वस्थानं ययुः।....

रामचन्द्रः भ्रातृभिः मन्त्रिभिश्च परिवृतः न्यायमार्गेण राज्य-कार्यपरिचालनपरो बभूव। राघवस्य शासनकाले पृथिवी शस्य-शालिनी, वृक्षाश्च फलपूर्णा आसन्। प्रजा धर्मनिरता रमण्यश्च पतिभक्तिपरायणाः सुपुत्रवत्याश्चासन्। नाभूत्कापि पुत्रशोक दुःखिता।

## पुष्पकरथस्यागमनम्

कुबेरेण प्रेषितः सन् कस्मिंश्चिद्दिने 'पुष्पकः' रामसमीप-मागम्य विनयेनाभाषत—'कुबेरः मां एतादृशोपदेशपूर्वकं त्वत्सकाशं प्राहिणोत्—'यावत्कालपर्यन्तं श्रीरामः भूतले स्थास्यति तावत्काल-पर्यन्तं त्वं तस्य वाहनरूपेण तिष्ठेः—पश्चाद्रघुवरे वैकुण्ठं प्राप्ते मत्समीपं पुनरागन्तव्यम्।' इत्युक्त्वा भवत्सेवार्थं मां प्रेषितवान्।'

राघवस्तन्निशम्य पुष्पकमब्रवीत्—'स्वस्ति भवते। स्मृतमात्रेण त्वया मत्समीपमागन्तव्यम्। इदानीं स्वेच्छया भ्रमणपरो भवेः।' इत्युक्त्वा रामः पुष्पकं गन्तुं मनुजज्ञौ।

कस्मिंश्चिदहनि रथारूढो रामः राजकार्यावलोकनानन्तरं राज्ये परिभ्रमन् अपश्यत्—'कश्चिद्ब्राह्मणः एकमात्रबालकपुत्रस्याकालमृत्युना अत्यन्तशोकग्रस्तः तिष्ठति' इति। शोककारणं पृष्टो ब्राह्मणः रुदन्नब्रवीत्—'राज्ञः पापेन प्रजाः कष्टमनुभवन्ति। राज्ये एतादृशं किमपि निन्दनीयं पापमनुष्ठितं यत्फलस्वरूपं ममात्यन्तप्रियपुत्रस्य अकालमृत्युर्जातः। त्वयास्मत्पुत्रः जीवितः कर्तव्यः नो चेत् अहं पत्न्या सह राजद्वारे प्राणत्यागं विधास्यामि। राज्ञः पापेनैव अस्मत्पुत्रस्य मृत्युरजायत। मया तु कदापि असत्यं नोक्तम्। हिंसा न विहिता। नान्यदपि किञ्चित्पापमाचरितम्।' ब्राह्मणस्य दुःखपूर्णवचनेन रामः अतीव चिन्तितः सन् तत्क्षणमेव वसिष्ठादिऋषीन् भ्रातॄंश्चाहूतवान्। मार्कण्डेयकाश्यपगौतमनारदप्रभृतयोऽपि समायाताः। रामेण ऋषीन् प्रति अस्य बालकस्याकालमृत्युकारणे पृष्टे सति नारदोऽब्रवीत्—'सत्ययुगे केवलं ब्राह्मणा एव तपस्यारता आसन्; नासीत्तदानीमकालमृत्युः। त्रेतायुगे क्षत्रिया अपि तपस्य परायणा जाताः। ब्राह्मणक्षत्रिययोर्मध्ये नासीत् कोऽपि भेदः। अतः तदानीं चातुर्वर्ण्यं स्थापितमभूत्। तदारभ्य अधर्मस्य एकः पादः पृथिव्यां प्रविष्टः द्वापरयुगे वैश्या अपि तपस्या परा भवेयुः।.... कलियुगे हीनवर्णा शूद्रा अपि घोरतपोरता भवेयुः यत्फलस्वरूपं पृथिवी दारुणाधर्मभाराक्रान्ता स्यात्। महाराज! तव राज्ये ध्रुवं कोऽपि दुर्बुद्धिः शूद्रः तपः सक्तः विद्यते तेनैव पापेन अस्य ब्राह्मण बालकस्य मृत्युर्जातः। त्वयान्वेषणं कार्यम्।....

तन्निशम्य रामः तत्क्षणमेव भ्रातॄणामुपरि राज्यरक्षाभारं निधाय रथमारुह्य राज्यस्य पश्चिमोत्तरपूर्वदिक्षु कृतपर्यवेक्षणः अन्ते दक्षिणस्यां दिशि दृष्टवान्—'शैवलपर्वतसमीपं महतः सरोवरस्य तीरे कश्चित्तपस्वी ऊर्ध्वपादः अधोमुखश्च तपस्यापर आस्ते। रामस्तत्समीपमागत्योक्तवान्—'अहं दाशरथी रामः कौतूहलवशात्पृच्छामि—किमर्थं त्वयेदं दुष्करं तपः क्रियते? किं तवाभीष्टम्? स्वर्गलोकोऽन्यत् किमपि वा? किं जातीयो भवान्? तदपि सत्यमुच्यताम्।'

तपस्वी अधोमस्तकः सन्नेव प्रत्यभाषत—'अहं देवलोकप्राप्तिमभिलषामि। असत्यं न वदेयम्। अहं शूद्र जातीयः नाम्ना शम्बूकः।' रामः तत्क्षणमेव करभृतकोशमुक्तखड्गः तपस्विनः शिरश्छेदं कृतवान्। तेन देवाः सन्तुष्टाः सन्तः अब्रुवन्—'राम! त्वयास्माकं प्रियकार्यं विहितम्। त्वदर्थमेव अयं शूद्रः स्वर्गाधिकारी नासीत्।....इतश्च शूद्रनिधनेन सार्धमेव ब्राह्मण बालकः जीवन लाभं कृतवान्। *

---

* द्वापर युगेऽपि शूद्राणां कृते तपश्चरणं ईश्वाराराधनं वा निषिद्धमासीत्। एतादृशनियमलङ्घनकर्तुश्च कठोरदण्डोऽजायत। कलियुगपर्यन्तं समाजे शूद्रः ब्रह्मध्यानपूजार्चना देवताराधनेभ्यः वञ्चितोऽभूत्।

 

इत्थं रामः धर्मस्य संस्थापनं प्रचारं च कर्तुमारभत। श्रूयते यत् रामचन्द्रः लोकान् धार्मिकान्विधातुं भारतस्य विभिन्नस्थानेषु सहस्रशः शिवलिङ्गानि स्थापयित्वा समग्रभारते शिवपूजां प्रवर्तयामास।....

## कुक्कुर सर्वार्थसिद्धिसंवादः

रामचन्द्रः प्रातः धर्मासने उपविश्य वसिष्ठादि विद्वद्ब्राह्मणैः व्यवहारविद्भिः मन्त्रिभिश्च परिवृतः राजकार्यं कृतवान्। तदुद्दिश्य एकस्मिन्दिने सलक्ष्मणमब्रवीत्—'कार्यार्थिन आहूयानीयन्ताम्।' द्वारदेशमागत्य लक्ष्मणः अद्राक्षीत्—नासीत्तत्र कोऽपि प्रार्थी; केवलमेकः कुक्कुरः असकृद्भषणपरः स्थितः। लक्ष्मणस्तमपृच्छत्—'किमर्थं त्वं निरन्तरं भषणपरोऽसि? अस्ति चेत्तव कापि प्रार्थना महाराजं प्रति निवेदय। कुक्कुरः सविक्षोभमुक्तवान्—'देवमन्दिराणि, राजसभाः ब्राह्मणगृहाणि अग्निसूर्यवायवोऽधितिष्ठन्ति। वयं तु सर्वप्राणिषु अधमाः।' नास्त्यस्माकमधिकारः एतत्स्थानप्रवेशे।'

लक्ष्मणस्तु कुक्कुरवार्तां निशम्य रामः तं श्वानं राजसभामानेतुमादिशत्। कुक्कुरमस्तकमाहतमासीत्। रामस्तमपृच्छत्—'कस्तवाभियोग इति निर्भयमुच्यताम्। शुनकः सक्षोभं प्रत्युवाच—'राजन्! सर्वार्थसिद्धो नाम कश्चित् भिक्षुको ब्राह्मणः अकारणमेव मामताडयत्—भवताऽस्य विचारः कर्तव्यः।'

रामाज्ञानुसारं द्वारपालः तत्क्षणमेव तं ब्राह्मणमाहूय आनीतवान्। रामेण ब्राह्मणः पृष्टः 'केनापराधेन त्वया कुक्कुरशिरसि दण्डाघातः कृत?' ब्राह्मणः प्रत्युवाच—'क्षुधार्ते मयि भिक्षार्थं प्रयाते अयं श्वा मार्गावरोधं विधाय सुप्त आसीत्, अपसर्तुमसकृदादिष्टोऽपि स नापसृतः अतो मया अताड्यत। क्रोधवशेन मया अपराधः कृतः विधीयतां मे दण्डः। राजदण्डं प्राप्य नश्येन्मे नरकभयम्।'

एतदाकर्ण्य रामः सभासदां मतं ज्ञातुमैच्छत्। वसिष्ठादयः सर्वेऽपि ऐकमत्येन जगदुः। शास्त्रे ब्राह्मणदण्डस्य नास्ति किमपि विधानम्।' श्वा तदानीमुक्तवान्—'राजन्! यदि प्रसन्नो भवान्, मह्यं दत्तायाः प्रतिश्रुतेः पालनं चेच्छसि चेदयं ब्राह्मणः कालञ्जर कुलपतिर्विधातव्यः।' रामः सारमेयस्याभिलाषां पूरयामास। स ब्राह्मणः कालञ्जरमठकुलपतिपदे प्रतिष्ठापितः। एतदवलोक्य मन्त्रिणः विहस्योक्तवन्तः—'महाराज! भवता ब्राह्मणो न दण्डितः, अपि तु उच्चपदे आरोपितः।' रामो जगाद—'अस्यार्थं सारमेय एव जानाति न कोऽप्यन्यः।'

रामाज्ञया सारमेयोऽब्रवीत्—'अहं पूर्वं कालञ्जरकुलपतिरासम्। एतत्कुलपतित्वफलस्वरूपमेव ममैतादृश नीचजातौ जन्म जातम्। अधुना अयं क्रोधी निष्ठुरप्रकृतिरधार्मिको ब्राह्मणः कुलपतिपदं प्राप्नुयात् तस्य फलं अस्योनपञ्चाशत्पुरुषा नरके पतिष्यन्ति।

अत एव कस्यामप्यवस्थायां एतादृश नीचपदप्रदानं नोचितम् *। यदि कस्यापि पुत्रकलत्राणां भाविवंशजानां वा नरकलाभ इष्टः स्यात् तर्हि तस्मै कुलपतिपदं प्रतिपाद्य देवगोब्राह्मणानां सेवा भारो दातव्यः।' इत्युक्त्वा शुनकः प्रययौ ।

---

* कुलपतेर्मठाधीशस्य वा निन्दार्थमेव एतादृशकथा व्यरच्यत। अन्यथा सारमेयस्तु वक्तुं न शक्नोति! उपनिषत्पुराणादिषु एतादृशाः अनेकाः कल्पितकथा विद्यन्ते। तेन कोऽपि न मन्यतां यत् सत्यत्रेताद्वापरयुगेषु पशुपक्षिणः मनुष्यैः सह भाषया विचारविनिमयं कर्तुं समर्था आसन्। कदाचिद्योगशक्तिप्रभावेण तेषु युगेषु केऽपि ऋषिमुनयः पशुपक्षिणां भाषां ज्ञातुमलमभूवन्। विशेषनीत्युपदेशार्थं हितादर्शप्रचारणार्थं वा एतज्जातीयाख्यानानि असृज्यन्त।

अभिधानकोशग्रन्थेषु कुलपतिशब्दस्यार्थः यः ऋषिः दशसहस्रशिष्याणां प्रतिपालने शिक्षादाने च समर्थः स एव कुलपतिः इत्युच्यते। धनसम्पत्तिप्रभुत्वपदगौरवलाभेन त्यागतपोविहीनतया कुलपतीनां जीवने नैतिकमधः पतनं भवेत्, अतः कुलपतिपदं निन्दनीयमित्युच्यते।

कालञ्जरः मुक्तिप्रदाय विशेषः।

## उलूकगृध्रसंवादः

रामचन्द्रः राज्यशासनसमये सर्वान्प्रति न्याय्यव्यवहारं कृतवान्। पशुपक्षिणोऽपि तस्य न्यायाद्वञ्चितानासन्। एतादृशाखिलव्यवहारसमये रामस्य अत्युन्नतधिषणापरिचयः प्राप्यते।

कस्मिन्नपि वने एकः गृध्रः उलूकश्च न्यवसताम्। एकदा गृध्रः उलूकनिवासमागत्योक्तवान्,—'इदमस्मदीयं वासस्थानं तदा उभावपि निर्णयार्थं राजसभामागतौ। गृध्र उवाच,—'महाराज! मयास्वयमेव अनेकप्रयत्नैर्निर्मितमिदं वासस्थानम्। इदानीमयमुलूकः बलात्तदुपरि अधिकारं कृतवान्। रक्षणीयोऽहं भवता।' दिवाभीतोऽब्रवीत्—'महाराज! अयं गृध्र एव मम वासस्थानं बलाद्गृहीतवान्। अहं च निराश्रितो जातः भवतास्य निर्णयः कार्यः।' रामः मंत्रिणः आहूय विवादविषयं च विशदीकृत्य गृध्रमपृच्छत,—'कियत्समयात्पूर्वं त्वयेदं वासस्थानं निर्मितम्? गृध्रः प्रत्यब्रवीत—'अस्मिन्भूतले यतः प्रभृति मनुष्याणां निवासोऽभूत् ततः प्रभृति।' उलूकोऽभाषत,—'पृथिव्यां वृक्षोत्पत्ति समयादारभ्येदं मम वासस्थानमास्ते।'

रामः एतद्विवादविषये सभासदां मतं ज्ञातुमैच्छत—तदा सचिवाः प्रत्यवदन्—'अस्मन्मतानुसारं उलूक एव एतन्निवासस्थानाधि-

कारी न तु गृध्रः। महाराज! अस्मिन्विषये भवतां विचार एव प्रमाणम्।

रामोऽगादीत्—'शास्त्रे सृष्ट्युत्पत्तिक्रमे दृश्यते—आरम्भे जगज्जलमयमासीत्। भूतात्माविष्णुः लक्ष्म्या सह स्वोदरधृतब्रह्माण्डः महाजलधौ सुप्तः आसीत्। ब्रह्मा नारायणनाभिकमलात् समुद्भूतः पृथिवी वायु पर्वतवृक्षान् सर्वान् प्राणिनश्च समुदपादयत्। ततः विष्णोः कर्णमलात् मधुकैटभनामानौ दानवौ उत्पन्नौ ब्रह्माणमाक्रान्त-वन्तौ। ब्राह्मविकटशब्दमकार्षीत्। तदानीं विष्णुः स्वचक्रेण एतद्दानवद्वयस्य वधं विधाय क्रमशः अस्मिञ्जगति वृक्षानसृजत्। अतः इदं वासस्थानं उलूकस्यैव न तु गृध्रस्य। अयं गृध्रः परस्वापहारकः, दोषी उचितोऽस्य दण्डः।'

तत्क्षणमेव देववागश्रूयत—'राम गृध्रो न दण्डनीयः। अयं पुरा ब्रह्मदण्डो नाम राजासीत्। कस्मैचित्क्षुधार्तब्राह्मणाय अनेन भोजनं प्रतिपादितम्। तस्मिन्मांसमवलोक्य ब्राह्मणः क्रुद्धः सन् ब्रह्मदत्तं शशाप—'त्वं गृध्रो भवेः' इति। ब्रह्मदत्तेनोक्तम्—'भवता मांसं नाभ्यवह्रियते' इत्यजानता मया तत्प्रदत्तम्, प्रसीदतु भवान्।' ब्राह्मणेनोक्तम्—'इक्ष्वाकुवंशीय रामेण स्पृष्टः शापान्मुक्तो भविष्यसि।'

आकाशगिरमिमां निशम्य रामस्तं गृध्रमस्पृशत् —शकुनिरूपी ब्रह्मदत्तः अधिगतदिव्यरूपः जगाद—'राघव! त्वत्प्रसादेन शापमुक्तोऽहम् । जयतु भवान् ।'*

## रामस्याश्वमेधयज्ञायोजनम्

ऋषिप्रवरस्यागस्त्यमुनेः उपदेशेन रामचन्द्रः ब्राह्मणकुलजातरावणवधस्य प्रायश्चित्तार्थं अश्वमेधयज्ञायोजनमकार्षीत् । वसिष्ठवामदेवजाबालिकश्यपादीन् अश्वमेधयज्ञब्राह्मणानाहूय रामेण स्वाभिप्राये ज्ञापिते ते प्रीताः सन्तः गरुडध्वजं प्रणम्य अश्वमेधयज्ञं बहुधा प्रशशंसुः । हितकामः सुग्रीवः विभीषणादयः राजन्यवर्गाः विदेशस्थ धार्मिकद्विजाः सस्त्रीका ऋषयश्च निमन्त्रितणा आसन् । नैमिषक्षेत्रे गोमतीतीरे विशालयज्ञशाला निरमीयत । प्रभूततिलतण्डुलमुद्गमाषलवणादिकं वहन्तः शतशो भारवाहाः पशवः तत्रागन्तुमारब्धाः । उपयुक्तघृततैलादिकं, व्यञ्जनोपस्काराश्च संगृहीताः । गृहीतप्रभूतसौवर्णरौप्यः प्राहरिकपरिवृतो भरतः यज्ञभूमियात्रार्थं निर्ययौ ।

---

* ब्राह्मणानामलौकिकी शक्तिः त्रिकालज्ञत्वं च तथा श्रीरामचन्द्रस्य महिमानं ज्ञातुमेव इयमाख्यायिका रचिता । रामायणमहाभारत प्रभृतिग्रन्थेषु एतत्सदृशानि अनेकोपाख्यानापि नीत्युपदेशार्थं च प्रवेशितानि ।

तेन सार्धं अनेके आपणिका नटनर्तकपाचका युवतयश्च जग्मुः। यज्ञस्थानरक्षार्थं सैनिका न्ययुज्यन्त। भृत्याः कोषाध्यक्षाः दौवारिकाः पुरनार्यः मातरश्चनिर्गताः। नवनिर्मितानि अनेकानि वासगृहाणि यज्ञस्थलशोभां वर्धयामासुः।

सम्पूर्णयज्ञायोजनं समाप्तम्। रामः यथाविधि यज्ञदीक्षितः सन् सुलक्षणं कृष्णसारवर्णमेकमश्वं मुमोच। ऋत्विग्भिः सह लक्ष्मणः एतद्यज्ञाश्वरक्षार्थं न्ययुज्यत। ससैन्यो रामः यज्ञस्थलमागतः अवलोकित-सम्पूर्णयज्ञायोजनः अतुष्यत्। निमन्त्रिता राजानः अमितमहारत्नानि, धनधान्यादिकं, अश्वयानानि, मत्तमातङ्गाः दिव्याभरणानि च उपहारी कृतवन्तः भरतशत्रुघ्नौ सर्वेषां यथायथं सत्कारपरौ अभूताम्। यथेष्टं घृतान्नमिष्टान्नादिकं प्रस्तुतमभूत्। सुग्रीवादयः सयत्नं ब्राह्मणेभ्यो भोजन-परिवेषणपरा बभूवुः *। महासमारोहपूर्वकं यज्ञसमाप्तिर्जाता। समागताः दीर्घजीविमुनयः रामकृताश्वमेधं एकमुखेन प्रशंसन्तः ऊचुः 'एतादृशं आकण्ठ भोजनं दानं च पूर्वं कस्मिन्नपि यज्ञे जातमिति अस्माभिर्न-स्मर्यते।'

---

* ब्राह्मणेतरवर्णैः विदेशीयैः विजातीयैश्च परिवेषितं भक्ष्यमन्नं ब्राह्मणाः स्वीचक्रुः एषा घटना तत्कालीनसामाजिकप्रथोपरि प्रदानं करोति।

इत्थं श्रीरामचन्द्रः क्रमशः दशसंख्याकान् अश्वमेधान् कृतवान् प्रकृतिरञ्जकनृपतिरूपेण सप्तविंशतिवत्सरपर्यन्तं निष्कण्ठकराज-पालनमकरोत् । *

यज्ञसमाप्तौ निमन्त्रिताः सर्वेऽपि राजानः स्वस्वराज्यानि प्रति निवृत्ताः । रामचन्द्रोऽपि भ्रातृभिः पुरवासिभिश्चसार्धं अयोध्यां प्रत्यावर्तत ।

## रामस्याशोकवनेवासः

एकस्मिन्दिने पुष्पकरथमनुज्ञाय रामः अशोकवननामक—उद्यानवाटिकायां प्राविशत् । तदुपवनं चन्दनचूतागरुरक्तचन्दन-देवदारुचम्पकैः कालागरुपुन्नागमधूकपणससालैः पारिजातकदम्बार्जुनैः नागकेसरमन्दारकदलीप्रियंगुभिः बकुलजम्बूदाडिमकोविदारप्रभृतिभिर्वृक्षैः परिशोभितं, लतागुल्मदिव्यसुगन्धि कुसुमभूषितं रसालफलभारा-वनत शाखिपरिपूर्णं चासीत् ।....विविधजलहंस चक्रवाकसारस मधुरध्वनिमुखरित जलाशयाः अस्योपवनस्य सुषमां वर्धयामासुः । दीर्घिका सोपानपंक्तयः बहुमूल्य माणिक्य निर्मिता अभूवन् । मध्यस्थले

---

* कस्मिन्नपि रामायणे रामः दशवर्षपर्यन्तमेव राज्यमकार्षीत् । प्रतिवत्सरं च एकमिति दश-अश्वमेध-अनुष्ठानं कृतवान् । एतादृशः दशवर्षात्मकः काल एव प्रायः पुराणकाराः दशसहस्रवर्षात्मकं वर्णयन्ति ।

स्फटिकबद्धं प्रस्फुटितकमलोत्पलं सरः आसीत् यस्य चतुर्दिक्षु विविध-हर्म्य शिलातलानि एतत्स्थानमधिकतरं रमणीयमकार्षुः ।

सन्ध्यायाः पूर्वं रघुनन्दनः तदेव कुञ्जवनमेत्य विश्वासपात्र प्रतिहारीहस्तेन अन्तःपुरे सीतासमीपं सन्देशं प्रेषितवान् — यदहं अशोकवनेऽस्मि त्वयापि सहचरिभिः सखीभिश्च सह तत्रागन्तव्यम्' इत्थं संदिश्य रघुवरः सन्ध्यावन्दनाद्यर्थं सरोवरतीरमगात् ।....

सरोवरात्प्रत्यावर्त्य काकुत्स्थो रामचन्द्रः सखीभिः परिवृतां सीतामवलोक्य अतिप्रमुदितोऽभूत् । सीतया सार्धं स्वर्णासनोपविष्टः पवित्रमैरेयपानं कर्तुमारब्धः । किङ्कराश्च मिष्टतरमांसफलानि आनयामासुः । नृत्यगीतपटवः पानवशीभूता रुचिरवसनविभूषिता सुन्दररमण्यः मधुरनृत्यगीतैः रामसीतयोः मनोरञ्जनपरा बभूवुः ।

धर्मशीलो रामः विधिवत् पौर्वाह्णिकं धार्मिककार्यसमाप्त्यनन्तरं दिनस्यावशिष्टार्धभागं अन्तःपुरे यापयामास । सीता देव्यपि पूर्वाह्णे देवपूजानन्तरं श्वश्रूणां सेवारताऽभूत् । रामचन्द्रः सीता च इत्थं विविधभोग्यवस्तु संभोगं विहारं च कृत्वा सप्तविंशतिवत्सरपर्यन्तं राज्यशासनं कृतवान् । *

---

* श्रीरघुनन्दन गोस्वामि विरचित 'श्रीरामरसायनग्रन्थे रामस्य अशोकवनवासकालस्य एका मनोरञ्जकघटना वर्णिता आस्ते ।

एकस्मिन्दिने श्रीरामः निर्जने एकाकी उपविष्ट आसीत्। तदानीं सौमित्रिः तं भक्त्या प्रणम्य सविनयमुवाच 'आर्य! उपदेष्टव्योऽस्मि भवता किञ्चित्। भवांस्तु सर्वज्ञः शुद्धज्ञानस्वरूपः सकलप्राणिनामात्मा। हे राम! ममेतादृशं दर्शय येनाहमपारमज्ञानसागरमनायासेनावतरिष्यामि।' लक्ष्मणस्य हार्दिकीमभिलाषां ज्ञात्वा रामः गम्भीरमनसा तमब्रवीत्—'हे सौमित्रे! अज्ञानमेव संसारबन्धनस्य मूलकारणम्। संसारनिवृत्त्यर्थं अज्ञाननाश एव उपायः। विद्यैव अज्ञाननाशसमर्था। अत एव पण्डिताः ज्ञान विचारतत्पराः सन्ति। यथा विद्या मोक्षसाधनं वेदशास्त्रप्रतिपादिताः क्रिया अपि तादृशाः।....अत एव विद्या सहायिका क्रियापि अपेक्ष्यते।

---

तत्र दृश्यते—यथा रामचन्द्रः सीताशुद्ध्यर्थं लङ्कायां सीतायाः अग्निपरीक्षां कृतवान् तथैव सीतासख्योऽपि रामचन्द्रपरीक्षार्थं स्वाधिकारं प्रदर्शितवत्यः रामः तदर्थं उद्यतः सन् उत्तप्तकनकगोलकौ हस्तद्वये धारयित्वा परीक्षार्थं प्रस्तुतोऽभूत् इत्यादि। ध्रुवम् अन्तपर्यन्तं रामचन्द्रस्य परीक्षादानमावश्यकं नासीत्। रामचन्द्रस्य असहायामवस्थामवलोक्य सीतामानसं सदयमजायत। सा सखीरुपदिश्य रामं तस्माद्दिव्यान्मुक्तमकार्षीत्।....उत्तरकाण्ड-वर्णिता घटनाः सर्वथा पौर्वापर्यसंगति विरुद्धाः सन्ति।

अकृते कर्मणि ये दोषास्तेऽपि वेदादिषु वर्णिताः। अतः मुमुक्षुणा विद्या-अविरोधि कर्म कर्तव्यम्।....

अनाद्यन्तस्यात्मनः न विद्यते जन्ममृत्युक्षयवृद्धयः। आत्मा सर्वव्यापी, आनन्दस्वरूपः स्वयं प्रकाशः सर्वव्यापकः अद्वितीयश्च।.... अग्निलोहयोरेकत्रवासेन यथा लोहपिण्डः अग्निरूपः अग्निश्च अयो-गोलकरूपेण प्रतिभाति तथैव चिदाभासः बुद्धीन्द्रियाणां अन्योन्या-त्यन्तिक संसर्गेण परस्पराध्यासवशात् चैतन्यमय आत्मा जड रूपः, चित्तं च चैतन्यरूपं प्रतिभाति। वेदवाक्यगुरुवचन विश्वोत्पन्नज्ञानबलेन आत्मानुभवलाभं विधाय उपाधिशून्य निजात्मानं परमात्मनः अभेद-रूपेण प्रत्यक्षी क्रियताम्।....यः जनः यस्मिन्कस्मिन्नपि समये गुणातीत ब्रह्मणः निर्गुणरूपेण वा उपासनां करोति स ब्रह्मरूपतां प्राप्नोति। त्वमपि यदि भक्तिपूर्वकं एतादृशोपदेशं गृह्णासि तर्हि अन्ते ममैव सारूप्यमधिगमिष्यसि।' श्रुत्वैतदुपदेशः सौमित्रिः परम भक्त्या रामचरणौ प्रणनाम।....

## शत्रुघ्नद्वारा लवणवधः

एकस्मिन्दिने यमुनातीरवासिमुनीनां स्तोमः लवणराक्षसेना-त्युत्पीडितः सन् मुनिवरं च्यवनं पुरस्कृत्य रामस्य समीपमागतः। रामः सभक्तिकं पाद्यार्घ्यादिभिः मधुरवचनैश्च मुनीन्पूजयित्वा तान् सुखा-

सनोपविष्टाश्वविधाय सविनयं कुशलप्रश्नानन्तरमब्रवीत्—'हे मुनयः! केन हेतुना भवतां शुभागमनम्? भवद्दर्शनेन धन्योऽस्मि संवृत्तः। भवतां विधेयोऽहं किं विधेयमित्याज्ञापयत।' तदा च्यवनः ब्राह्मण-द्वेषि लवणेतिहास प्रसंगेनाब्रवीत् हे राजेंद्र! वयं लवणेनोत्पीडिताः सन्तस्तव शरणमागताः। श्रीरामोऽब्रवीत् 'मा भैषिष्ठ, अहं दुरात्मानं लवणं हत्वा युष्मान्निरापदो विधास्यामि। निश्चिन्तमनसा यूयं निवर्तध्वम्।'

इत्युक्त्वा रामः भ्रातॄनुवाच,—'युष्मासु कः लवणवधपूर्वकं ब्राह्मणेभ्योऽभयदाने समर्थः?' तदाकर्ण्य भरतः कृताञ्जलिरुवाच—'आर्य! अहमेव लवणं हनिष्यामि,—आज्ञापय।' तदानीं शत्रुघ्नः राममभिवाद्य उक्तवान्,—'हे राघव! लक्ष्मणेन लङ्कासमरे महत्कार्यं विहितम्। महाबुद्धिः भरतः नन्दिग्रामे चिरं विविध दुःखमन्वभवत्; अत एव लवणवधार्थमहमेव यास्यामि।

इति निशम्य रामः शत्रुघ्नं अङ्कमारोप्योक्तवान्,—'अहमद्यैव त्वां मथुराराज्येऽभिषेक्ष्यामि। रामः लक्ष्मणमभिषेकद्रव्याद्यानयनार्थं मादिश्य अनिच्छुकमपि शत्रुघ्नं सस्नेहमभिषिच्य दिव्यं शरमेकं तस्मै प्रदायोक्तवान्—'अनेन शरेण लोककण्टको लवणो हन्यताम्।.... मधुवने च राज्यस्थापनं विधाय तत्र वस्तव्यम्। त्वया अग्रतो गत्वा

लवणः हन्तव्यः, ततः अश्वानां पञ्चसहस्राणि सहस्रद्वयं रक्षिणां शतद्वयं गजारोहिणां शतत्रयं पदातीनां नटनर्तका वणिग्गणाश्च त्वामनुगच्छेयुः। त्वया दशलक्षसुवर्णमुद्रा प्रभूतं धनं च गृहीत्वा गन्तव्यं मधुवने राज्य स्थापनं च कर्तव्यम्।'

इत्युक्त्वा राघवः शत्रुघ्नं शिरसि आघ्राय आशीर्भिः सह तं लवणवधार्थं प्रेषयामास। शत्रुघ्नः राघवोपदेशानुसारं मधुतनयं लवणं हत्वा तत्र मथुरापुरीं स्थापयामास। क्रमेण च मथुरा विस्तृत जनपदे परिणता अभूत्।....

## भरतस्य गंधारदेशजयः

किञ्चित्कालानन्तरं भीमविक्रमो भरतः मातुलेन युधाजिता गन्धर्ववधार्थमाहूतः सन् रामादेशेन ससैन्यं निर्गतः। कृतानेक-गन्धर्ववधः सः गन्धर्वदेशे राज्यद्वयं स्थापयामास। तत्र पुष्पनगरे पुत्रं पुष्करं तक्षशिलानगरे च पुत्रं तक्षकमभिषिच्य पुत्रौ धनधान्य सहायसम्पन्नौ सुप्रतिष्ठितौ चावलोक्य अयोध्यां प्रत्यागत्य च राज-कार्ये रामस्य सहायकरो बभूव।...

## लक्ष्मणस्य राज्यजयार्थं प्रेषणम्

इतः श्रीरामचन्द्रः अत्यधिकस्नेहपूर्वकं एकस्मिन्दिने लक्ष्मण-मुक्तवान्—'सौमित्रे! अस्माभिः पैतृकराज्यं प्राप्तम्। चत्वारो भ्रातरः

पुत्रादयश्च सन्ति अत एव राज्यवृद्धिरपेक्षितास्ते। शत्रुघ्नभरतौ द्वावपि राज्यवृद्ध्यर्थं प्रयत्न शीलौ अनायेताम्। त्वयापि स्वपुत्रद्वयेन साधँ पश्चिमदिशं प्रतिगन्तव्यम्। तत्रत्याधिवासिनः दुष्ट भिल्लजातीयान् पराजित्य एतस्मिन्प्रदेशे अङ्गद-चन्द्रकेतु-इति पुत्रद्वयार्थं नगरद्वयं स्थापयित्वा पुत्रद्वयमपि हस्त्यश्वधनान्वितं विधाय नगरद्वये तौ अभिषेक्तव्यौ। अनन्तरं मत्समीपमागंतव्यम्।

सौमित्रिः रामाज्ञानुसारं गजाश्ववाहनैः सैन्यसामन्तैश्च परिवृतः सन् समग्ररिपुवधं विधाय पुत्रद्वयं च राज्यद्वये स्थापयित्वा अयोध्यां प्रत्यावृत्य राजकार्ये रामसहायकोऽभूत्।

## सीतायाः गर्भलक्षणम्

रामचन्द्रः पूर्वाह्णे भ्रातृभिः सह राजकार्यधर्मकार्यानुष्ठानपूर्वकं दिनस्यावशिष्ट भागं अन्तः पुरे सीतया सार्धमतिवाहितवान्। सीतापि प्रातः काले देवसेवादिकं तथा पक्षपातरहितं श्वश्रूसेवां कुर्वन्ती पुरनारीभिः सुखदुःखरात्मानं संयोज्य गृहकार्यादिकं च समाप्य चित्रवसन भूषण शोभिता रामसमीपमागता। इत्थं किंचित्कालातिवहनानन्तरं एकस्यां रात्रौ नृत्यगीतादिके प्रवर्तमानेऽस्मिन्नेव समये सीतां तत्रोपस्थितामवलोक्य रामचन्द्रेण तस्या गर्भलक्षानि स्पष्टतयावलोकितानि। स्मितहास्यो रामः आनन्द प्रकाशपूर्वकं "साधु! साधु! इत्युक्त्वा

प्रशंसापरः सन् देवबाला सदृशीं सीतामब्रवीत्—'जानकि! तव गर्भलक्षणानि स्पष्टतया वलोक्यन्ते।' एतदाकर्ण्यलज्जया सीता मुखमण्डलमारक्तं जातम्। सा व्रीडावनतमुखी रामचन्द्र समीपमुपविश्य तत्पदसेवातत्पराऽभूत्। तदानीं रामः सीतां समीपतरमानीय उक्तवान्—'अपि भक्षण-धारण-दर्शन श्रवणादिषु यस्मिन्कस्मिन्नपि विषये तव कापि अभिलाषा जायते? उच्यतां सानन्दं तामहं पूरयिष्यामि।' तदानीं वैदेही मृदुहास्यपरा राममभाषत—'हे रघुनन्दन! पवित्रतपोदर्शनार्थं मम महतीच्छा वर्तते। देव! फलमूलाहारिणामुग्रतेजसां गङ्गातीरवासिनां ऋषीणां चरणतले निवस्तुमपि समीहा वर्तते। ऋषिपत्नीभ्यः रुचिरवस्त्रालंकारादि दानमपि ममानन्दकरे स्यात्। उग्रतपस्विभ्यः किंचिद्धनरत्नदानपूर्वकं तेषां चरणसेवामपि कामये। काकुत्स्थ! फलमूलभोजिनां मुनीनां तपोवने एकरात्रमपि निवसेयमिति महतीहा।' तदाकर्ण्य रामः अतिप्रसन्नः सन् अब्रवीत्—'सीते! महता प्रीत्या पूरयिष्यामि तवाखिलकामनाः। वैदेहि! आश्वस्ता भवेः। श्वः एव लक्ष्मणस्त्वां तपोवने नेष्यति। त्वया ऋषिपत्न्यर्थं ऋषीणां च कृते अमितधनरत्नादिकं पर्याप्तमलङ्कारजातं च नेतव्यम्।' काकुत्स्थो रामः जनकनन्दिनीमित्थमाश्वास्य लक्ष्मणं च सीतायाः वनगमनेच्छया परिचितं विधाय तदर्थं योग्यव्यवस्था करणायादिदेश।....

## सीतायाः तपोवनदर्शनयात्रा

अन्येद्युः प्रभाते लक्ष्मणः सुमन्त्रमब्रवीत्—'सारथे! रामाज्ञानुसारं रथं द्रुतगामि तुरगान्योजयित्वा राजभवनात् सीतादेव्याः पवित्रमासनमानीय रथे स्थापनीयम्। अहं महाराजाज्ञानुसारं सीतां पुण्यकर्ममहर्षीणामाश्रमं नेष्यामि।' अनन्तरं अन्तः पुरं गत्वा लक्ष्मणेन तपोवनदर्शनार्थगमनविषये कथितमात्रे सीता सानन्दं प्रस्तुताऽभूत्। बहुमूल्यवसनरत्नानि च गमनसमये स्वसमीपं स्थापयित्वोक्तवती—'अहमेतान्याभरणवस्त्राणि धनं च मुनिपत्नीभ्यः प्रतिपादयिष्यामि।' सौमित्रिर्लक्ष्मणः 'तथास्तु' इत्युक्त्वा सीतां रथे समुपावेशयत्; सवेगाश्व योजितो रथश्च यात्रार्थं विनिर्गतः।....

## सीता वाल्मीकेराश्रमश्च

लक्ष्मणः गोमतीतीरस्थिते ऋषीणामाश्रमे सीतया सह रात्रिं यापयित्वा प्रभाते उत्थाय पुनः सारथिमब्रवीत्—'अहमद्यैव गङ्गाधर इव गङ्गाजलं मस्तके धारयिष्यामि। अतः शीघ्रं रथं संयोजय।

प्रस्तुते रथे लक्ष्मणः सीतामुपावेशयत्। मध्याह्ने रथः गङ्गातीरे उपस्थितः ततः सर्वेऽपि रथादवतीर्य गङ्गाजलस्पर्शपूर्वकं तत्पूजां कृतवन्तः लक्ष्मणश्च नाविकानाकारयत्। सज्जितां नौकामवलोक्य लक्ष्मणः पवित्रभागीरथीपारं वाल्मीकि आश्रमं गन्तुं सीतया सह तमेव ऋषिसेवितं पवित्रतपोवनमुपस्थितः।

महायशा मुनिश्रेष्ठः द्विजवरो वाल्मीकिः शिष्यपरिवृतः सीतालक्ष्मणाभ्यां स्वागतं व्याजहार। मुनिपत्न्योऽपि सीतामवलोक्य अति प्रमुदिताः। सीतापि सपत्नीक मुनिभ्यो धनरत्नवस्त्रादि वितीर्य ऋषीणां सेवां च विधाय उल्लसितमानसा वाल्मीकेराश्रमे कतिपयदिन-पर्यन्तं वासं विधाय लक्ष्मणेन सहायोध्यां प्रत्यागता।

## दशरथदुर्वासप्रभृतीनामागमनम्

सीतागर्भदोहदान्यवलोक्य रामोऽपि अत्यानन्दितः भावि वंशधर कल्याणार्थं दरिद्रेभ्यो ब्राह्मणेभ्यश्च पुष्कलां धनराशिं वितीर्णवान्। देवमन्दिरेषु पूजानुष्ठानाद्यायोजनमजायत। अयोध्यायामानन्दोत्सवोऽभूत्। वसिष्ठादि ऋषिगणा रामाय आशिषो ददुः।

राजा दशरथः विज्ञातसीतागर्भलक्षणः दुर्वासः प्रभृति मुनिगणैः सह रामं द्रष्टुमागतः। रामेण सकलाः पाद्यार्घ्यादिभिः पूजिताः सन्तः सुखोपविष्टाः। दशरथः राममङ्कमारोप्य तन्मस्तकं चावघ्राय महात्मानं दुर्वाससमपृच्छत्। भगवन्! अस्मद्देशः केनपरिमाणेन वर्धिष्णुर्भवेत्? रामस्यायुः अन्यपुत्राणां च कियदायुः प्रमाणम्? ये रामस्य पुत्राः तेषामपि आयुषः किं मानम्? भगवन्! अन्ते अस्मद्वंशस्य का गतिः स्यात् तदपि उच्यताम्।' दशरथवचनं निशम्य महातेजा दुर्वासाः अब्रवीत्—'हे महाभाग! पुरावृत्तं श्रूयताम्।'

इत्युक्त्वा दुर्वासा भृगु-उपाख्यानं, महर्षिभृगोः शापेन महातेजसोविष्णोः इहलोके दशरथ पुत्ररूपेण जन्म इत्यादिकं वर्णयित्वा भविष्यवाणीमकरोत्—'अतिदुर्जयो रामः दीर्घ कालपर्यन्तं समृद्ध राज्यमुपभुज्य अश्वमेधादियज्ञानुष्ठानपूर्वकं ब्रह्मलोकं प्रयास्यति। रामः अनेक राजवंशान्स्थापयिष्यति सीतागर्भे रामस्य पुत्रद्वयमुत्पत्स्यते।' अति तेजस्वी दुर्वासा राजवंशस्य भूतं भविष्यन्तं च वृत्तान्तं च वर्णयित्वा तूष्णीमासीत....ततः सर्वेऽपि रामाय आशिषो दत्वा स्वस्थानमयुः।

## कुशलवयोः जन्म

यथासमयं सीतादेवी सन्तानयुगुलं प्रसूनवती। अयोध्या आनन्दोत्सवे मग्नाऽभूत्। कुलगुरुः देवपुत्रद्वयमिव नवोदितचन्द्र-तुल्यमिव महातेजस्विनं कुमारयुगुलमवलोक्य अतिप्रमुदितः सन् आशीर्वादेन संयोज्य अशुभग्रहपरिहारेण तद्रक्षणोपायं कृतवान्। कतिपय कुशानादाय ते चेन्मध्ये छित्वा तदग्रभागः कुशमुष्टिः अधो-भागश्च लव इत्युच्यते। इदमेव कुशमुष्टिं लवं च गृहीत्वा महर्षिर्वसिष्ठः भूतादिभ्यः नवजातशिशुयुगुलस्य रक्षार्थं वृद्धस्त्रियोर्हस्ते समर्प्य उक्तवान्—'एतयोर्मध्ये यः शिशुः प्रथमजातः तं मन्त्रपूतेनानेन कुशेन मार्जनं कर्तव्यम्। तस्य च नाम 'कुश इति भवेत्, यः शिशुः

कनिष्ठः तं एकाग्रतया लवेन मार्जनं कर्तव्यम्। तस्य च नाम 'लव' इति भवेत्। देवरक्षितस्यास्य बालकद्वयस्य नाम्नी 'कुशः' 'लवश्च' भविष्यतः। अनन्तरं पवित्राचरणे वृद्धे मुनेर्हस्तात् कुशं लवं च गृहीत्वा कुमारद्वयस्य रक्षाविधानं कृतवत्यौ, शिशुद्वयस्य कल्याणार्थं देवमन्दिरेषु विशिष्टपूजार्चनाद्यायोजनमक्रियत। रामचन्द्रः धन भाण्डागारमुन्मुच्य ब्राह्मणदरिद्रेभ्यः धनरत्नादिबहुमूल्यवस्त्राभरणानि शतशः पयःस्विनीः अनेक ग्रामांश्च अददात्।...

दिने दिने शिशुद्वयं शशिकले इवावर्धत। रामचन्द्रस्य आनन्दः मर्यादातीतः समजनि। तस्यैव प्रतिच्छवि सदृशं बालकद्वयं तेन विचित्रालङ्कारैरभूष्यत। अश्विनीकुमारद्वयमिव एतच्छोभनकुमार युगुलं क्रमशः उपनीतं वेदवेदाङ्गाध्ययनतत्परमभूत्। सर्वविद्या-विशारदः मुनिर्वाल्मीकिः तयोः शिक्षाभारमुवाह। स तौ निजाश्रममानीय अखिलशास्त्राणि धनुर्वेदं च शिक्षितवान्। क्रमशश्च स्वरचितं समग्रं रामायणमहाकाव्यं तयोः कण्ठस्थं कारयामास। तावपि तन्त्रीवाद्येनताललयसहितं मधुररामायणगानमकुरुताम्।

## रामस्य राजसूययज्ञानुष्ठानेच्छा

एकदा रामचन्द्रः निजराज्यस्य विभिन्नस्थानानि ऋषिमुनीनां तपोवनानि च परिभ्रमन् अयोध्यां प्रत्यागतः द्वारपालमब्रवीत्—

'दौवारिक! शीघ्रं महाबाहुं भरतं लक्ष्मणं च ममागमनवार्तां श्रावयित्वा त्वरितं उभावपि मत्समीपमुपनय।' आगतौ भरतलक्ष्मणौ समालिङ्ग्य रामचन्द्रोऽब्रवीत्—'भ्रातरौ! मया स्वप्रतिज्ञानुसारं सकलमपि हितकरं कार्यजातमकारि। इदानीं किमपि सकलपाप-विनाशनं अक्षयमव्ययं च धर्मकार्यं कर्तुमभिलषामि। युवामुभौ ममात्मधर्महेतुस्वरूपौ। अतो येन चिरन्तनधर्म लाभः स्यात् तादृशं सर्वोत्तमराजसूययज्ञं युवाभ्यां सह विधातुमिच्छामि। राजसूययज्ञ-महिमानं युवां जानीथः। अतः भवन्तौ स्थिरीभूय विचारयतम्। इदं च कार्यं वर्तमाने भविष्यति च येन शुभं स्यात् एतादृशः परामर्शो दातव्यः।'

रामचन्द्रवचनं निशम्य भरतः बद्धाञ्जलिरुवाच—'अमित-विक्रम! महाबाहो! परमो धर्मः यशः सर्वा पृथिवी च त्वय्येव प्रतिष्ठिता। देवाः यथा प्रजापतिसाक्षात्कारपरा भवन्ति, तथैव अस्मत्सदृशाः, राजानः अपि भवन्तं महात्मानं लोकपतिं च मन्यन्ते। हे महाराज! पुत्राः यथा पितरं सम्मानयन्ति तथैव सकला राजन्याः अपि त्वां सम्मानयन्ति। महाराज! भवान् न केवलं सर्व प्राणिनां अपितु सकल पृथिव्याः गति स्वरूपः सन् केन हेतुना एतादृश यज्ञं कर्तुमिच्छसि? राजन्! भवता राजसूययज्ञे समारब्धे पृथिव्यां प्रबलपराक्रमशालिनो वीराः क्रोधेन विजयाभिलाषुका भवेयुः।

अतस्तेषां क्षयोऽप्यनिवार्यः । हे विपुल पराक्रम! अस्याः ससागरायाः वसुन्धराया विनाशः भवतः कृते नोचितः ।' भरतस्य युक्तिगर्भं वचनं निशम्य सत्यपराक्रमो रामः अतिप्रमुदितः सन् अब्रवीत्—'पुण्यात्मन् पुरुषव्याघ्र! अथ तवेदं धर्मसंगतं पृथिवीरक्षणपरं वचनमाकर्ण्य अहमतीव प्रसन्नः । धर्मज्ञ! अहं तव सदुपदेशानुसारं अस्मादभिप्रेतात्सर्वोत्तमराजसूययज्ञात् निवृत्तोऽस्मि । यतः यल्लोके व्रीडाकरं क्षतिकरं च तादृशकार्यं विचक्षणस्य नोचितम् । महाबल, लक्ष्मणाग्रज 'बालादपि सुभाषितं ग्राह्यम् ।' एतदर्थमेव मया तव युक्तिसंगतं वचनं समादृतम् ।'

## लक्ष्मणस्य अश्वमेधयज्ञ प्रशंसा

रामलक्ष्मणयोः एतादृशवार्तालापानन्तरं लक्ष्मणः रामचन्द्र-मुक्तवान्, 'राघव! अश्वमेधमहायज्ञः निखिलपापनाशकः, अतः निष्पापेनापि भवता तस्यैव यज्ञस्यानुष्ठाने प्रवृत्तेन भवितव्यम् । देवराज इन्द्रः ब्रह्महत्यां कृत्वा यथा अश्वमेधयज्ञानुष्ठानेन तस्याः (ब्रह्महत्यायाः) मुक्तः तथा भवतापि लङ्काध्वंसात् लङ्कायां च अनेकब्रह्मराक्षसानां नाशाच्च जातं पापं पुनः अश्वमेधयज्ञानुष्ठानेन क्षालितव्यम् ।

लक्ष्मणवचनेन प्रीतः काकुत्स्थः रामः पुनरेकवारं अश्वमेध-यज्ञानुष्ठाने स्थिरसंकल्पो जातः, वसिष्ठवामदेवजाबालिप्रभृतीन्

अश्वमेधयज्ञानुष्ठानपारदर्शिनः ब्राह्मणान् प्रति स्वाभिलाषं निवेदयामास नैमिषक्षेत्रे गोमतीतीरे पुनः विशाला यज्ञशाला निरमीयत, ऋषिमुनयः निपुणा ब्राह्मणाश्च निमन्त्रिताः; यथासमयं मुक्तो यज्ञीयोऽश्वः।...

## सीता समीपं देवानामागमनम्

श्रीरामः राजर्षिरूपेण एकपत्नी व्रतं स्वीकृत्य नित्यं सीतानुरागी स्थितः। इत्थं तेन सर्वेभ्यः गृहस्थाचारशिक्षा प्रदत्ता। पतिभावज्ञा साध्वी सीतादेवी प्रेमविनयेन्द्रियजयलज्जाभयैः स्वामि मनोरञ्जनपराऽऽसीत्। एकस्मिन्दिने कमलदललोचना स्वर्णाभरणभूषिता सीता प्रमोदवने सुखासीना श्रीरामचन्द्रसेवापरायणा सती व्याजहार—'हे जगन्नाथ! हे देव! भवान् येन शीघ्रं वैकुण्ठं गच्छेत् तादृशं प्रतिबन्धं विधापयितुं देवाः मत्समीपमेकान्ते आगम्य उक्तवन्तः—श्रीरामः अस्माकं स्वकीयं च सनातनं धाम वैकुण्ठं परित्यज्य भूतलमवतीर्णः। कमललोचनो रामः त्वया सार्धमवस्थातुमेव पृथिवीतलमागतः। अतः त्वया प्रथमं वैकुण्ठमागन्तव्यम्। त्वयि प्रस्थितायां रामोऽपि त्वामनुसरिष्यति। वयं च नाथवन्तः भवेम। रामविहीनायां वैकुण्ठपुर्यां नानुभवाम आनन्दम्'। देवा मामीदृशमब्रुवन्। इदानीं यदेव मङ्गलं प्रतिभाति तदेव करोतु भवान्। मया केवलं देवानामुत्कण्ठा निवेदिता।'

सीतावचनमाकर्ण्य रामः क्षणकालं विचिन्त्याब्रवीत्—'देवि! जानाम्येतदखिलम्। अस्मिन्विषये कीदृशी व्यवस्था करिष्यते तदपि श्रूयताम्—लोकापवादार्थं क्रियमाणयज्ञस्थले लोकप्रत्ययार्थं सादरं शपथग्रहणं कुर्वन्त्या त्वया रसातलं प्रविश्य वैकुण्ठं गन्तव्यम्। अनन्तरमहमपि यथासम्भवमागमिष्यामि' इदमेव स्थिरीकृतम्। तदाकर्ण्य सीतातूष्णीमासीत्।....

## यज्ञस्थले कुशलवयोः रामायणगानम्

महर्षि वाल्मीकिः विशेषातिथिरूपेण सशिष्यः निमन्त्रितः सन् अस्मिन्नश्वमेधयज्ञे उपस्थित आसीत्। स स्वबालकशिष्यौ कुशलवौ उक्तवान्—'वत्सौ युवाभ्यां यज्ञस्थले प्रतिदिनं रामायणगानं कर्तव्यम्। युवयोः पिता रामचन्द्रः यदि 'रामायणगानं भवद्भ्यां कुतः शिक्षितम्' 'केन चेदं महाकाव्यं रचितमिति पृच्छेत् तर्हि वक्तव्यम्—आवयोः गुरुणैवेदं रामायणं रचितम्। तेनैव च तद्गानमपि शिक्षितम्। उभाभ्यामपि युवाभ्यां मधुरवीणावाद्येन स्वरतालमानमूर्छनाभिः सार्कं काव्यस्य आदितः प्रभृति गानं विधेयम्।'

निशायां प्रभातायां कुशलवौ स्नानं नित्यहोमादिकं च समाप्य वाल्मीकि-उपदेशानुसारं वीणया सह मधुरं रामायणगानेन ऋषिमुनीन्

सभासदः रामचन्द्रं च मोहितवन्तौ । सर्वेऽपि रामायणकाव्यं अत्यधिकं प्रशशंसुः । क्रमशः कुशलवौ प्रथमसर्गादारभ्य विंशतिसर्गपर्यन्तं रामायणगानमकार्ष्टाम् । तच्छ्रुत्वा रामः कुशलवौ अङ्के स्थापयित्वा मस्तके चावघ्राय अन्वयुंक्त—'केन रचितमिदं काव्यम्? कश्चयुवामेतद्गानमशिक्षयत्? कुशलवौ प्रत्यूचतुः—'आवयोर्गुरुः भगवान् वाल्मीकिः अस्य रचयिता एतस्मिन् श्लोकानां विंशतिसहस्राणि, शतमुपाख्यानानि षट् काण्डानि पञ्चशतानि च सर्गाः* । भवज्जीवनस्य सर्वाः घटनाः एतस्मिन् वर्णिताः ।'

---

* वाल्मीकिरामायायणस्येतिहासे ज्ञायते— वाल्मीकिना ब्रह्मणः आशिषं प्राप्य षट् काण्डानि, पञ्चशतसर्गाः, विंशति सहस्रश्लोकाश्च रचिताः । किन्तु वर्तमान वाल्मीकि रामायणे सप्तकाण्डानि तत्र ६६० सर्गेषु सम्पूर्णम् । प्रथमकाण्डषट्कस्य सर्गसंख्या ५३६ । एतेन ज्ञायते प्रथमकाण्डषट्कस्य एते ३६ सर्गाः प्रक्षिप्ताः ।

अत एव सप्तमकाण्डं तत्रत्य १२४ सर्गाश्च प्रक्षिप्ताः अत्र नास्ति कोपि संदेहः । आदितः षट्काण्डपर्यन्तं श्लोकसंख्या २००६५ सप्तकाण्डात्मक वाल्मीकि रामायणस्य श्लोकसंख्या २४०५२ ।

यज्ञे निमन्त्रितैर्मुनिभिः ब्राह्मणैः अतिथिभिश्च सह रामः सभासदश्च कतिपयदिनपर्यन्तं सानन्दं रामायणगानमशृण्वन् ; रामायण-रचयितारं वाल्मीकिं गायकौ कुशलवौ च सादरं पूजितवन्तौ । अश्वमेध यज्ञानुष्ठानं प्रचलितम् ।

---

| काण्डानि | सर्गाः | श्लोकाः |
|---|---|---|
| आदिकाण्डम् | ७७ | २२९६ |
| अयोध्याकाण्डम् | ११९ | ८३०६ |
| अरण्यकाण्डम् | ७५ | २४४३ |
| किष्किन्धाकाण्डम् | ६७ | २४७९ |
| सुन्दरकाण्डम् | ६८ | २८६० |
| लङ्काकाण्डम | १३० | ५६८१ |
| | —— | —— |
| प्रथमकाण्डषट्कस्य संकलनेन सर्गश्लोक संख्या | ५३६ | २००६५ |
| उत्तरकाण्डम् | १२४ | ३९८७ |
| | —— | —— |
| | ६६० | २४,०५२ |

प्रथमकाण्डस्य ३६ षट्त्रिंशत् सर्गाः कदा कथं कियति काले संयोजिताः के च सर्गाः श्लोका वा प्रक्षिप्ताः इत्यपि ज्ञातुं नास्त्युपायः

## सीतायाः अपवादः रामस्य विक्षोभश्च

एतस्मिन्नवसरे एकस्मिन्दिवसे कश्चिद्गुप्तचरः ज्ञात—सीतापवादः रहसि रामचन्द्रं बद्धाञ्जलिरुवाच, 'राजन्! रावणगृहे

---

सप्तमकाण्डस्य—उत्तरकाण्डस्य रचना, संयोजनस्य समयो वा निर्णेतुमपि न सुकरम्। विभिन्न भाषासु यानि मुद्रितरामायणानि सन्ति तेषु अधिकतराणि नवमशताद्यनन्तरं रचितानि। तामिल् भाषायाः कम्बरामायणं नवमशताब्द्यां (मतान्तरे एकादश-द्वादश खिस्तशताब्द्यां) रचितम् अस्य रचयिता 'कम्बः' लिखति-'मया केवलं वाल्मीकिरामायणवर्जं 'रामायण त्रयस्य सहायं गृहीतम्। स्वकीयरामायणे तेन उत्तरकाण्डस्य सीतावनवासस्योल्लेखो न विहितः सीतोद्धाररामराज्याभिषेकपर्यन्तं लिखित्वैव तेन ग्रन्थसमाप्तिः कृता। द्विसहस्रवर्षपूर्वं लिखिते बौद्धरामायणे दशरथजातके वा सीतावनवासोल्लेखः न प्राप्यते। तत्समकालीन जैनरामायणेऽपि (जैन पद्मपुराणान्तर्गते) सीता वनवासकथा न विद्यते। व्यासदेवरचित स्कन्दपुराणे, (ब्रह्मखण्डे) यद्रामचरितमास्ते तस्मिन् अथवा महाभारते मार्कण्डेय कथित 'रामचरित-अंशेऽपि सीतावनवासाख्यानं न विद्यते। एतेन मन्यामहे—वाल्मीकि रचित रामायणस्योत्तरकाण्डम्—यत्र सीतावनवासो वर्णितः तदपि न 'आदिवाल्मीकिरचितम्। अत एव प्रक्षिप्तम्।

दीर्घकालं निवसन्तीमपि सीतां स्त्रीरूपेण स्वीकृतवानसि अस्मिन्विषये जनपदवासिनः अनेकविधं प्रजल्पन्ति। तदाकर्ण्य रामः गुप्तचरं अभयदानपूर्वकमुवाच —'प्रजाः किं किं प्रजल्पन्ति तत्त्वं निर्भयः सन् प्रकाशय।' तदानीं विजय भद्राद्योऽयं गुप्तचरः बद्धाञ्जलिः रामचन्द्रमब्रवीत्,—'राजन्, पुरवासिनः नानाप्रकारैः अपभाषन्ते। ते वदन्ति,—'रावणः यां सीतामस्प्राक्षीत् तामेव राजा पुनरपि निजपुरीमानीतवान्। रावणेन सीता अपहरण पूर्वकं लङ्कानीता तथापि रामः तां पुनरपि किमर्थं पत्नीरूपेण स्वीचकार?....रावण धर्षितां सहधर्मिणीं स्वीकृत्य राजा कथं धर्माचरणपरो भवेत्? यदेव राजा विदधाति प्रजा अपि तदनुकरणं कुर्वन्ति। स्त्रीणामेते दोषा अस्माभिरपि सह्या भवेयुः' राजन्! प्रजा जना एतादृशपरीवादपराः सन्ति। रामचन्द्रः तन्निशम्य नतमस्तकः सन् चरं गन्तुमन्वमन्यत *

---

*कस्यापि रामायणस्य पुराणादेश्चानुसारं केवलं भरतस्य गुप्तचरः विजयभद्र एव सीताया एतादृशमपवादं प्रचारयामास, विशेषतः अश्वमेध यज्ञे आरब्धे सति। अस्मिन्नेव समये' सीता उपवासपरा व्रतचारिणी आसीत्।....पुनः कस्यापि पुराणस्य मतेन कोऽपि भद्राख्यश्चरः गुप्तरूपेण रजकं रजकीं च रात्रौ कलहायमानौ श्रुत्वा एतादृशमपवादं रामचन्द्रं श्रावयामास। विजयभद्रः भद्रश्च एका

## रामलक्ष्मण संवादः

गुप्तचरे प्रयाते रघुनन्दनः लक्ष्मणमाहूय चरेण कथितं सर्वमपि तं श्रावयित्वाऽगादीत्,—'प्रजारञ्जनमेव राज्ञः श्रेष्ठो धर्मः। प्रजानां मनसि सन्देहश्चेत्तर्हि सीतां सहधर्मिणीरूपेण स्वीकर्तुं न शक्नोमि। अस्मत्कृते अश्वमेधयज्ञानुष्ठानमसम्भवम्। त्वया सीतासमीपं गत्वा तस्यै सर्वमेतन्निवेद्य च वक्तव्यम्—'त्वं यज्ञसभायां एतादृश परीक्षा प्रदर्शनं विधेहि येन तस्यां सर्वेऽपि शुद्धा इति विश्वसेयुः।'

लक्ष्मणस्य मुखात् इदं निशम्य सीता अधोमुखी कञ्चित्कालं तूष्णीं स्थित्वा स्तम्भितकण्ठं जगाद—'पतिरेव स्त्रीणां परमदैवतम्। यदा पतिरिच्छति तदैवाहं श्वः यज्ञभूमौ सर्वेषां पुरतः परीक्षार्थमुपस्थास्यामि स्वकीयपुत्रद्वयमपि आनेष्यामि। इत्युक्त्वा जानकी क्रन्दनपराऽभूत्।....

## सीतायाः परीक्षा पातालप्रवेशश्च

परेद्युः प्रातः यज्ञशालामागत्य रामः वसिष्ठवामदेवजाबालि काश्यपविश्वामित्रदुर्वासः पुलस्त्यमार्कण्डेयभरद्वाजनारदगौतम प्रभृति

---

एव व्यक्तिः भिन्ना वा इति निर्णेतुं दुष्करम्। एतादृशकिंवदन्ती सम्बन्धे सविस्तरं वर्णनं कुत्रापि न समर्थ्यते।

ऋषीन् आहूय सीताभिप्रायं निवेदयामास । नानादेशेभ्यः समागता सहस्रशो ब्राह्मणक्षत्रियवैश्यशूद्रा नगरजनपदवासिनश्च सीतायाः परीक्षाप्रदर्शनसंकल्पमाकर्ण्य कुतूहलाक्रान्ताः प्रतीक्षापरास्तस्थुः । समागताः जना निश्चलाः सन्तः प्रतीक्षन्ते इति निशम्य क्लिन्ना कौशेयवसना करुणामयी सीता अधोवदना सकुशलवा कृताञ्जलिः बाष्पाकुलेक्षणा रामं ध्यायन्ती यज्ञसभायामुपस्थिता कुलगुरुं वसिष्ठं रामचन्द्रं च प्रणम्य नतमुखी स्थिता ।

यज्ञस्थले सीतामवलोक्य रामः कृताञ्जलिः गुरुं वसिष्ठदेवं संबोध्य जगाद,—'देव ! पूर्वं लङ्कायां देवानां समीपे वैदेही शपथं कृतवती, तेनैव इमां गृहमानीतवानहम् । कुशलवौ ममैव पुत्रावित्यहं जाने । तथापि प्रजानां संतोषार्थं वैदेही सर्वेषां समक्षं परीक्षार्थमुपस्थिता । सकला अपि विश्वस्युः यत् सीता शुद्धस्वभावा, तथापि सर्वेषां संमत्या अहं तां प्रीत्या स्वीकर्तुमभिलषामि । जगत्समक्षं शुद्धस्वभावां धर्मचारिणीं मैथिलीं प्रति अस्मत्प्रीतिर्वर्धताम् ।'

## सीतायाः दिव्यलोकगमनम्

तदानीं दिव्यगन्धः मनोहरः पवित्रश्च वायुः ववौ । सर्वेऽपि सप्रमोदमन्वभूवन् यत् ब्रह्मादिदेवगणा यज्ञस्थले समुपस्थिताः । 'सकलाः समागता' इति समीक्ष्य काषायवसनधारिणी सीता

कृताञ्जलिः अधोवदना च जगाद—'यदि अहं राघववर्जं कमप्यन्यं चिन्तयामि तर्हि हे माधवि देवि! विदीर्णा सती मां तवांके आश्रयं देहि। हे वसुन्धरे! मनोवाक्कायैश्चेदहं पत्युरर्चनपराऽभूवम् तर्हि दीयतां तव गर्भे मह्यमाश्रयम्। 'रामं विना न कमप्यन्यं जानामि' इति मद्वचनं सत्यं चेत्तर्हि हे पृथिवि! त्वं विदीर्णा सती स्वामय क्रोडे आश्रयं देहि।

वैदेही सीताया इत्थ शपथसमये भूतलगर्भात् अद्भुतमेक अनुत्तमं दिव्य सिंहासनमुत्थितम्। दिव्यरत्नभूषिता अमित विक्रमा नागा इदं सिंहासनं स्वमस्तके अधारयन्। धरणीदेवी सस्नेहं मैथिलीं बाहुयुगुलेन समालिङ्ग्य स्वागतवचनैरभिनन्दन्ती तस्मिन्नेव सिंहासने उपावेशयत्।

सीतायां सिंहासनोपविष्टायां धरणीतले च प्रविशन्त्यां आकाशात् पुष्पवृष्टिः पपात। देवानां साधुवादध्वनि रुत्थितः 'अतितरां धन्या वैदेही! यस्याश्चरित्रबलमेतादृशं महत्! साश्चर्यं सीतामदर्शनपरामवलोक्य यज्ञसभासदः सर्वेऽपि परमविस्मयान्विताः बभूवुः।

## रामस्य शोकः

अकस्मात् सीतायां अदर्शनं प्राप्तायां रामः नतमस्तकः दीनमनसा दण्डकाष्ठमवलम्ब्य शोकेन अधीरः चिरमरोदीत्। वसिष्ठादयः

आगत्य तं सान्त्वयन्तो जगदुः। हे सुव्रत! शोकाकुलो माभूः। त्वं विष्णोरवतारोऽसि इति स्मरेः। निर्मलस्वभावा साध्वी सीता त्वयि एकान्तमनुरक्ता आसीत्। स्वतपोबलेनेदानीं अमरधाम प्राप्ता। राम! इदानीं कनकमयीं प्रतिमां स्थापयित्वा यज्ञसमाप्तिः कार्या। स्वर्गे त्वया सह सीतायाः पुनर्मिलनं भवेत् इत्यत्र नास्ति संदेहः।....

## अश्वमेधयज्ञसमाप्तिः

यज्ञः समाप्तिमगात्। रामः सीताशोकेन पीडितः सन् जगच्छून्यमत्रालोकयत्। कस्मादपि नालभत शान्तिम्। समागत ब्राह्मणानभ्यागतांश्च प्रभूतधनदानेन संतोष्य तान्गन्तुमनुजज्ञौ; सीता-चिन्तापरश्च लवकुशाभ्यां भातृभ्यां च सह अयोध्यां प्रत्यावर्तत। ततः प्रभृति च सर्वभोगनिःस्पृहः आत्मचिन्तनपरश्च भूत्वा एकान्तेऽतिष्ठत्। राजकार्येषु प्रजापालने च निरीहः सन् वाजपेयाग्निष्टोमातिरामगोमेध प्रभृति यज्ञानुष्ठानेषु अधिकतरं प्रसितोऽभूत्। पुण्यबलेन तस्य शासनकाले पर्जन्यदेवः नियतसमये वृष्टिपरोऽभूत्। राज्यं प्रभूतान्न-सम्पन्नमासीत्; नगरजनपदाश्च जनसमाकीर्णा आसन्; प्रजाश्च सुस्था अकालमृत्युमुक्ताः सन्तः सुखेन कालयापनपरा बभूवुः।

## कौसल्यानिर्वेदः रामस्य चोपदेशः

एकस्मिन्दिने एकान्ते ध्यानपरायणं रामं प्रियवादिनी माता कौसल्या समीपमागत्य सस्नेहमुक्तवती—'राम! त्वमेव जगतः

आदिकारणम्, परमात्मा, परमानन्दमयः पुरुषः पूर्णः ईश्वरश्च। मम अनेकजन्मपुण्यबलेन त्वामहं स्वगर्भे धृतवती। हे रघूत्तम! ममेयमन्तिमावस्था। तवापि अवतारलीलासमाप्तिसमयः आगतप्रायः किन्तु ममाज्ञानोत्थं भवबन्धनं नाद्यापि शिथिलीभूतम्। येनाहमेतादृशभवबन्धनच्छेदे समर्था स्याम् तथा मामुपदिशेः।'

जराजर्जरितदेहां सनिर्वेदमित्थं भाषमाणां मातरं मातृवत्सलः धर्मात्मा रामः प्रणम्योक्तवान्—'मातः मुक्तिलाभोपायभूतत्रिविध मार्गमुपदिशामि त्वाम्—तद्यथा—कर्मयोगः, ज्ञानयोगः, चिरस्थायी भक्तियोगश्च। गुणभेदाद्भक्तिरपि त्रिविधा-तामसी राजसी सात्विकी च केवलं सात्त्विक भक्तिमार्गेणैव मनुष्यः परमपुरुषं प्राप्नुयात्। यः पापनिवारणार्थं कर्मपरः अथवा कृतकर्माणि भगवतेऽर्पयति आहोस्वित फलाकांक्षशून्यः केवलं कर्तव्यबुद्ध्या कर्मतत्परो भवेत स एव सात्विको भक्तः।....हे जननि! एतस्यैव भक्तिमार्गस्य एकान्तयोगबलेन भक्तः ईश्वरस्वरूपतां लभते। निष्कामकर्म, स्वधर्मपालनं हिंसा परित्यागः भगवतः स्मरणवन्दने, स्तवः, पूजा सर्वभूतेषु ईश्वरभावना असाधुसंगत्यागः असत्यवर्जनं दुःखितान्प्रति दयाप्रकाशः समानशीलेन सममित्रता, यमनियमादिसेवा, वेदान्तवाक्यश्रवणम्, भगवन्नामकीर्तनम्, सत्सङ्गः, अहंभाव परित्यागः, ईश्वरपूजादि धर्मेषु एकान्तानुरागः—एतादृश प्रशस्तकर्मयोगेन शुद्धान्तः करणो मानवः

याथार्थ्येन ईश्वरप्राप्तियोग्यो भवति ।....पुनः तदेव शुद्धचैतन्यं जीव-जगद्रूपेण प्रतिभाति । अतः कदापि ईश्वरजीवयोः भेदज्ञानं न विधेयम् । मातः! मया भक्ति-ज्ञानयोगयोर्विषये उक्तम् । मानवः एतयोर्द्वयोर्मध्ये यं कमपि मार्गमवलम्ब्य शान्तिलाभसमर्थः स्यात् ।' कौसल्या रामवचनमाकर्ण्य प्रमुदिता अभूत् । पुत्रमालिङ्ग्य च तेन गन्तुमनुमोदिता ।

## रामस्य समीपं कालस्यागमनम्

किञ्चित्समयानन्तरं एकस्मिन्दिने ऋषिवेशधारी कालः राज-द्वारमागत्य द्वारपालं जगाद,—'हे धीमन्! अहं 'अतिबलमहर्षेर्दूतः प्रयोजनविशेषेण रामदर्शनाकाङ्क्षी ।' ज्ञातमुनिवृत्तान्तो रामः लक्ष्मणमब्रवीत्—'लक्ष्मण! मुनिवरः ससम्मानं शीघ्रमानीयताम् ।'

लक्ष्मणेन स्वसमीपं प्रापितं मुनिवरं रामः समभ्यर्च्य स्वर्णमय-सिंहासने तमुपवेश्य च जगाद,—'महामते! येन त्वं प्रेषित-स्तस्यादेशं श्रावय ।'

तापसरूपी कालः प्रत्यवदत्—'एतदहमेकान्ते वक्तुमिच्छामि ; न कोऽप्यन्यस्तज्ज्ञातुमर्हति । यदि अन्यः कोऽपि अस्मद्वचनं शृणोति भाषमाणं मां पश्यति वा तर्हि स भवता वध्यः स्यात् । एतत्स्वीक्रियते चेन्मया तद्वक्तव्यं भवेत् ।' रामः सम्मतः सन् लक्ष्मणमब्रवीत्—

त्वया द्वारपालमपसार्य स्वयं द्वाररक्षा विधेया ।' यदि कोऽपि आवां पश्यति, अस्मदालापं शृणोति वा स मया वध्यः स्यात् ।

एतदाकर्ण्य लक्ष्मणः द्वाररक्षार्थं प्रयातः, रामश्च अतिबलदूतमुवाच,—'इदानीमुच्यतां भवता वक्तव्यम् ।' दूतः दत्तात्मपरिचयः अभाषत—'अहं सर्वसंहारकः कालः भवतः एव संकल्पजः पुत्रः । पितामहो ब्रह्मा विशेषवार्ताज्ञापनार्थं मां त्वत्समीपं प्रेषितवान् । पितामहोऽब्रवीत्—'यत् भवता लोकरक्षाव्रतमङ्गीकृत्य मानवदेहधारणं कृतं तत्कार्यमिदानीं पूर्णतां यातम् । इदानीं भवतः स्वधामगमनसमयः उपस्थितः । अतः अहं 'कालः' तापसरूपेण भवत्सकाशमागतः । अतः परमपि यदि भवान् जगति प्रजापालनमिच्छसि चेत्तदपि भवता कर्तव्यम् । पुनः हे अनघ ! यदि भवान्सुरलोकपालनमिच्छति तर्हि भवता प्रस्थातव्यम् । देवाननाथान् विधाय भवानतः परं मर्त्यलोके मा तिष्ठतु'—इदमेव संदिश्य ब्रह्मा मां प्रेषितवान् ।'

एतदाकर्ण्य रामः हसन्नब्रवीत्—'देवदेवस्य वाक्येनाहमतीव प्रसन्नः । सार्थकं भवतु भवतां शुभागमनम् । यस्मात्स्थानादागतोऽहं तत्र शीघ्रमेव प्रत्यागमिष्यामि । स्वस्ति भवेत् ।

कालेन सह रामे इत्थं वार्तालापपरे अत्रिपुत्रः दुर्वासाः तत्क्षणमेव रामदर्शनाभिलाषी राजद्वारमागत्य लक्ष्मणमब्रवीत्—

'प्रयोजनविशेषवशात् इदानीमेव रामं द्रष्टुमभिलाषामि ।' लक्ष्मणः तदाकर्ण्य सविनयमुक्तवान्—'भवतः किं कार्यं कृपया उच्यताम् तदहं संपादयिष्यामि; रामः इदानीं विशेषकार्यव्यापृत आस्ते । क्षणकालं प्रतीक्षा कर्तव्या ।'

तेन दुर्वासा अतिक्रुद्धः सन् उवाच,—'सौमित्रे! इदानीमेव त्वं रामं निवेदय, अन्यथाहं क्रोध संहरणासमर्थः इदं राज्यं एतन्नगरं, यूयं चत्वारो भ्रातरः, युष्माकं पुत्राश्च एतेषां सर्वेषामप्युपरि ममाभिशापो भवेत ।'

इदमाकर्ण्य लक्ष्मणः अचिन्तयत्—'सर्वविनाशस्थाने केवलं ममैव मृत्युः स्यात् ।' इति विचिन्त्य लक्ष्मणस्तत्क्षणमेव रामाय दुर्वासः प्रवृत्तिं दत्तवान् । रामः कालमनुज्ञाय बहिरागत्य अत्रिपुत्रमभिवाद्य उक्तवान्—'मया किं करणीयमित्यादिश्यताम् ।' दुर्वासा उक्तवान्—'मम सहस्रवर्षावधिकं अनशनव्रतमद्य समाप्तम् । इदानीं तव गृहे पक्वान्नभोजनमभिलषामि ।' रामेण तत्क्षणमेव अन्नमानीय दत्तम् । दुर्वासाः सानन्दं कृतभोजनः राममाशीर्वचसा संयोज्य प्रयातः । तदानीं रामः स्मृतकालवचनः लक्ष्मणः हन्तव्य इति विचार्य दुःखकातरः विमनाः विह्वलः दीनमानसश्च अधोमुखो मौनमतिष्ठत् ।

रामस्येमामवस्थामवलोक्य लक्ष्मणोऽब्रवीत्—'हे रघुनन्दन! मदर्थं दुःखितो माभूः । पूर्वत एव ज्ञातमास्ते यत् 'कालस्य

गतिरीदृशी'। यदि भवान् प्रतिज्ञापालनपरो न स्यात् तर्हि मम नरकः ध्रुवम्! हे प्राज्ञ! मयि भवान् स्निह्यति चेत् तर्हि निःसन्देहं मम वधः कार्यः। भवान् धर्मच्युतः न स्यात् न वा सत्यच्युतः।'

सौमित्रिवचनं निशम्य रामः चलितमानसः वसिष्ठं मन्त्रिणश्चाहूय तेभ्यः दुर्वाससः आगमनं, कालस्य वार्ता, स्वकीयां प्रतिज्ञां च निवेदितवान्। पुरोहितः मन्त्रिणश्च रामवचनं निशम्य सविनयमब्रुवन्—'हे भूभारहारिन्! लक्ष्मणेन सह तव वियोगस्तु पूर्वत एव निर्धारित आस्ते। शीघ्रं लक्ष्मणं परित्यजेः। प्रतिज्ञापालनमेव श्रेष्ठः धर्मः; लक्ष्मणत्यागेन शीघ्रं स्वधर्मपालनं क्रियताम्।

रामोऽवादीत्—'सौमित्रे! त्वामहं परित्यजामि। यत् धर्माविरुद्धं भवेत् एतादृशं किमपि स्थानं गन्तव्यम। प्रियजनकृतस्त्यागः मृत्युश्च सज्जनानां कृते द्वावपि समानौ।'

तन्निशम्य लक्ष्मणस्तत्क्षणमेव वाष्पपूरितलोचनः रामचन्द्रं प्रणम्य निजावासं प्रयातः। ततश्च सरयूतीरं गत्वा आचम्य सर्वेन्द्रियाणि नियम्य निःश्वासमवरुध्य च प्राणं मस्तके स्थापितवान् तथा स्वकीयं तदेवाव्ययपदं—परमधाम वासुदेव नामकं अक्षरं परमं ब्रह्म मनसि चिन्तयामास। एतस्मिन्समये इन्द्रः तं अदृश्यरूपेण सशरीरमेव स्वर्गं निनाय। नारायणांशभूतलक्ष्मणदेवः स्वर्गं प्रयातः; देवाश्च सभक्तिकारं प्रार्थयामासुः।...

## लक्ष्मणवर्जनं रामस्य क्रोधश्च

परित्यक्तलक्ष्मणः दुःखितमानसो रामः मन्त्रिणः वणिजः प्रजाः पुरोहितांश्चाहूयोक्तवान्—'महामते! भरतं राज्याभिषिक्तं विधाय अहमद्यैव वनं प्रतिष्ठास्ये *। अभिषेकायोजनं शीघ्रं क्रियताम्। कालातिपातो न जायेत। लक्ष्मणानुगतमार्गेणैवाहमपि यास्यामि।'

रामादिमां दुःखदवार्तां निशम्य प्रजाजनाः भूम्यवनतशिरसः मृतवत्पतिताः भरतोऽपि रामवचनमाकर्ण्य मूर्च्छितोऽभूत। स रामसमीपं राजपदनिन्दापरः उक्तवान्—'सत्यप्रतिज्ञोऽहं ब्रवीमि, 'भवन्तं परित्यज्य स्वर्गीय भोगान् राज्यं च किमपि नाभिलषामि। नाहं भवन्तं विनास्थातुमलम्। कुशः कोसलराज्ये लवश्चोत्तरकोसल राज्येऽभिषिच्येताम। अस्मत्प्रस्थानप्रवृत्तिं शत्रुघ्नं प्रति ज्ञापयितुं द्रुतगामि दूता अधुनैव गच्छन्तु।'

श्रतभरतवचनः वसिष्ठः उक्तवान्—'वत्स राम! अपि श्रुत भरतवचनं त्वया? अवलोकय भूपतितान् प्रजाजनान्। मा कृथा एतेषां किमपि अप्रियम्। सान्त्वय एतान्।

---

* जैनरामायणमतेन लक्ष्मणमृत्योरनन्तरमेव शोकाभिभूतो रामः यतिर्भूत्वा वनं प्रयातः।

वसिष्ठवचनेन रामः प्रजाजनानुत्थाप्य सान्त्वयन्नुवाच,—'उच्यतां मया किं विधातव्यम् ?' प्रजागणाः कृताञ्जलयः एकस्वरेण रघुवररामममब्रुवन्—'हे राम ! यत्रैव भवान् गच्छेत् तत्रैव वयमपि यास्यामः ; तेनैवास्माकं परमाप्रीतिः, स एवास्माकं परमो धर्मः। राम ! भवदनुगमने दृढप्रतिज्ञा वयम्। नगरे तपोवने स्वर्गे वा यत्र कुत्रापि भवान् गच्छेत् स्त्रीपुत्रादिभिः सह तत्रैव वयं भवन्तमनुगच्छेम। भवन्तं विना न वयं जीवितुं समर्थाः।'

पौरजनानां दृढभक्तिमवलोक्य रामोऽब्रवीत्—'तथास्तु' श्रीरामः इत्थं महाप्रस्थानार्थं कृतनिश्चयः कुशलवौ स्वस्वनूतनराज्ययोरभिषिच्य द्वावपि अंके स्थापयित्वा ताभ्यामेकशः रथानां अष्ट सहस्राणि सहस्रं गजान् अश्वानां षष्टिसहस्राणि अमितधनरत्नादिकं च प्रत्यपादयत्। कुशलवौ राममभिवन्द्य दुःखितमानसौ गतवन्तौ।

रामस्य द्रुतगामिनो दूताः मार्गेऽविरामं मथुरामागत्य शत्रुघ्नं प्रति 'कालस्यागमनं', 'राघवस्य प्रतिज्ञां', 'दुर्वाससः कार्यम्', 'लक्ष्मणपरित्यागः' 'रामपुत्रयोरभिषेकः' इत्यादि सर्वाः घटना वर्णयित्वा उक्तवन्तः 'अयोध्यां जनशून्यां विधाय रामः भरतश्च महाप्रस्थानार्थमुद्यतौ।'

शत्रुघ्नः दारुणमासन्नं लोकक्षयं विचिन्त्य स्वपुरोहितं काञ्चनं प्रजागणं चाब्रवीत्, 'भ्रातृभिः सहाहमपि देहत्यागं विधास्यामि।'

तदानीं सुबाहुः शत्रुघाती चेति स्वकीयं पुत्रद्वयं क्रमशः मथुरायाः वैदिशपुर्याश्च राज्यपदयोरभिषिच्य अखिलसेनासम्पत्त्योश्च संविभागं विधाय सत्वरमयोध्यामागतः, अनलतुल्यतेजस्विनं, ऋषिभिः परिवृतं राममभिवन्द्योक्तवान्—'मयापि भवदनुगमनार्थं प्रतिज्ञा कृता।' शत्रुघ्नस्य दृढनिश्चयमवलोक्य रामः सस्नेहमुक्तवान्, 'तथास्तु।' यथासमयं प्रस्तुतो भवेः।

अनन्तरं प्रभाते कमललोचनः विशालवक्षाः रघुकुलतिलकः रामचन्द्रः पुरोहितमार्यवसिष्ठमब्रवीत्—, 'गुरुदेव! ब्राह्मणोद्दं ज्वलन्नग्निहोत्रं वाजपेयछत्रं च मम पुरतः गच्छतु।' तदानीं वसिष्ठः प्रस्थानकाले यावत्करणीयं समापितवान्। कोटिशशधरकमनीयः रामः परिहितक्षौमवासाः, पवित्रकुशहस्तः ब्रह्मध्यानपरः महाप्रस्थानार्थं कृतसंकल्पः विशदपयोदवृन्दनिर्गतरजनीकर इव नगराद्बहिर्निश्चक्राम। कमलविशाललोचना राजलक्ष्मीः करधृतश्वेतसरोजा रामस्य दक्षिणपार्श्वे वामपार्श्वे च अरुणकमलहस्ता महादेवी श्यामा पृथिवी अग्रे च शास्त्रशस्त्रधनूंषि शरनिकराश्च संहारमूर्तिषु धृतशरीरा महाप्रस्थानार्थं प्रचलिताः। ब्राह्मणरूपाश्चत्वारो वेदाः सर्वरक्षिणी गायत्री, ओंकारः वषट्कारश्च निर्गताः रामरूपि विष्णुना सार्धम्। ऋषिमुनयः, भूदेवाः, अन्तः पुरवासिन्यः, दासीभृत्याः, भरतशत्रुघ्नमन्त्रिणश्च सर्वेऽपि राममनुजग्मुः। [illegible] पुरजनपदवासिनः

 

पशुपक्षिणश्च रामेणसार्धं प्रतस्थिरे। रामे प्रस्थिते सर्वमपि नगरं प्राणिशून्यमभूत्।....

रामः योजनार्धमितमार्गमतिक्रम्य नारायणसम्भूतां पूतसलिलां सरयूमगात्। स स्वीयं पवित्रविराट् स्वरूपं स्मृत्वा तस्मिन्नेव स्वरूपे इदं निखिलं जगदवलोकितवान्। तदानीं लोकपितामहो ब्रह्मा सर्वदेवैः परिवृतस्तत्रोपस्थितः। नभोमण्डलं ज्योतिर्मयरूपं धारयामास; सुगन्धिसमीरणः वातुमारब्धः देवाः पुष्पवृष्टिं चक्रिरे। अनन्तशक्तो रामः चरणतलेन केवलमेकवारं संस्पृष्टसरयूजलः जलोपरि परिभ्रमण-परो बभूव। रामानुगामिनः सरयूजले प्रविष्टाः। तदानीं ब्रह्मा अन्तरिक्षतः कृताञ्जलिरब्रवीत्—'हे परमात्मन्! भवान् सदा-नन्दमयः पूर्णपरमेश्वरो विष्णुः। भवान् अवगतस्वकीयाद्वितीयैशतत्वः। हे अखिलजगत्पते! भवान् भक्तवत्सलः भ्रातृभिः सार्धं स्वकीयमूर्तौ प्रविश्य देवान् परिरक्ष। नमो भगवते सहस्रवारम्। हे देवेश! प्रसीद, पुनर्नमस्ते।'

तदानीं रामः पितामहप्रार्थनानुसारं देवानां पुरतः एव ज्योतिर्मयः शंखचक्रादियुक्तः चतुर्भुजमूर्तिरूपोऽजनि। सौमित्रिरपि विष्णुशय्यास्वरूपः अतिविचित्राकारोऽनन्तो भूत्वा रामेण मिलितः। भरतशत्रुघ्नौ चक्रशंखौ अजनिषाताम्। सीता तु पूर्वमेव लक्ष्मी-स्वरूपिणी जाता। पुराणपुरुषः रामरूपी विष्णुः अनुजैः सह पूर्व

शरीरस्य तेजोमयदिव्यमूर्तिं धारयामास ; इन्द्राग्निमरुत्प्रभृतयः देवाः तमेव विष्णुमयदेहं पूजयांचक्रुः ।

तदानीं महात्मा विष्णुर्ब्रह्माणमवोचत्, 'एते सर्वेऽपि धर्मिष्ठा मम भक्ता अनुरक्ताश्च ; किमपरम्? एतेषां मध्ये तिर्यग्जातयोऽपि विद्यन्ते—एते सर्वेऽपि ममानुगमनमकुर्वन् । एते वैकुण्ठसमानं लोकं प्राप्नुवन्तु । ब्रह्मोवाच,—'एते सकलाः सञ्चितपुण्यराशयः भवद्भक्ताः अस्मल्लोकोपरि विराजमानं चित्रभोगायतनं सान्तानिकं लोकं गमिष्यन्ति । हे राम! ये मानवाः मृत्युकाले अज्ञानतोऽपि भवतः पवित्रं नाम संकीर्तयन्ति तेऽपि तं योगलभ्यं लोकं गच्छन्ति ।'

ये सरयूतीरे समागता आसन् ते सर्वेऽपि श्रुतब्रह्मवचनाः हृष्टमानसाः सानन्दाश्रुनयनाः सरयूजले विसृष्टप्राणाः धृतज्योतिर्मयदेहाः अभीष्टलोकं प्रययुः । समागतान् सर्वानपि योग्यलोके स्थापयित्वा लोकपितामहो ब्रह्मा देवैः सह प्रस्थितः ।

## रामायणमाहात्म्यम्

त्रेतायुगे आदिकविः ऋषिः वाल्मीकिः 'रामायणा'ख्यं महाकाव्यं रचयामास । तत्पश्चात् अनेके कवयः रामायणकाव्यरचनापरा अजनिषत ।....

ये जनाः इदं 'दिव्यं रामायणं' भक्तिपूर्वकं पठन्ति शृण्वन्ति वा पद्मपलाशलोचनो रामः तान्प्रति प्रसन्नो भवति । ये मानवाः विवेकवैराग्ययुताः सन्तः पवित्रहृदयेन 'दिव्यरामायणं पठन्ति शृण्वन्ति वा ते नित्यमुक्ताः स्युः । ये आयुर्वृद्धिकरो पुण्यरामायण कथां परिशीलयन्ति ते पुत्रपौत्रैः सह इहामुत्र सुखलाभपरा जायन्ते । प्रातः, मध्याह्ने, अपराह्णे सायाह्ने वा ये सश्रद्धं एतद्रामायणपाठं कुर्युः रामचिन्तनपरा भवेयुश्च तेऽखिलविपद्विमुक्ता भवेयुः । पितामहप्रभृतिप्रधानदेवानां अर्चनवन्दनपरा ये परमपुरुष श्रीराम-चन्द्रप्राप्तिहेतु इदं 'दिव्यरामायणं' सभक्तिकं नित्यं पठन्ति ते श्रीरामचन्द्रसालोक्यं प्राप्नुवन्ति ।

"रामाय रामचन्द्राय रामभद्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥
दिव्यरामायणं पारिजाताख्यसुमनोञ्जलिः
रामचन्द्रपदेभ्योऽयमुपहारः समर्प्यते"

॥ इति दिव्यरामायणं समाप्तम् ॥

॥ हरिः ॐ तत्सत् ॥



# परिशिष्टम्

## (स्वीकृतिः)

एत'द्दिव्यरामायण' प्रणयने निम्नाङ्कितग्रन्थानां सहायं मयाव-लम्बितम् ।

'आदि रामायणम्' (केषांचिन्मतेन वाल्मीकिरचितम्) लघुपरिमाणं संक्षिप्तरामचरितं ख्रिस्तपूर्वपञ्चमशतके रचितम् । इदमेव प्रथमरामायणं संक्षिप्त रामचरितं वा कथामूलकं अल्पविस्तरं साधारणतया अपरिचितगीतिकाव्यरूपेण प्राकृतभाषायां रचितमास्ते । ततः ख्रिस्तपूर्वतृतीयशतके संस्कृतभाषायामनुवादितमभूत् । विदुषां मतेन आदिरामायणमवलम्ब्य परतः कविः वाल्मीकिः तस्य विस्तृत-रामायणं रचितवान् ।

Ref. Father Camail Bulcke वदति— इदमादि रामायणमेव वर्तमानप्रयागविश्वविद्यालयेन (नवरूपेण नूतननाम्ना च) प्रकाशितम् ।

आदिरामायणे रावणमारीचसंवादः, रावणस्य गुप्तचरविभागः, सीतायाः गङ्गायमुनयोः प्रार्थना, रामचन्द्रस्य वाल्मीकि अत्रिशरभङ्ग-सुतीक्ष्णअगस्त्य प्रभृतिऋषीणामाश्रमगमनम् इत्यादि अनेकघटनानां

नास्ति उल्लेखः। अपि च सीताहरणात्पूर्वं रामेण सार्धं पक्षिजातीय जटायोः साक्षात्कारः, किष्किन्धाकाण्डे वर्णितं सीतान्वेषणार्थं चतुर्दिक्षु वानराणां प्रेषणमपि तत्र न दृश्यते।

अनेकपण्डितानां मतेन खिस्तपूर्वचतुर्थशतकपर्यन्तं (अर्थात् 'वाल्मीकिरामायणरचनायाः पूर्वपर्यन्तं) रामचरितकथा भारतवर्षे गाथा किंवदन्तीरूपेण प्रचलिता आसीत्। तदानीं च श्रीरामचन्द्रं अतिमानवरूपेण चित्रितं विधातुं विशेषप्रयत्नः न परिलक्ष्यते। ततः बौद्धजैनग्रन्थादिषु पालीप्राकृतापभ्रंशभाषासु रामचरितं वर्णितमास्ते। पुनः केषांचिन्मतेन खिस्तपूर्वचतुर्थशतके तत्कालीनजनश्रुति वीरगाथाः वा अवलम्ब्य वाल्मीकिरामायणकाव्यं रचितमभूत्। पश्चात् खिस्तपूर्वप्रथमशतके बालकाण्डं रचितम्। उत्तरकाण्डस्य कोऽपि उल्लेखः तदानीमपि नासीत्। एतदखिलविचारतः प्रतिभाति यत् कविः वाल्मीकिः एतत्कालीन एव कोऽपि विशिष्टः कविरासीत्। नासीत्स रामचन्द्रस्य समकालीनः। *

पालिभाषायां रचितं 'दशरथजातकं', बुद्धघोषरचिता 'जातकटीका' अपभ्रंशे प्राकृतभाषायां वा रचितं 'पउम चरिउ'

---

* अस्माभिः एतद्ग्रन्थस्य विभिन्नस्थलटिप्पणीषु दशरथजातकात् अन्य रामायणेभ्यश्च अनेका अंशा उद्धृताः सन्ति।

तथा 'पद्मचरितम्' (जैनरामायणनाम्ना परिचितं) इति ग्रन्थानां प्रकाशनफलस्वरूपं 'रामजीवनकथा' भारतस्य सर्वविभागेषु प्रवेशमलभत; दक्षिणोत्तरभारतयोश्च विभिन्नभाषासु रामचरितं महाकाव्यरूपेण व्यरच्यत। अपभ्रंशभाषायां लिखितं 'पउम चरिउ' ग्रन्थमवलम्ब्य शम्भुदेवः संस्कृतभाषायां रामचरितमूलकं 'पद्मचरितं' काव्यं रचयामास। खिस्तपूर्वप्रथमशताब्दीतः सप्तमशताब्दामध्ये भासकालिदासदिङ्नागभवभूतयः रामचरितोपरि लेखकरूपेण विशेषतः प्रसिद्धा अभूवन्। अस्मिन्नेव क्षेत्रे परतः 'क्षेमेन्द्रः' अभिनन्दश्च इति पण्डितद्वयनामनी अपि विशेषतः उल्लेखनीये।

खिस्तीयनवमशताब्द्यां (मतान्तरे एकादशशतके) तामिल्भाषायां 'कम्बरामायण' ग्रन्थो रचितः। चतुर्दशशतके कृत्तिवासरचितरामायणं षोडशशतके च तुलसीदासीयरामायणाविर्भावफलस्वरूपं उत्तभरते सर्वत्र रामजीवनकथा विशेषतः प्रसृता।

मोक्षमुलर-कीथ् मॅक्डोनेल-विन्टरनित्ज हॉप्किन्सप्रभृतीनां मते वाल्मीकिरामायणस्य बालकाण्डं उत्तरकाण्ड च द्वयमपि प्रक्षिप्तम्। हर्मैन-जेकोबी-एतावपि तदेव समर्थयतः। तयोर्मते समग्रं अहल्योपाख्यानमपि प्रक्षिप्तम्। अनेकपुराणादिभिरपि तन्मतं समर्थ्यते।

'जैन रामायण''* 'बौद्ध रामायणो'परि विशेषतः प्रभावहेतु' इत्यपि अनेकेषां मतम् ।

इन्दोनेशीयातः प्राप्त 'श्रीराम' नामक रामायणमतेन दशरथ नृपस्य द्वे महिष्यौ-विवाहित स्त्रियौ आस्ताम् ।....रामचन्द्रः विवाहा-नन्तरमेव मिथिलातः वनं प्रयातः ।

'तिब्बती रामायणे'—दशरथस्य केवलं पत्नीद्वयस्योल्लेखः विद्यते ।

'दशरथजातकं' 'दशरथकथनं' इति ग्रन्थद्वयस्य टीकानुसारं कैकेय्याः केवलं एकस्य वरस्योल्लेखः । विद्यते स च वरः भरतस्य राज्यसिंहासनलाभः ।

---

* जैनरामायणे प्राप्यते—हनूमान् द्विवारं लङ्कामगात् । एकवारं मक्षिकारूपं गृहीत्वा सीतान्वेषणार्थं ततश्च रामचन्द्र दूतरूपेण ।....लक्ष्मणः वालिना सह युद्धयमानः तं हतवान् ।.... रावणवधमपि लक्ष्मण एवाकरोत् (कैश्चित्पुराणैरपि मतमिदं समर्थ्यते) । एता घटनाः विशेषतो विचारणीयाः—रामायण पट-भूमिकोपरि विशेषालोकपातनसमर्थाः । जैनरामायणं रामचन्द्रं 'अष्टमवासुदेवं लक्ष्मणं च प्रतिवासुदेवं कीर्तयति ।....विद्याधरो हनूमान् आत्मगोपनार्थं वानरवेषेण सीतां द्रष्टुमागतः । तेन स वानर इत्युक्तः ।

सिंहलीरामायणरामकथातः प्राप्यते-रामचन्द्रः शनैः कोप-परिहारार्थं सीतां राजधान्यां स्थापयित्वा एकाकी एव बने गतः। बाल्मीकिरामायणस्य प्रकाशनपाठत्रयं (Recensions) विशेष प्रसिद्धिं प्राप्तम्।

(१) 'दाक्षिणात्यपाठः'—मूलमात्रम् 'मद्रास् लॉ-जर्नल्ल-प्रेस् द्वारा प्रकाशितम्।

(२) 'गौडीयपाठः कालिकाता संस्कृत ग्रन्थमाला-(Series)न्तर्गतम् कालिकातानगरात्प्रकाशितम्।

(३) 'पश्चिमोत्तरीयपाठः' संपादकः विश्वबन्धुः; लाहोर-दयानन्द महाविद्यालयतः प्रकाशितम्।

एतस्मिन्पाठत्रये घटनागता अनेकासंगतयः दृश्यन्ते।

'कृत्तिवासी रामायणम्' कवि 'कृत्तिवास' रचितम् (वङ्ग-पयार छन्दः) अष्टादशशतकम्। यद्यप्ययं ग्रन्थः बाल्मीकिरामायणा-वलम्बनः तथापि कविः पुराणादिभ्यः अनेकघटना संयोज्य एत-द्रामायणकाव्यं अधिकं चित्ताकर्षकं कृतवान्।

'रामचरितमानस' गोस्वामि तुलसीदासकृतम् (वङ्गानुवादः पयारछन्दः वीरेन्द्रलाल भट्टाचार्यः तुलसीदासः स्वरामायणग्रन्थे

सीतायाः अग्निपरीक्षां अतिसंक्षेपेण दत्तवान्। सीतायाः वनवासः ततः तस्याः पातालप्रवेशो वा इत्यादि घटनानामुल्लेखं न कृतवान्। एतस्मात्प्रसिद्धरामायणग्रन्थात अनेकघटना अस्माभिः स्वीकृताः टिप्पणीषु च अनेकशः अङ्किताः।

'श्रीरामरसायनम्' बङ्गपद्यमयम्। श्रीरघुनन्दनगोस्वामि विरचितम्। एतद्ग्रन्थस्य टिप्पणीष्वपि अस्य रामायणस्य अनेकोद्धृतयः स्थानं प्राप्तवत्यः।

'वाल्मीकिरामायण सारानुवादः'—राजशेखरवसुलिखितः।

'गुरुमुखी रामायणम्' भारतसेवासंघीय स्वामिवेदानन्द प्रणीतम्। 'वाल्मीकिरामायण' मूलकोऽयं ग्रन्थः।

'पौराणिकं अभिधानं'—श्रीसुधीरचन्द्रसरकार् प्रणीतम्। एतस्माद् ग्रन्थादस्माभिः बहुमूल्यं सहायं लब्धम्।

'रामायणी कथा'—दिनेशचन्द्रसेन प्रणीता। अयं ग्रन्थोऽनेकमौलिककल्पना युक्तः।

उल्लिखितग्रन्थजं निम्नलिखितप्रसिद्धरामायणेभ्योऽपि उदारं सहायं कृतज्ञतया स्वीकृतमस्माभिः।

'रामचरितम्' (संस्कृतमहाकाव्यम्) नवमशतकेऽभिनन्द-विरचितम्। अस्मादपि ग्रन्थात् टिप्पणीषु स्थाने स्थाने उद्धाराः कृताः।

अस्मिन्रामायणे प्राप्यते—समुद्रलङ्घनसमये, अर्थात् समुद्रमार्गेण लङ्कागमनसमये मध्येमार्गं द्वाररक्षिणी सरमा उन्मुक्तखड्गहस्ता हनूमन्तमवरुध्योक्तवती—'अनेन सुरक्षितमार्गेण सर्वे गन्तुं न शक्नुवन्ति इत्यादि। अधिकतरं अग्रतो गत्वा अन्या द्वाररक्षिणी हनूमन्तमबध्नात्।....इन्द्रजित् लक्ष्मणोपरि ब्रह्मास्त्रं प्रयुयोज।....रामचन्द्र समुद्रोल्लङ्घनसमये विभीषणः पन्थानं दर्शयन् अग्रतश्चलितः।....अस्मिन्रामायणग्रन्थे सीताग्निपरीक्षा वर्णनमपि सर्वेभ्योऽपि भिन्नम्। रावणवधात् विभीषणराज्याभिषेकाच्च परतोऽपि रामचन्द्रः सीतां न दृष्टवान् इति विलोक्य सीता अग्निप्रवेशपूर्वकं प्राणत्यागनिश्चयं विधाय अग्निप्रज्वलनार्थं प्राहरिका आदिदेश। प्रवृत्तिमिमां निशम्य रामचन्द्रः त्वरितं विभीषणं पुरतो विधाय लक्ष्मणस्कन्धोपरि स्थापितहस्तः अशोकवनं गतः दूरतश्च सीतां अग्नौ उत्पतितुमुद्यतामवलोक्य द्रुतपदं अग्रतो गत्वा तामवरुरोध इत्यादि।

'रामायणमञ्जरी' (संस्कृतश्लोकेषु) महाकविक्षेमेन्द्र रचिता—एकादशशतके। बाम्बे निर्णयसागर मुद्रालयेन प्रकाशिता। क्षेमेन्द्रः 'ताडकां' इति वदति।*....अहल्या गौतमाश्रम एव अज्ञातवासपरा

* वाल्मीकि रामायणस्य कस्मिंश्चित्संस्करणेऽपि 'ताटका' इति नाम दृश्यते। कृत्तिवास गोस्वामि तुलसीदास प्रभृतयः अनेके

 


बभूव 'अदृश्या सर्वभूतानाम्' अर्थात् निर्जने...परशुराममिलनं मिथिलायाम् । तयोर्युद्धस्य न कोऽप्युल्लेखः ।

'रामचन्द्रिका'—केशवदास कृता, 'रामायण प्रदीपम्' त्रिपाठीविरचितम्, 'रामचन्द्र विरचितम्', राघवदास विरचितम्, 'अद्भुतरामायणम्'—अनेकेषां मतेन वेदव्यास विरचितम् ।

अस्मिन्रामायणग्रन्थे रामचन्द्रवनवासस्य लङ्कायुद्धस्य च समग्रघटनाः दिनतिथिसमवेतं दर्शिताः सन्ति । केषुचित्पुराणेष्वपि एतादृश दिनतिथ्युल्लेखः प्राप्यते ।

पूर्वोल्लिखितं 'कम्बरामायणम्' (तामिलभाषायां द्वादश सहस्रश्लोकात्मकं नवमे एकादशे वा शतके 'कम्बन्' द्वारा विरचितम्) ग्रन्थेऽत्र ग्रन्थकारः लिखति—'अस्मत्पूर्वं कवित्रयं रामायणं रचयामास' अर्थात् तस्मात्पूर्वं रामायणत्रयं रचितमासीत् । स च चतुर्थरामायणस्य रचयिता । तस्य मते शूर्पणखा रामे विशेषानुरागपरा आसीत्, रामेण च प्रत्याख्याता असफलप्रेम्णः परिशोधार्थं आत्मानं अति कुरूपां विधाय रावणसमीपं रामलक्ष्मणयोर्विरोधे अभियोगपूर्वकं सीताहरणार्थं रावणं प्रोत्साहयामास ।....

---

कवयः तेषां रामायणरचनायां अनेकपुराणेभ्यः—येषु रामचन्द्रचरितवर्णनं दृश्यते—अनेकघटनाः स्वीकुर्वन्ति ।

विभीषणस्य लङ्कात्याग सम्बन्धे लिखितवान्—विभीषणः ज्येष्ठभ्रातरं सिंहासनच्युतं विधातुं षड्यन्त्रं कृतवान्। तज्ज्ञात्वा रावणस्तं भर्त्सनापूर्वकं राजसभातः बहिश्चकार। विभीषणः चतुर्भिः विश्वासपात्रसचिवैः सह लङ्कात्यागपूर्वकं सागरतीरे रामचन्द्रं शरणं गतः इत्यादि।....विभीषणस्य पृथक् मन्त्रिदलमासीत। किन्तु कुम्भकर्णस्य तादृशपृथक्सचिवानां उल्लेखः कुत्रापि न विद्यते। इयं घटना विचारणीया।....'कम्बरामायणे' उत्तरकाण्डस्य नास्ति कोऽप्युल्लेखः।

निम्नलिखितपुराणेभ्यः रामचरितस्य विस्तृतं विवरणं प्राप्यते। सर्वाणि पुराणानि—मूलसंस्कृते—अनेकेषां मतेन वेदव्यास रचितानि। एतेभ्यः सर्वं पुराणेभ्यः अस्माभिः वर्तमानरामायण रचनायां प्रभूतसामग्रीसंग्रहः कृतः। एतद्ग्रन्थस्य टिप्पणीष्वपि अनेकोद्धृतयः अदीयन्त।

(१) 'विष्णुपुराणम्'—परम्परानुसारं कृष्णद्वैपायन वेदव्यास-रचितम्; रचनासमयश्च ऐतिहासिकमतेन खिस्तीय षष्ठसप्तमशताब्द्यौ *।

* रचनाकालात्प्रतिभाति वेदव्यासस्य शिष्या एव वेदव्यासो-पाधिधारिणः आसन्। तथा अष्टादशमहापुराणानि उपपुराणानि च परम्परानुसारं वेदव्यासशिष्यैरेव रचितानि।

(२) 'वायुपुराणम्—' रचयिता स एव—म शताब्दी ।

(३) 'भागवतपुराणम्'—परम्परानुसारं वेदव्यास रचितम् । अस्य मूलग्रन्थरचनाकालविषयेऽपि महान्मतभेदो विद्यते । विदुषां मतेन रचना कालः ९ म शताब्द्याः पूर्वं नास्ति । नापि त्रयोदशशतकात्परः । इदं मत युक्ति संगतम् ।

(४) 'कूर्मपुराणम्'—रचयिता स एव । ११–१२ शताब्द्यौ ।

(५) 'अग्निपुराणम्'—रचयिता स एव । रचनासमयः ११–१२ शताब्द्यौ ।

(६) 'ब्रह्मपुराणम्' ,, ,, ,, १२ २८ शतकम् ।

(७) 'हरिवंशः'—महाभारतपरिशिष्टरूपेण स्वीकृतम् । रचना उत्तर कालीना । तथापि नीलकण्ठसूरेः टीकातः १०-१२ शतकाभ्यां न परः अपि तु पूर्वमेव ।

(८) 'गरुडपुराणम्'—रचयिता स एव । ७ म ८ मे वा शतकम् ।

(९) 'स्कन्दपुराणम्'— ,, ,, पुराणेषु आधुनिकम् ।

(१०) 'ब्रह्मवैवर्तपुराणम्'—,, ,, इदमपि आधुनिकम्। सर्वेभ्योऽप्याधुनिकतममिति भाति। अनेकेषां मतेन १४ श १५ श शतकस्य रचना।

(११) 'महाभारतम्' 'देवीभागवतं च' रचयिता स एव। महाभारतस्य रचनाकालविषये नैकमत्यम्। अस्मिन्महा-ग्रन्थद्वये रामचरितस्य अनेकास्तथ्यसुन्दरघटनाः प्राप्यन्ते। महाभारतवर्णनतः ज्ञायते—तदानीमपि श्रीरामचन्द्रः अवतारत्वेण नातिप्रसिद्धिं प्राप्तः। आदर्शमानवरूपेणैव तस्य मिर्यादा आसीत्।

पूर्वनिर्दिष्टग्रन्थान्वर्जयित्वा निम्नलिखितग्रन्थानामपि सहाय-मस्माभिः कृतज्ञतया स्मर्यते।

'सप्तकाण्डम् वाल्मीकिरामायणम् (सप्तखण्डेषु सम्पूर्णम) मूलं संस्कृतभाषायां रचितम्। तिलकभूषणटीकया सह श्रीनिवास शास्त्रिसम्पादितम्।

'वाल्मीकिरामायणम्' क्षेमराज श्रीकृष्णदास कृतटीकया अनुवादेन च सह प्रकाशितम् (वङ्गानुवादः वसुमती कार्यालयः कालिकाता।)

'योगवासिष्ठरामायणम्' (खण्डद्वयात्मकं सटीकम्)

वसिष्ठदेवविरचितम् (एकादशशतकम्) वासुदेवटीकासहितम् निर्णयसागरमुद्रणालयः बॉम्बे-प्रकाशितम् (वंगानुवादः वसुमती साहित्यमन्दिरं, कालिकाता)

'अध्यात्मरामायणम्'—वेदव्यास रचितम् (संस्कृतम्) १४–१५ शतके प्रथमं प्रकाशितम्। नीलकण्ठ टीका सहितम्। 'क्षेमराज श्रीकृष्णदास' इत्यनेन 'श्रीवेंकटेश्वर स्टीमप्रेसतः प्रकाशितम् (वङ्गानुवादः वङ्गवासी प्रेस मुद्रणालयः कालिकाता)

'अद्भुतरामायणम्' महर्षि वाल्मीकि विरचितम् * त्रयोदशसर्गात्मकः संस्कृतकाव्यग्रन्थः। षोडशशतके प्रथमं प्रकाशितम्।

एतद्रामायणमतेन 'सीता मन्दोदरीकन्या, ऋषिशोणितपानफलतः मन्दोदर्याः गर्भसञ्चारोजातः, तस्मादेव सीताजन्म तदानीं रावणः दिग्विजयप्रसंगेन दूरमासीत्। मन्दोदरी रहसि गर्भपातं कारयित्वा तत्सन्तानं सरस्वतीनदीतीरे त्यक्तवती इत्यादि।... रावणः वर्तमानमध्यप्रदेशासी आसीत...सीतारावणमवधीत्।...

---

* कोऽयं वाल्मीकिः? इति निर्णयापेक्षम्। नायं ध्रुवं 'प्रचेतः पुत्रः वाल्मीकि'। यः वाल्मीकि रामायणस्य रचयिता नायं स वाल्मीकिः।

'आनन्द रामायणम्'—संस्कृतं काव्यम्। अध्यात्मरामायणानन्तरं षोडशशतकाच्च पूर्वं रचितम्। ग्रन्थकारस्य नाम अज्ञातम्।

'महारामायणम्'—संस्कृतकाव्यम, वाल्मीकिरामायणाबलम्बेन रचितम्। ग्रन्थकारतानमद्यावधि असम्भवम्।

'असमीया रामायणम्' मूलवाल्मीकि रामायणाधारेण ख्रिस्तीय १४ शतके 'माधवकन्दली' इत्यनेन रचितम्।

'रामावतार चरितम्'—काश्मीरीय रामायणम्—'कवि प्रकाशराम कुरीगामी' इत्यनेन सप्तदशशतके रचितम्, काश्मीरेचाधिकतरं प्रचलितम्।

'मलयालम् रामायणम्'—'मलयालम्' भाषायां अध्यात्मरामायणानुवादस्वरूपम् प्रथमं रामायणम्। षोडशशतके कवि 'एजुओचरण' इत्यनेन रचितम्। अद्यापि केरलदेशे इदं रामायणं भक्तिपूर्वकं पठयते।

'उडियारामायणम्'—ख्रिस्तीय चतुर्दशशतके रचितम्। अनुवादकलेखकयो र्नामनी अज्ञाते। उडिया भाषायां रामायणस्य विभिन्नाः द्वादशप्रसिद्धानुवादाः प्रचलिताः सन्ति।

'प्राचीन चरित्र कोशः' मराठी भाषायां 'पूना'स्थसिद्धेश्वरशास्त्रिचित्रावः' इत्येन रचितः। अतितथ्यपूर्णो ग्रन्थः।

एतद्वर्जमस्माभिः प्रसिद्धाप्रसिद्धानामनेकरामायणानां' सहायं गृहीतम् । वर्तमानसमये भारतवर्षे न्यूनतमपरिगणनया शताधिक रामायणानि विभिन्नभाषासु प्रसिद्धिं प्राप्तानि ।....रचनासौष्ठवरक्षार्थं अस्मिन्मूलग्रन्थे सर्वत्र प्रत्येकरामायणस्योल्लेखोऽसम्भवः । नापि मूलग्रन्थे विभिन्नग्रन्थानां नामोल्लेखः विदुषां मतेन समीचीनः । एतद्रामायणस्य सर्वा अपि घटनाः कस्मादपि रामायणाद् गृहीताः ; नास्त्यत्र कविकल्पनार्थं स्थानम् ।

